[ द्युगणोनभूदिनैः ग्रहानयनम् ]

द्युगणोनभूदिनघ्नः पठितग्रहपर्य[यो] महीद्युहृतः ।
भगणादि विलोमगतिर्ग्रहोऽनुलोमश्च्युतश्चक्रात् ॥ ३६ ॥

[ भगणोनकुदिनैः ग्रहानयनम् ]

भूदिनैर्व्यभगणोनैर्हते[1] द्युराशौ युगक्षमाद्युहृते ।
भगणादिर्व्यस्तगतिर्भगणाच्छुद्धो ग्रहोऽनुलोमगतिः ॥ ३७ ॥

[ स्वोदय-भोदयज्ञानेन ग्रहानयनम् ]

भावर्तैर्भगणाद्यं ग्रहोदयैश्चान्तरे तयोर्द्युचरः ।
यस्य गतोदयसिद्धं भावर्तफलं तदेव सद्द्युचरः ॥ ३८ ॥

[ स्वोदयभोदयज्ञानेन मन्दशीघ्रग्रहयोरानयनम् ]

उदयसमासाद् ग्रहयोर्भोदयहीनात्तथैतयोरुदयैः ।
भगणाद्यल्पगउदयात्तद्वियुजोऽनल्पगोऽथवाऽन्यः ॥ ३९ ॥

तद्भोदयान्तरं वा ग्रहोदयान्तरयुतोनितं दलितम् ।
खचरौ स्वल्पगहीनं त्वरिततिः शीघ्रगोनमल्पगतिः ॥ ४० ॥

---

Text of Ms. A :

[36] द्युगणोनभूदिनघ्नः पपितग्रहपर्यमहीद्युहृत्ताः
भगणाधि विलोयगतिर्ग्रहोनुलोमच्युतश्चक्रात् ॥ ॥

[37] भूदिनैर्व्पभगणोनैर्हतो द्युराशौ घुगक्षमाद्युहृते ।
भगणादिर्व्यस्तगतिर्भगणाश्छुद्धो ग्रहोनुलोमगतिः ॥ ॥

[38] भावर्तैर्भगणाद्यं ग्रहोदयैश्चांतरे तयोर्द्युचरः
यस्य गतोदयसिद्धं भावर्तफलं तदेव स घुचरः ।

[39] उदयसमासाद्ग्रहयोर्भोदयहीनात्तथैतयोरुदयैः
भगणाद्यल्पगउदयास्तद्वियुजोन्पोल्पगोथवान्पस्प ।

[40] तद्भोदयांतरं वा ग्रहोदयांतर्युतोनितं दलितं
खचरौ स्वल्पविहीनं त्वरितगतिः शीघ्रगौनमल्पगतिः ॥ ॥

---

1. व्यभगणः = व्यस्तगतिग्रहभगणः

[प्रकीर्णविषयः]

[मन्दशीघ्रग्रहयोर्युगोदयानयनम्]

**निजभगणोदययोगो भावर्तास्तद्द्वियोगभगणोनैः ।**
**युक्तैरितराभ्युदयाः मन्दगशीघ्र[ग]ग्रहाभ्युदयैः ॥ ४१ ॥**

[ग्रहसावनदिनगतिः]

**चक्रकलाघ्ना भगणा द्युभिरुदयैर्यस्य भाजितास्तस्य ।**
**एकदिनावच्छिन्ना [गतिर्ग्रहस्यो]दयावधिका ॥ ४२ ॥**

[ज्ञातग्रहादभीष्टग्रहानयने प्रकारान्तरम्]

**अन्यग्रहभगणगुणा इष्टग्रहमण्डलोद्धृताः क्ष्माहाः ।**
**हारोऽन्यगुणाभ्यस्ताद् द्युगणादिष्टग्रहो भवति ॥ ४३ ॥**

[ग्रहानयने विधिविशेषाः]

**द्वयोर्बहूनामथवा यथेच्छया हतोद्धृतानां युतिमन्तरं तथा ।**
**सपर्ययाणां हतमिष्टपर्ययैर्ग्रहस्तथाभूतभसङ्घभाजितम् ॥ ४४ ॥**

**द्व्यादीनामिष्टं तैः पृथगिच्छाघ्नैर्युतोनितं वैक्यम् ।**
**इष्टाहतियुतोनया द्व्यादिग्रहसंख्यया भक्तम् ॥ ४५ ॥**

---

Text of Ms. A :

[41] निजभगणोदययोगो भावर्तास्तिद्वियोगभगणोनैः ।
घुर्कैरितराभ्युदया मंदरुशीघ्रयहाभ्युदयैः ।

[42] चक्रकलाघ्ना गभणा धुभिरुदयैर्यस्य भाजितास्तस्य
एकदिनावश्छिन्नां यश्चैकोदयावयिकाः

[43] अन्यग्रहभगणगुणा इष्टग्रहमंडलोद्धृताः क्वाहाः
हारोन्पगुणाभ्यस्ता द्युगणादिष्टग्रहो भवति ॥ ॥

[44] द्वयोर्वहूनामथवा यथेश्छया हतोद्धृतानां घुतिरंतरं तथा
सपर्यपाणां हतमिष्टपर्पयैर्ग्रहस्तथाभूतभमंगभाजिता ।

[45] द्व्यादोनामिष्टतैः पृथगिश्छाघ्नैयुतोनितं वैक्यं ।
इष्टाभिहतयोनितया द्व्यादिग्रहसंख्यपा भक्तं

Ms. B : 41 d °शीघ्रपहा° 42 c °श्छिन्नां

सर्वधनं तत्तेषां भगणैक्यविभाजितं पृथ[ग्गु]णयेत् ।
[भ]गणैः स्वैः स्वधनानि त्विष्टैरिष्टस्य वा भवति ॥ ४६ ॥

पदस्वमिष्टसङ्गुणैर्धनैर्युतोनमुद्धृतं पृथक् पृथग् निजैर्गुणैर्युतिस्ततो विभाजिता ।
पदप्रमाणरूपकैर्गुणोद्धृतैर्भुवन्युना[१] युतोनितैः पदं भवेत्ततोऽवशेषमानयेत् ॥ ४७ ॥

इच्छाहृतोद्धृतानां ग्रहभगणानां युतिर्विशेषो वा ।
कुदिनान्वितो विहीनः शोध्यग्रहपर्ययैः कुदिनभक्तः ॥ ४८ ॥
शेषवियुग्[युक्कुदि]नात् स्वमृणं चेदन्यपर्ययैर्लब्धम् ।
इष्टभगणैर्युतोनात् कुदिनहृतात् स्युरन्यभगणास्ते ॥ ४९ ॥

[चन्द्रदिनान्ते ग्रहज्ञानम्]

गतचन्द्रवासरघ्ना ग्रहभगणा युगशशाङ्कदिनभक्ताः ।
भगणाविद्युचरः स्याद्रजनीकरवासरावधिकः ॥ ५० ॥

---

Text of Ms. A :

[46] त्सर्वधनं तत्तेषां भगणैक्यविभाजितं पृथ · णयेत्
· गणैः स्वैस्वयनानित्विष्टैरिष्टस्य वा भवति ।

[47] पदस्वमिष्टसंगुणैर्यनैर्युतोनमुद्धृतं । पृथक्पृथं निजैर्गुणैर्युतिस्ततो विभाजिता ।
पदप्रमाणरूपकैर्गुणौदृतैर्भुवायुतं । युतोनितैः पदं भवेत्ततो विशेषमानयेत् ॥ ॥

[48] इच्छाहृतोदृतानां ग्रहभगणानां युधि विसेषो वा
कुदिनान्वितो विहानः शोध्यग्रहपर्ययैः कुदिनभक्तः ॥

[49] शेषविधुग्मात्स्वमृणं वेदन्पयर्घ्रयैर्लव्दं ।
इष्टभगणैर्युतोना इष्टघ्नहृतास्स्युरन्यभगणोस्ते ॥ ॥

[50] गतचन्द्रवासरघ्ना ग्रहभगणयुगशशांकदिनविभक्ताः
भगणादिद्युचरस्पाद्रजनीकरवासरावधिकः ॥ ॥

Ms. B : 46 c °स्स्वयना°

[रविदिनान्ते ग्रहज्ञानम्]

**सौरदिनैर्वा गुणिता ग्रहभगणा भाजिता युगार्कदिनैः ।**
**भगणादिफलं द्युचरो दिनकरगतवासरस्यान्ते ॥ ५१ ॥**

[सुरासुरार्कोदयास्तकालिकग्रहज्ञानम्]

**यातार्कब्दाभ्यस्ता द्युचरभसङ्घा युगार्कवर्षहृताः ।**
**मण्डलपूर्वः खचरः सुरासुरार्कोदयास्तसमये स्यात् ॥ ५२ ॥**

[गुरुवर्षमुखे ब्रह्मदिवसादौ कल्पादौ कलियुगादौ च ग्रहाः]

**गुरुगतवर्षैरेवं गुरुवर्षमुखे ग्रहाः कदिवसादौ ।**
**शीघ्रा मृदूच्चपाता ग्रहाश्च मीनाजसन्धिस्थाः ॥ ५३ ॥**
**खकृत[४०]लब्धयुतभगणाः कल्पादौ ते गृहादि विश्वरसाः[६१३] ।**
**भगणघ्नाः खेभाम्बुधिकृता[४४८०]प्तलिप्तायुताः कलियुगादौ ॥ ५४ ॥**

[त्रैराशिकगणितविधानं गुणहारयोरपवर्तनञ्च]

**त्रैराशिकेन सर्वं ज्ञाताज्ज्ञेयं प्रसाधयेत् बहुधा ।**
**अपवर्तितैर्लघु स्याद् गुणहारैरेतदेव पूर्वोक्तम् ॥ ५५ ॥**

---

Text of Ms. A :

[51] सौरदिनैर्वा गुणिता ग्रहगणभाजिता युगार्कदिनैः ।
भगणादिफलं द्युवरो दिनकरगतवासरस्पांते ॥

[52] याताब्दार्काभ्यस्ता द्युचरभसंघायुगार्कवर्ष्टहृताः ।
मंडलपूर्वः खचरस्सुरासुरार्कोदयास्तसमये स्पात् ।

[53] गुरुगतवर्षैनवं गुरुवर्ष्टमुखे ग्रहः कदिवसादौं ।
साध्या मृदूच्चपाता ग्रहाश्च मीनाजसंधिस्छाः ॥ ॥

[54] स्वखहृतलब्दयुतभगणाः कल्पादौ ते ग्रहादि विश्वरसाः
भगणघ्नाः खेभाम्वुधिकृताप्तलिप्तायुताः कलियुगादौ ।

[55] त्रैराशिकेन सर्वं ज्ञाताज्ज्ञेयं प्रसाधयेद्बहुता
अपवर्त्तितैर्लघुस्पाद् गुणकारैरेतदेव पूर्वोक्तं ॥ ॥

Ms. B : 51 c द्युचरो 55 b °द्बहुना

अन्योन्यभक्तशिष्ट्या तावपवर्त्यौ लघू दृढकसंज्ञौ ।

[कलियुगादौ ग्रहाणां क्षेपाः]

कल्यादाविन्दूच्चे त्रि[३]भं क्षिपेत् षड्[६]गृहाणि शशिपाते ॥ ५६ ॥
द्वौ [२] धृति[१८]रेकशरा[५१] नगरामाः [३७] क्षेप्या गृहादि रवितुङ्गे ।
वेदा[४] धियः[८] खबाणाः[५०] खशराः[५०] क्षेप्या गृहादि कुजमन्दे ॥ ५७ ॥
मुनयो[७]ऽष्टयो[१६] द्विवेदाः[४२] कृतेषवो[५४] भादि चन्द्रजस्योच्चे ।
विषया [५] द्विदृशो[२२]ऽष्टकृताः[४८] कुगुणा [३१] राश्यादि जीवोच्चे ॥ ५८ ॥
यमलौ [२] नखा[२०]स्त्रयो[३] रसयमला [२६] योज्याः सितस्य भाद्युच्चे ।
मुनयो[७]ऽक्षदृशो[२५]ऽङ्गशरा[५६] [स्त्रिशरा ५३] देया शनेर्गृहाद्युच्चे ॥ ५९ ॥
ककुभो [१०] नखा [२०] दिशो[१०]ऽर्का[१२] राश्याद्यसृजः प्रयोजयेत्पाते ।
रुद्रा [११] दिशो[१०]ऽङ्कचन्द्राः[१९] कृतेषवो [५४] भादि बुधपाते ॥ ६० ॥
नव [९] ककुभो [१०] दश [१०] शक्रा [१४] गुरुपाते भादि संयोज्यम् ।
दश [१०] खं [०] सप्ता[७]स्त्यष्टिः [१७] सितपाते देयमृक्षादि ॥ ६१ ॥

---

Text of Ms. A :

[56] अन्योन्यभक्तशिष्ट्या तावपवर्त्यौ लघू दृढकसंज्ञौ ।
कल्पादाविंदूच्चे त्रिभे क्षिपे षड्गृहाणि शशिपाते ।
[57] द्वौ धृतिरेकशरा नगरामाः क्षेप्पा ग्रहादि रवितुंगे ।
वेदाधियः खवाणाः खशराः क्षेप्पा ग्रहादि कुजमंद ।
[58] मुनयोष्टयो द्विवेदाः कृतेषवो भादि चंद्रजस्योच्चे ।
विषया द्विदृशोष्टकृताः कुगुणा राश्यादि जीवोच्चे ।
[59] यमलौ नखास्त्रयो रसपमला योज्यास्मितस्य भाद्युच्चे ।
मुनयोक्षदिशोंगशरा देया शनेर्गृहाद्युच्चे ।
[60] ककुभो नखा दिशोर्का राश्यायसृजः प्रयोजयेत्पाते
रुद्रा दिशोंकचन्द्राः कृतेषवो मादि बुधपाते ॥ ॥
[61] चककृतो दशशक्रा गुरुपाते भादि संयोज्यं ।
दश खं संप्तत्पष्टिस्सितपाते देयमृक्षादि ॥ ॥

अष्टौ [८] नखाः [२०] [क्षितिः १] खं [०] शनिपाते भादि संयोज्यम् ।
कायूद्भूवकुदिनाप्ते कलिगतदिनपर्ययाहृते ते स्युः ॥ ६२ ॥

सर्वतोभद्रश्चतुर्थः ।

---

Text of Ms. A :

[62] अष्टा तखाः खं वानिपाते मादि संयोज्यं ।
काधुर्भवकुदिनाप्तृं कलिगतदिनपर्यपाहृते स्ते म्युः ॥ ॥

सर्वतोभद्रश्चतुर्थः ॥ ॥

Ms. B : 62 d स्युः

## 5. प्रत्यब्दादिशुद्धिविधिः

[ प्रत्यब्दशुद्धिविधौ अध्यहसावनावमदिवससाधनम् ]

वेदाग्नित्रिभुजं[२३३४]स्त्रिभूगुणबिलै[९३१३]र्भूपक्षखाङ्काश्विभिः[२९०२१]
याताब्दा गुणिताः क्रमादपहृताः खाभ्राभ्रषट्पु[ष्क]रैः [३६०००] ।
लब्धान्यध्यहवासरावमगणा याताः खखाङ्कैः [६००] पुनः
शेषेभ्यो घटिकाः पलानि दशभि[१०]स्तच्छेषकेभ्योऽपि हि ॥ १ ॥

[अध्यहानयने विशेषः]

वाऽङ्केभाग्नि[३८९]समाहता अधिनिशाः षड्भिः सहस्रै[६०००]र्हृताः
विश्वे [१३] वाऽधिनिशाः खशून्ययमलै[२००]रब्दैर्दिनांशो[$\frac{1}{३६}$]निताः ।
वर्षैर्वा गजखेन्दु[१०८]भिस्त्वधिनिशाः सप्ता[७]क्षभूमिः [१५] पलं
वाऽष्टचै[१६]कोऽधिकवासरः क्षितिधरा [७] नाड्योऽब्दकैः खेन्द्रियैः [५०] ॥ २ ॥

---

Text of Ms. A :

[1] वोदाग्नित्रिभुणैस्त्रिभूगुणविलैर्भूपक्षखांकाश्विभिः ॥ ॥
याताब्दा गुणिताः क्रमादपहृताः खाभ्राभ्रषद्यु ' रैः ।
लब्दात्पध्यहवासरावमगणा यात्ताः खखांकैः पुनः
शेषेभ्यो घटिका फलानि दशनिस्तश्छेषकेभ्योपिहि ॥ ॥

[2] वांकेमाग्निसमाहृता रविनिशा षड्भिस्सहस्रैर्मता ।
विश्वे वाधिनिशाः खशून्ययमलैरब्दैर्दिनाद्यूनिताः ।
वष्टैर्वागजखेन्दुभिस्त्वधिनिथास्सप्ताक्षभूमिः पलं ।
वावाष्टचैकोधिकवासरः क्षित्तिधरा नाद्योब्दकैः खेन्द्रियैः ॥

Ms. B ; 1 c लब्दान्पध्य°

[सावनदिवसानयने विशेषः]

**वाताङ्का [९७] दिवसाः शरागदहनै[३७५]रब्दैः पलं खेन्दु[१०]भिः**
**खार्कै[१२०]र्वा कुगुणा [३१] निशाः खशशि[१०]भिः विश्वे [१३] पलान्यब्दकैः ।**
**वाऽब्धीन्द्रै[१४४]र्नगपुं [३७] दिनानि खनखै[२००]रब्दैः कुदृङ्[२१]नाडिकाः**
**तत्त्वा[२५]न्यङ्कबिलै[९६]र्दिनानि कुगुणा[३१] हानिः पलानां शरैः[५] ॥ ३ ॥**

[अवमदिवसानयने विशेषः]

**षट्कृत्या[३६]ऽङ्कभुजा[२९]वमाः खखभुजै[२००]र्नाड्यो नगा [७] वत्सरैः**
**अङ्काङ्कै[९६]र्नगपर्वताः [७७] खखगुणै [३००] रामाग[७३]नाड्योऽथवा ।**
**वाऽक्षै[५]रब्ध्य[४]वमाः कुदस्त्रयमला [२२१] दिग्भि[१०]र्विनाड्योऽब्दकैः**
**दिग्भि[१०]र्वाक्ककुभः[१०१] पलानि कुजिनाः[२४१] खाभ्राग्नि[३००]भिर्वाऽवमाः ॥ ४ ॥**

[अध्यहसावनावमदिवसेषु सम्बन्धः]

**याताब्दराशावधिकाहयुक्ते दिनक्षयोने दिवसा दिनैर्वा ।**
**हीनेऽवमाः स्युर्दिवसावमानां योगोऽब्दहीनोऽधिकवासरा वा ॥ ५ ॥**

---

Text of Ms. A :

[3] वागंका दिवसा शरागदहनैरब्दैः पलं वेन्दुमिः ।
खार्वैर्वा कुगुणा निशाः खशशिभिः विश्वो पलात्पब्दकैः
वाब्दांन्द्रौर्नगपुंदिनानि खानरब्दैः कुदृ नाडिका
स्तत्त्वान्यंगविलैर्दिनानि कुगुणा हानिः पलेभ्यः शरैः ॥ ॥

[4] षट्कृत्यांकभुजावमाः खखनुजैर्नाद्यो तगा वत्सरेः
अंगांकौ नगपर्वताः खखगुणै रामागनाद्योथवा ।
बाक्षैरब्ध्यवमाः कुदषयमला दिग्भिर्विनाड्योब्दकै
दिग्भिर्वाक्वकुभः पलानि कुलानि कुजिताः खाभ्राग्निभिर्वाविमाः ॥ ॥

[5] पाताब्दिराशावधिकाहयुक्ते दिनक्षयोने दिवसा दिनैर्वा ।
हीनेवमास्स्युर्दिवसावमाना योगाब्दहीतोधिकवासराव ॥ ॥

Ms. B : 3 a °रब्दैः 3 c वाब्दां° 4 a वत्सरैः 5 d °हीनोधिकवासरावा

[शुद्धिसाधन-विधयः]

हीनरात्रिदिनसंयुतिर्युता दिग्[१०]घ्नवत्सरगणेन भाजिता ।
खाग्नि[३०]भिस्त्वधिकमासकाः फलं शुद्धिरत्र विकलं दिनादिकम् ॥ ६ ॥

अध्यहानि शिव[११]निघ्नहायनैरन्वितानि खगुणो[३०]द्धृतानि वा ।
लभ्यतेऽधिकगणोऽवशिष्टकं शुद्धिसंज्ञमथवा दिनादिकम् ॥ ७ ॥

गोमतित्रिरसषड्[६६३८९]ढताः समाः खाभ्रखाभ्रधृति[१८००००]भाजिताः फलम् ।
मासकाद्यधिकसंज्ञकं तथा शुद्धिसंज्ञमथवा दिनादिकम् ॥ ८ ॥

रुद्र[११]निघ्ननिजहारसंयुतैरध्यहानि गुणकैः प्रसाधयेत् ।
तानि खाग्नि[३०]भजिताधिमासका वाऽवशिष्टदिवसा विशुद्धयः ॥ ९ ॥

[वर्षाधिपसाधन-विधयः]

वत्सरान्वितदिनेषु सप्तभिर्भक्तशेषमिह वत्सराधिपः ।
गो[९]घ्नवत्सरगणेऽवमोनिते साध्यहेऽग[७]हृतशेषमब्दपः ॥ १० ॥

---

Text of Ms. A :

[6] ह्रीनेरात्रिदिनसंयुतिर्युता दिग्घ्नवत्सरगणेन भाजिता ।
खाग्निभिस्त्विधिकमासिकाः फलां शुद्धिरत्र बिकलं दिनादिकं ॥ ॥

[7] अध्यहानि शिवनिघ्नहायनैरन्वितानि खदिमोद्धृतानि वा ।
लभ्यतेधिकगणोवशिष्टकं शुद्धिभद्ररथवा दिनादि यत् ॥ ॥

[8] गोमतित्रिस्स्कषट्कृवास्समाः खाघ्रखाभ्रधृतिभाजिताः फलं ।
मासकाद्यधिकसंज्ञकं तथा शुद्धिसंजमथावादितादियेकम् ॥ ॥

[9] रुद्रनिघ्ननिजहारसंयुतैरध्यहानि गुणकैः प्रसाधयेत् ।
भानि खाग्निभजिताधिमासका वावशिष्टदिवसा विशुद्धयः ॥

[10] वत्सरान्बितदिनेषु सप्तभिर्भक्तशेषमिह वत्सराधियः
गोघ्नवत्सरगणैवमोनिते । साध्यहेखहृतशेषमव्दयै : ।

Ms. B : 6 b दिग्घ्न° 8 a °त्रिरस्कषट्कृता° 10 b °वत्सराधिपः 10 d °मब्दपः

पञ्चपञ्चकहतिर्युतावमैर्वर्जिताऽधिकदिनैर्हृता नगैः[७] ।
शेषसप्त[७]विवरं समाधिपो वा दिनाधिपसमाधिपः स्फुटः ॥ ११ ॥

द्वि[२]निघ्नवासरनिकरेऽधिकोनिते युतेऽथवाऽवमनिकरेण वर्षपः ।
स्वभागहारयुतगुणैर्यथोक्तवद् दिनादि तेऽस्वग[७]हृतशेषमब्दपः ॥ १२ ॥

[चान्द्रवर्षाधिपसाधन-विधयः]

इनाब्दपोऽयमभिहितोऽधुना विधोः समापतिर्मधुसितपूर्ववासरे ।
समागणाद्दिननिकरं यथोक्तवत् प्रसाध्य वा शशिगतवत्सराधिपः ॥ १३ ॥

वाऽवमद्विकगतान्तराधिकं प्रोज्झ्य वर्षशर[५]घाततोऽब्दपः ।
शुद्धिहीनदिवसेषु वाब्दपो हीनरात्रघटिकाब्दसंयुतिः ॥ १४ ॥

एवमर्कभगणाब्दप्रेरितैरैन्दवस्य करणैः प्रसाधनम् ॥ १५ ॥

[सौरचान्द्रवर्षाधिपयोः परस्परानयनम्]

हीनाहनाडीवियुतो विशुद्ध्या युक्तः शशाङ्काब्दपतिस्तु सौरः ।
सौरस्तु नाडीसहितोऽथवा तच्छुद्ध्या विहीनो विधुवर्षपः स्यात् ॥ १६ ॥

---

Text of Ms. A :

[11] पंचपंचकहतिर्युतावमैर्वर्जिताधिकनगैर्हृता नगैः ।
शेषसप्तविवरं समाधिपो वाधिनाधिपसमातिकस्स्फुटः ।

[12] द्विनिघ्नवासरनिकरेधिकोनिते युतेथवावमनिकरेण वर्षपः
स्वभागहारयुतगुणैर्यथोक्तवद्दिनादि तेस्वगहृतशेषमब्दपः ।

[13] इनाब्दपोयमभिहितोधुना विधोः समापतिर्मधुसितपूर्ववासरे
समागणाद्दिननिकरं यथोक्तवत्प्रसाध्य चेहृगदिगतववत्समाधिपः ।

[14] वावमद्विकहृतांतराधिकं प्रोज्त्य वर्ष्टशरघाततोव्दयः
शुद्धिहीनदिवसेषु वाब्दपो हीनरात्रघटिकाव्दसंयुतः

[15] एवमर्कभगणाब्दपेरितैरेन्दवस्प करणैः प्रसाधनं ॥ ॥

[16] हीनांहनाडीवियुजाबियुजाविशुद्धा । यूनः शशाकाब्दपतिस्तु सोरः ।
स नाडियुक्तोथवा शुद्धचा विहीतो विधुनाथवर्षयः ।

Ms. B : 13 a इनाब्दपो° 14 b प्रोज्ज्य°, तोब्दपः d °घटिकाब्द°
16 a हीनांहनाडी वियुजा विशुद्ध

[सौरवर्षान्ते ग्रहसाधनम्]

प्राग्वद्द्विवर्षैः सिद्धिः खेचराणां सूर्या[१२]हतशुद्धिर्भोगादिः शशी वा ॥ १७ ॥

याताब्दराशिं दिवसस्य भर्तुस्त्रिष्ठं निहन्याद् द्विगुणेन्दु[१३२]भागैः।

अङ्गाब्धि[४६]भिर्मध्यममब्धिपुं[३४]भिरन्त्यं वियद्वायु[५०]लवैः शशाङ्कः ॥ १८ ॥

चंद्रोच्चपातावथ वर्षराशिं

व्योमाश्रमै[४०]र्गोरजनीकरै[१९]श्च।

शीतांशुवेदैः[४१] कुभुजैः [२१] कुचन्द्रैः [११]

पयोधिरामैः [३४] खखपक्ष[२००]भागैः ॥ १९ ॥

भौमः कुनन्देन्दु[१९१]भिरिन्दुजस्य शीघ्रं तथा वेदशरैः [५४] सुरेज्यः।

व्योमाग्नि[३०]भिस्तत्त्वयमैः [२२५] सितस्य शीघ्रं शनिर्भानु[१२]भिरब्दराशिम् ॥ २० ॥

मध्यं जिनैः [२४] पञ्चकृतैः [४५] कुनेत्रैः [२१]

रुद्रैः [११] दिनेशैः[१२] कलिकाभिरन्त्यम्।

नगैः [७] सुरेशै[१४]र्विशिखैः [५] कृताब्धि[४४]-

भिर्वा ग्रहा द्व्यब्धि[४२]भिरिन्दुवच्च ॥ २१ ॥

---

Text of Ms. A :

[17] प्रग्वद्द्विबर्षैस्सिद्धं खेचराणां। सूर्याहतशुद्धिभोगादि शशी वा।

[18] याताब्दराशिर्दिवस्प भर्तुस्त्रिष्टं निहन्याद् द्विगुणेन्दुभागैः। ॥
अंगादिभिर्मध्यमब्दिपुंभिरत्यं विपद्वापुलवैः शशांकः

[19] चंद्रोच्चपातावथ वर्षराशिव्योमाश्रमगे रिजनीकरैश्च ॥ ॥
शीताशुवेदैः भुजैः कुंचंद्रैः पयोधिरामैः खखपक्षभागैः

[20] भौमः कुनंदेन्दुभिरिन्दुजस्प शीघ्रं तथावेदशरैस्सुरेज्पः
व्योभाग्रिभिस्तत्त्वपमैस्सितस्प शीघ्रं शानिर्भानुभिरब्दुराशि ॥ ॥

[21] मध्यजिनैः पक्षकृतैः कुनेत्रै रुद्रैर्दिनेशैः कलिकाभिरंत्यं।
नगैस्सुरेशैर्विशिखैः कृताब्दिभावेवं ग्रहाब्दाब्दिभिरिंदुबंद्यः ॥ ॥

Ms. B : 17 a °स्सिद्धं 18 d रंत्यं 19 b °माश्रमगैरिजनी° 20 d °रब्दुराशि
21 c कृताब्दि 21 d °भिावेवं

[रविज्ञानेन ग्रहसाधनम्]

नवनागगुणाङ्गाङ्गैः[ ६६३८९ ]र्हताद्धृत्याऽयुतघ्नया[ १८ × १०००० ] ।
हृताद्भानोर्युतः सूर्यस्त्रयोदश[ १३ ]गुणः शशी ॥ २२ ॥
सप्तव्योमाक्षिवेदाग्नि[ ३४२०७ ]हतात्सूर्यात् फलं क्षिपेत् ।
तच्छून्यखखखाष्टाभ्रभू[ १०८०००० ]भिर्भूजो रवेर्दले ॥ २३ ॥
सुरपञ्चनख[ २०५३३ ]हतेनात् खखाभ्रपञ्चाग्निशशि[ १३५००० ]भिराप्तं यत् ।
क्षेप्यं वेद[ ४ ]हतेने बुधशीघ्रं वा भवत्येवम् ॥ २४ ॥
[शिवभुज२११गुणितात् सूर्यात् खखाभ्रषड्घन[ २१६००० ]हृतादवाप्तं यत् ।
रविसूर्यां१२शे योज्यं देवगुरुर्वा भवत्येवम् ॥ २५ ॥]
शिवतत्त्वगुण[ ३२५११ ]हतेनादयुतद्वय[ २०००० ]भाजितादवाप्तं यत् ।
तद्भृगुपुत्रचलोच्चं भवतीह मुनीरितं वापि ॥ २६ ॥
रविखाग्न्यं[शे][ $\frac{१}{३०}$ ] योज्यं लब्धं नगखैक[ १०७ ]ताडितात् सूर्यात् ।
खचतुष्टयाष्टशशि[ १८०००० ]भिर्वा रविसूनुर्भवत्येवम् ॥ २७ ॥

---

Text of Ms. A :

[22] नवनागगुणांगौर्हतोद्धृत्या ध्रुवघ्नया
　　हताद्दानोयुतस्सूर्यस्त्रयोदशगुणः शशी ॥ ॥
[23] सप्तव्योमाक्षिवेदाग्निहतात्सूर्यात्फलं क्षिपेत् ।
　　त्तश्छून्याखखखाष्टाभ्रभूदिर्भूजो खेर्दले ॥ ॥
[24] सुरपंचनखहताद्यत्खखाभ्रपंचाग्निशशिभिराप्तं त
　　क्षेप्यं वेदहतेने वुधश्रीघ्रं वा भवत्येवं ॥ ॥
[25] Missing
[26] शिवतत्वगुणहतेनादयुतद्वयभाजितादाप्तं यत्
　　तद्भृगुपुत्रचलोच्चं भवतीह मुनीरितं वापि ॥ ॥
[27] रविखाग्यच योज्यं लब्दं नगखैकताडितात्सूर्यात् ।
　　खचतुष्टयाष्टशशिभिर्वा रविसूनुर्भवत्पेवं ।

Ms. B : 26 d वाप्पि　　27 a खाग्य्रं

रविनवभागे [ $\frac{1}{9}$ ] योज्यं नगाग्निसप्ताक्षि[२७३७]ताडिताद् भानोः ।
खचतुष्टयवेदेन्द्रै[१४४००००]र्हिमगूच्चं वा भवत्येवम् ॥ २८ ॥
सवितृनखांशे[ $\frac{1}{20}$ ] योज्यं नगैकचन्द्राष्ट[८११७]ताडितात् सूर्यात् ।
अयुतघ्नरसैकभुजैः [२१६००००] शशधरपातोऽथवा लब्धम् ॥ २९ ॥

[लब्धहर्गणसाधनम्]

चैत्रादिस्तिथिनिकरः शुद्धिविहीनः पृथग्गुणो रुद्रैः [११] ।
अवमघटीभ्यः षष्ट्या [६०] लब्धयुतस्त्रिखनग[७०३]हृताभ्यः ॥ ३० ॥
त्रिखनग[७०३]हृतावमोनो द्युगणोऽब्दावमघटीसमेतः स्यात् ।

मध्वाद्यास्तिथयो वा सावमनाड्योऽथ शुद्ध्यूनाः ॥ ३१ ॥
पृथगज[११]निघ्नास्तिथि[१५]भिर्हीनघटीभ्यस्त्रिसप्तकु[१७३]हृताभ्यः ।
लब्धयुतास्त्रिखमुनि[७०३]भिः लब्धावमवर्जितो द्युगणः ॥ ३२ ॥

---

Text of Ms. A :

[28] रविनवभागे योज्यं नगाक्षिसप्ताक्षिताडिताद्भानोः
खचतुष्टयवेदेन्दैहिमगूच्चं वा भवत्पेवं ॥ ॥
[29] सवितृनखांशे योज्यं गैनकचंद्राष्टताडितात्स्यर्ति ।
अयुतरसैकभुजैः शशिधरपातोथवा लब्दं ।
[30] चैत्रादिस्तिथिनिकरः शुद्धिविहीनः पृथग्गुणौरुद्रैः
अवमघटीभ्यः षष्टचा लृब्दयुतस्त्रिखनगहृताभ्पः ।
[31] त्रिखनगहृतावमोनो द्युगणोव्दावमधटीसमेतस्स्पात्
मध्वाद्यास्तिथयो वा सावमनाडचोथ शुद्धच्ूनाः ।
[32] पृथगजनिघ्नास्तिथिभिहीनघटीभ्यस्त्रिसप्तकुतहृताभ्पः
लव्दयुतास्त्रिखमुनिभिः लव्दावमवर्जितो द्युगणः ।

Ms. B ; 29 b ताडिताद्भानोः खचतुष्टयवेदेन्द्रैहित्सूर्यात् In ms. A the portion between ता and त्सूर्यात् is deleted by covering it with yellow paste.

शुद्धचूना वा तिथयश्चैत्रात्त्रिरधस्त्रिखस्वरै[७०३]र्भक्ताः ।
फलयुङ्मध्यो युक्तो रसकु[१६]हतावमघटीभ्यः तिथ्या[१५]प्त्या ॥ ३३ ॥
अष्टकृति[६४]हृदवमोनोऽन्योऽवमनाडिकायुतो द्युगणः ।

सावमनाड्यस्तिथयश्चैत्राच्छुद्धचूनितास्त्रिरधः ॥ ३४ ॥
त्रिखनग[७०३]हृत्फलसहितो मध्यः कुभुजा[२१]हतावमघटीभ्यः ।
खभुजा[२०]प्तयुगब्धिरसै[६४]र्लब्धावमवर्जितो द्युगणः ॥ ३५ ॥

शुद्धचूनस्तिथिनिकरश्चैत्राद्द्विष्ठो दिगा[१०]हतो युक्तः ।
विश्वेक्षणा[२१३]हतावमघटिकाभ्यः खभुज[२०]लब्धाभ्यः ॥ ३६ ॥
गोत्रिरस[६३९]हृदवमोनो दिननिकरोऽवमघटीसमेतो वा ।

वाऽवमघटिकायुक्तस्तिथि[नि]करः शुद्धिविहीनोऽधः ॥ ३७ ॥
दिग्घ्नोऽवमघटिकाभ्यः खरसा[६०]प्तयुतोऽङ्कभुजरस[६२९]हृताभ्यः ।
नवगुणरसै[६३९]र्विभक्तः फलावमो[नो] भवेद्द्युगणः ॥ ३८ ॥

---

Text of Ms. A :

[33] शुद्धचूना वा तिथपश्चैत्रात्त्रिरधस्त्रिखस्वरैर्भक्ताः
मध्यफलपुंमध्यो युक्तोनसक्तहतावमघटीम्पः । तिष्पाप्त्या
[34] ष्टकृतिहृदवमौनोन्पोवमनाडिकायुतो द्युगणः ।
स्पवमनाड्यस्तिथयः चैत्राश्छुद्ध्यनितास्त्रिरधः ।
[35] त्रिखनगहृत्फलसहितो मध्पः कुभुजहतावमघटीभ्पः
खभुजाप्तयुगब्दिरसै लब्दावमवर्जितो द्युगणः ॥ ॥
[36] शुद्धचूनस्तिथिनिकरश्चैत्राद्विष्टो दिनाहतो घुक्कः
विश्वक्षणाहतावमघटिकात्पः खभुजलब्दा ॥ ॥
[37] गोत्रिरसहृदवमोनो दिननिकरोवमघटीसमेतो वा ।
वावनघटिकायुत्कस्तिथिकरः शुद्धिहीनोधः ॥ ॥
[38] दिग्घोवमघटिकाभ्पः खरसाप्तयुतोकभुजरसहताभ्पः
नवगुणरसैर्विभक्तः फलावमो भवेद्द्युगणः

Ms. B : 38 b °युतोंक°

[सौरमासान्ते ग्रहसाधनम्]

कुकृतै[४१]रंशैश्चन्द्रो भौमस्तिथि[१५]भिर्बुधस्य शीघ्रोच्चम् ।
वेदेनै[१२४]र्देवगुरुर्द्वाभ्यां [२] शीघ्रं सितस्य वसुवेदैः [४८] ॥ ३९ ॥
शशिना [१] शनिर्निहन्याद्रामै[३]र्मृगलाञ्छनस्य मन्दोच्चम् ।
शशिनः पातोऽथ भुवा[१] रविमासगणं त्रिधास्थितं मध्यम् ॥ ४० ॥
रामैः [३] पर्वतविशिखै[५७]रमरैः [३३] कुगुणैः[३१] शराब्धिभिः [४५] शशिना [१] ।
रामभुजै [२३] रसरामैः [३६] कलिकाभिरथान्तराशिमपि ॥ ४१ ॥
रसराममूर्च्छनाभिः [२१३६] वसुनेत्रै [२८] रसशराष्टकुभिः [१८५६] ।
खाक्ष्यष्टकुभी [१८२०] रसनगरामभुजै[२३७६]र्वसुरसैणधरैः[१६८] ॥ ४२ ॥
शिवनभइन्दुभि[१०११]रब्धित्र्यष्टकुभिः [१८३४] खखजिनांशै[२४००]र्वा ।
रविमासान्ते मध्या मासा राशीनमध्यः स्यात् ॥ ४३ ॥

---

Text of Ms A :

[39] कुकृतैश्चंद्रो भौमस्तिथिभिर्बुधस्य शीघ्रोच्चं ।
पेदेतैन्दवगुरुर्द्वाभ्यां शीघ्रं वुधस्य वसुवेदैः ॥ ॥
[40] शशिनाशनेर्निहन्याद्रामैर्मृगलांछतोचस्य
शशिनः पातो भूजैरसुरामै म्पा रविमासगुणं त्रिधास्छितं मध्यं ।
[41] रामैः पर्वतविशिखैरमरैः कुगणैः शराब्दिभिः शशिना
रामभुजैरसुरामैः कलिकाभिरथांतराशिमपि ।
[42] रसराममूर्छताभिर्वृसुनेत्रैरसशराष्टकुभिः
खाक्षाष्टकुभीरसनगरामभुजैर्वसुरसैणधरैः ॥
[43] शिवनभइन्दुभिरब्दित्याष्टभिः खखजितांशैर्वा
रविमासांते मध्या सासा राशीनमध्पस्स्पाद ।

Note. भूजैरसुरामै in 40 b is the insertion by oversight of the same from 41 c.

[प्रतिसौरमासशुद्धिविधिः]

विश्वाग्निनन्दाष्टकु[१८९३१३]भिर्मूर्च्छनाभ्राङ्कखाक्षिभिः [२०९०२१] ।
रविमासा हता भक्ताः खखाभ्रद्विविसागरैः [४३२०००] ॥ ४४ ॥
दिनावमानि तद्योगः खाग्नि[३०]भक्तोऽधिमासकाः ।
शेषं दिनादिशुद्धिर्वा विकलं दिनशेषतः ॥ ४५ ॥

[सौरमासाधिप-साधनम्]

द्विघ्नमासाद्द्युयोगात्स्याद् भानुमासपतिः स्फुटः ।

[लघ्वहर्गणदिवसाधिपयोः साधनम्]

शुद्ध्यूना दिवसा मासाद्गताः शिव[११]हताः पृथक् ॥४६ ॥
अवमविकलाद् द्विगोरस[६९२]निघ्नात् स्वच्छेदसंयुक्तात् ।
त्रिखनग[७०३]हृतात् फलोनाद् द्युगणो मासधिपाद् दिवसम् ॥ ४७ ॥

[सौरदिवसान्ते ग्रहसाधनम्]

द्विखेभैः [८०२] कुगुणैः [३१] नन्दजिनै[२४९]र्बाणै[५]र्नगाङ्ककैः [९७] ।
द्वाभ्यां [२] तु सौराहर्गणं हन्याल्लिप्ता निशाकरात् ॥ ४८ ॥

---

Text of Ms. A:

[44] विश्वाग्निनंदाष्टकुभिर्मूर्छनाभ्राकखाक्षिभिः
रविमासा हता भक्ताः खखाभ्रद्विविसागरैः ॥
[45] दिनावमानि तद्योगः खाग्निभक्तोधिमासकाः
शेषं दिनादिशुद्धिर्वा विकलं दिनशेषतः ॥ ॥
[46] द्विघ्नाचासातपोगात्स्पाद्भानुर्भासयतिस्स्फुटः
शुद्धिपूना दिवसा मासाद्गता शिवहताः पृथक् ॥ ॥
[47] अवमविकलाद् द्विगौरसनिघ्नात्स्वश्छेदसंयुतः ।
त्रिखनगहृतात्फलोनाद् द्युगणो मासाधिपाद्दिनं ॥ ॥
[48] द्विखेभैः कुगणैर्नंदजिनैर्वाणोत्नगांककैः ।
द्वाभ्यां तु सौराहर्गणहत्याल्लिप्ता निशाकरात् ।

Ms. B : 44 b °नाभ्रांक° 48 b °णोत्नगांककैः

वेदाग्नित्रिभुजैः [२३३४] सप्तव्योमबाहु[र]सैककैः[१६२०७] ।
वेदाङ्गाक्षिभुजैः [२२६४] पञ्चपञ्चव्योमनिशाकरैः [१०५५] ॥ ४९ ॥
कृतनन्दशराङ्कैश्च [९५९४] द्विवेदाङ्गै[६४२]र्द्विधा स्थितम् ।
खखव्योमाष्टचन्द्रांशै[१८०००]रुच्चपातौ रसै[६]र्गुणैः[३] ॥ ५० ॥
शिवनेत्राङ्गविशिखै[५६२११]र्वेदाग्न्यक्षिरसैककैः[१६२३४] ।
खखखाक्षिनगांशै[७२०००]र्वा दिनकृद्दिवसान्तिकाः ॥ ५१ ॥

[प्रतिसौरदिनशुद्धिविधिः]

प्राग्वद्रविदिवसेभ्यो गुणकेभ्यः खाग्नि[३०]सङ्गुणहरेण ।
दिवसावमावशुद्धिर्दिवससंयुतिर्दिनाधिपश्च तथा ॥ ५२ ॥

[सौरवर्षादिसाधनम्]

भांश[३६०]विभक्तदिनेभ्यो वर्षाण्यवशेषतः खगुणैः [३०] ।
मासाश्चैत्रसिताद्याः शेषाद् दिवसास्ततोऽभीष्टाः ॥ ५३ ॥

---

Text of Ms. A :

[49] वेदाग्नित्रिभुजैस्सप्तव्योमवाहुसैककैः ।
वेदांगाक्षिभुजैपंचपंचव्योमनिशाकरैः ।
[50] कृतनंदशरांकैश्च द्विवेदांगैर्द्विधा स्छितं ।
खखव्योमाष्टचंद्रांशेरुच्चपांतौशसैर्गुणैः ।
[51] शिवानेत्रांगविशिखै । वेंदाग्न्यक्षिरसैककैः
खखखाक्षिनगांश्रैर्वा दिनकृद्दिवसांतिकाः ।
[52] प्राग्वद्रविदिवसेभ्पो गुणकाभ्पो खाग्निसंगुणहरेण ।
दिवसावमावसुद्धिर्दिनदिवसंयुतिर्दिनाधिपश्च तथा
[53] भांशुविभक्तदिनेभ्पो वर्पाण्यवमशेषतः खगुणैः
मासाश्चैत्रसिताद्याः शेषदिवसास्ततोभीष्टाः ।

Ms. B : 52 b खाग्विसंगुण०

[अवमशेषसाधनम्]

दिवसाः शुद्धिविहीनाः कार्यास्तेभ्यो द्युभूदमपि ।
ऊना सावनशुद्धिर्भानोर्वर्षान्तजा दिनैरूनैः ॥ ५४ ॥
शेषं शोध्यद्युगणस्तद्रुद्र[११]हतं विशोधयेच्छेषात् ।
द्विनवरस[६९२]घ्नाद् भक्तात्स्वच्छेदेनावमो विशुद्धयति चेत् ॥ ५५ ॥
शोध्यद्युगणाद् रूपे शुद्धे गुणखाग[७०३]संयुताच्छोध्या ।
शेषं तद्दिवसोत्थं विकलं त्ववमस्य विज्ञेयम् ॥ ५६ ॥

[सौरवर्षान्ते सौरमासान्ते वा चन्द्रसाधनम्]

सूर्याब्दमासान्तरविः शुद्धया द्वादश[१२]निघ्नया ।
युतोंऽशै रवि[१२]निघ्नाच्च निशापोऽवमशेषतः ॥ ५७ ॥

[चान्द्रमासान्ते तुल्यौ रविचन्द्रौ]

स्वच्छेदेन, युगाधिमासनिहता मासा गता भास्करा
भानोर्मासगणोद्धृताः फलयुताश्चान्द्राः शरै[५]स्ताडितात् ।
शेषादङ्गशरेषुबाणखनवस्तम्बेरमा[८९०५५५६]प्तांशकै-
रूनश्चैत्रसितादिमासकगणो राश्याद्यचन्द्रद्युपौ ॥ ५८ ॥

---

Text of Ms. A :

[54] दिवसशुद्धिविहीनाः कार्यास्तेभ्पो द्युर्मंदमपि ।
ऊना साननेबुशुद्धिर्भानोर्बर्षांतजा दिनैरूनैः ।
[55] शेषं शोध्यद्युगणस्तदुरुहतं विशोधयेश्छेषात्
द्विनवरसघ्नाद्भक्तात्स्वश्छदेनावमा विशुध्यति चेत् ॥ ॥
[56] शोध्यद्विगुणाद्रूपे शुद्धे गुणखागसंयुताश्छेध्या
शेषं तद्दिवसोत्थं विकलं त्ववमस्प विज्ञेयं ॥ ॥
[57] स्वाब्दमासांतरविशुद्याद्वादश । तेघ्नया ।
अतोंशैरवृनिघ्नाश्च निशापोवमशेषतः ॥ ॥
[58] स्वश्छेदेन युगाधिगासनिहिना मासा गता भास्करा
भानोर्मासगणौद्धृताः फलघुत्ताश्चांद्राः शरैस्ताडितात्
शेषादंगशरेषुवाणखनवस्तस्तेरमापूंशकै-
रूनश्चैत्रसितादिमरसकगणो राश्याद्यचंद्रद्युपौ ।

Ms. B :　54 c °शुद्विर्भा°　58 c °स्तस्नेर°　58 d °श्चैत्र°

[चान्द्रमासाधिपः]

त्यग[रस]सप्तनभोऽब्धित्रि[३४०७६७३]हता रजनीशमासका भक्ताः ।
नन्दाष्टाग्निरसाक्षिद्विभुजै[२२२६३८९]र्मासाधिपो मासात् ॥ ५९ ॥

[चान्द्रमासे ग्रहगतयः]

तिथयो[१५]ऽष्टदृशो[२८ ऽष्टदृशो २८] देयाः प्रतिमासमंशकादिकुजे ।
एवं शशिसुतशीघ्रे खार्काः [१२०] खशराः [५०] शरेषवो [५५] मासि ॥ ६० ॥
पूर्ववदमरपतीज्ये बाहू[२] धिष्ण्यानि [२७] मनवश्च [१४] ।
दानववन्दितशीघ्रे नगवेदा [४७] धीन्दवो [१८ ऽब्धिकृताः] [४४] ॥ ६१ ॥
लिप्तादि भास्करसुते नवविषयाः [५९] पञ्चशीतकराः [१५] ।
शिशिरकरोच्चेंऽशादि शिखिनो[३]ऽतिधृति[१७]र्निशाकरकरा[२१]श्च ॥ ६२ ॥
ग्रहणाधिपाद्यपातेंऽशकादि खगुणाः [३०] खसागरा[४०]स्सूर्याः [१२] ।
भू[१]र्देवा [३३] रामशराः[५३] पाते गजमूर्च्छना[२१८]प्तलिप्तोनम् ॥ ६३ ॥

Text of Ms. A:

[59] त्वयगसप्तनभोब्दित्रिहता रजनोशमासका भक्ताः
नदाष्टाग्विरसाक्षिद्विभुजैर्मासाधिपो मासात् ।

गतदिवसात्रिरधोजेर्गुणिताः ष्टैखाकमाजिसमंशकादिकुजे ॥
एवंशशिसुतशीघ्रे खार्काः खशराः शरेषवो मासि ॥ ॥ जितामध्यः
गम्यध्रुगाप्तचिध्रुकं वागाप्तवियुगनम्पयुगपरौ द्युगणः ।

[The portion underlined has been wrongly inserted from the next verse.]

[60] तिथयोपृदृशो देयं प्रतिमासमंशकादि कुजे ।
एवं शशिसुतशीघ्रखार्काः खशराः शरेषवो मासि ॥ ॥

[61] पूर्ववदमरषतीज्येवहूनिधिष्ट्यातिसनवश्च
दानववंदितशीघ्रे तगवेदा वान्दवोब्दिकृताः ।

[62] लिप्तादि भास्करसुते नवविषयाः पंचशीतकराः
शिशिरकरोच्चेशादिः शिखिनो विष्टधृतिर्निशाकरकराश्च ।

[63] ग्रहणविचीर्षे पाते लकदि खगुणाः खसागरास्सूर्याः
मूदेवा रामशराः पाते गजमूर्छनापूलिप्तोनंग

Ms. B: 59 a °नभोब्दि° 61 c °शीध्रे° 61 d वीन्दवो° 62 b °वहूनिधिष्ट्यानि
62 a भाष्कर°

गोऽर्कै[१२९]र्नगनखैः [२०८] पयोधिखसुरैः [३३०४] पक्षाष्टि[१६२]भिर्मासकै-
र्ध्यब्ध्यङ्कैः [९४८] शरधीकु[१८५]भिस्सुरभुजै[२३३]र्भूजादिषु स्वं कलाः ।
हानिर्जीवबुधार्कजेषु कलिकाः

[चान्द्रमासगतिज्ञानेन सावनदिवसगतिज्ञानम्]

मासोपभोगो हतो

द्वाभ्या[२]मात्मगुणाङ्गभाग[$\frac{१}{६३}$]सहितो भुक्तिर्दिने सावने ॥ ६४ ॥

[चान्द्रदिवससम्बन्धि-सावनदिवससाधनम्]

गतशशिदिवसा गुणिताः शशिबाहुनभोनवाभ्रभुजैः[२०९०२१] ।
जलरामगुणाष्टशरा[ग्नि]त्रिकु[१३३५८३३४]भिर्लब्धदिवसोनाः ॥ ६५ ॥

रविसावनदिवसगणः शेषं खाङ्ग[६०]सङ्गुणं विभजेत् ।
स्वच्छेदेनावाप्तं धनं गतघटिकागणो, ग्रहाणाञ्च ॥ ६६ ॥

[चान्द्रदिवसान्ते ग्रहसाधनम्]

नवनागाग्निरसाङ्गै[६६३८९]र्गतशशिदिवसाः समाहता भक्ताः ।
नन्दाष्टरामरस[भु]जभुजनेत्रै[२२२६३८९]र्लब्धवर्जिताद् दिनपः ॥ ६७ ॥

---

Text of Ms. A :

[64] गोर्कैर्नगिनखैः पयोधिखसुरैः पक्षाष्टिभिर्मासकै-
व्यर्ध्यंगैः शरधीकुभिस्सुरगजैर्भूजादि स्वं कलाः
हानिर्जीववुधार्कजेषु कलिका मासोपभोगो हतो
द्वाभ्यामातागुणोगभाससहितो भुक्तिर्दिने सावन ।

[65] गतदिनदिवसा गुणिताः शशिवाहुनभोनवाभ्रभुजैः
जलनामगुणाष्टशरत्रिकुभिर्लब्ददिवसोनाः ।

[66] रविसावनदिवसगणः शेषं सांगोप्संगुणं विभजेटत्
स्वश्छेदेनावाप्तं धनगतवटिकागणो ग्रहाणां च ।

[67] नवनागाग्विरसांगैनतशशिदिवसास्समाहता भक्ता
नंदाष्टरामरसजभुजनेत्रैर्लब्दवर्जिता दिनयः ।

Ms. B : 64 d °मात्म° 67 d °र्लब्दवर्जिता दिनपः

भागा भास्वति योज्याः शशिदिवसा द्वादशहताश्चन्द्रः ।

रामष्टनव[९८३]विनिघ्ना वसुरसष[ड्रस]कुसप्तरसनेत्रैः[२६७१६६६८] ॥ ६८ ॥

भक्ताः शीतगुदिवसा लब्धं भागादि संशोध्यम् ।

तीक्ष्णशिशिरांशुयोगात्तद्भां[२७]शोत्थ इलासुतो मध्यः ॥ ६९ ॥

दिग्व्योमेषुनगाग्निव्योमनखै[२००३७५०१०]र्भाजिताः समभिनिघ्नाः ।

नगतत्त्वाब्ध्यङ्गकुभिः[१६४२५७] शशिनो दिवसाः फलोनि[त]त्र्यंशः ॥ ७० ॥

शशिनः स्याद्बुधशीघ्रं

द्विभुजा[२२]हतभौमवर्जिताच्चन्द्रात् ।

खभुजांशो [$\frac{1}{220}$]देवगुरुस्त्रचष्टाग्नि[३८३]हतेभ्य इन्दुदिवसेभ्यः ॥ ७१ ॥

खैकखशरागरामव्योमनखै[२००३७५०१०]र्लब्धसंयुक्तः ।

ज्ञचलेनान्तरभेदं कुगुणागरसद्वि[२६७३१]निहतदिवसेभ्यः ॥ ७२ ॥

खशशिखशिलीमुखनगगुणखखनेत्रै[२००३७५०१०]र्लब्ध[यु]ग् भृगोः शीघ्रम् ।

सितशीघ्रभास्करान्तरधृति[भागः][$\frac{1}{18}$] नन्द[९]निहतदिवसेभ्यः ॥ ७३ ॥

---

Text of Ms. A :

[68] भागा भास्वति योज्पाः शशिदिवसा द्वादशाहतश्चंद्रः
रामाष्टनवविविघ्ना रसवसुष-कुंसप्तरसनेत्रैः ।

[69] भत्काः शीतगुदिवसा लव्दं भागादि संशोध्यं ।
तीक्ष्णशिशिरांशुयोगात्तद्भांत्थ इलासुतो मध्यः ।

[70] दिग्व्यामेषुनगाग्निव्योमनखैर्भाजितास्समभिनिघ्नः
नगतत्वाव्यंगकुभिः शशिनो दिवसाः फलोनिस्त्रचंशः ।

[71] शशिनस्पाघुशीघ्रद्विभुजाहतभौमवर्जिताः चंद्रात्
खभुतांशो देवगुरुस्त्रचाष्टाग्निहतेभ्प इंदुदिवसेभ्पः ॥ ॥

[72] खैकखशरागनामव्योमनखैलंव्दसंयुक्तः
ज्ञचरेणांतरभेदं कुगुणागरसाद्विनिहतदिवसेभ्पः ।

[73] खशशिखशिलीमुखनगगुणखखनेत्रैर्लव्दग्भृगोः शीघ्रं ।
सितशीघ्रभास्करांतरधृतं नंदनिहितदिवसेभ्पः ।

खाष्टनवसप्तवेदव्योमकृता[४०४७९८०]प्तेन वर्जितः सौरः ।

गुर्विनयोगदशांशो [१/१०] नन्दाङ्कनगैक[१७९९]निहतदिवसेभ्यः ॥ ७४ ॥

खाष्टाक्षिभागशरकृतशश्या[१४५७२७२८०]प्तयुतः शशाङ्कोच्चम् ।

रविभार्गवशीघ्रान्तररव्यंशो[१/१२] नन्दपञ्चनगकु[१७५९]हतात् ॥ ७५ ॥

दिवसगणान्नखव्योमशून्येषुन[गाभ्र]खाब्धि[४००७५००२०]लब्धेन ।

युक्तः शिशिरगुपातो मध्या वैवं ग्रहाः शशिदिनान्ते ॥ ७६ ॥

## [गुर्वब्देन कर्म]

### [गुर्वब्दान्ते सावनदिवसात्मिका शुद्धिः]

खखखधृति[१८०००]घ्ना भक्ता गुर्वब्दा रुद्रनेत्रगजचन्द्रैः[१८२११] ।

लब्धं स्थाप्यं शेषाद्विश्वाग्निनवाब्धिशशिविश्वैः [१३१४९३१३] ॥ ७७ ॥

गुणितात् खखाभ्ररसनवविशिखेषुशरर्तु[६५५५९६०००]भिर्दिनादियुतम् ।

लब्धरविवर्षसावनशुद्धया तत्सावना शुद्धिः ॥ ७८ ॥

---

Text of Ms. A :

[74] खाष्टनवसप्तवेदव्योमकृताप्तेन वजितस्सैरः

गुर्विनयोगदलांशो नंदांकनगैकनिहितंचद्रदिवशेभ्पः ।

[75] खाष्ठाक्षिपभागपारकृतशश्पाप्तयुगशशांकोच्चं ।

रविभार्गवशीघ्रातररव्यंशो नंदपंचनगकुहतात् ।

[76] दिवसगणान्नखव्योमृशून्पेषुनखाब्दिलब्देन ।

घुक्तः । शिशिरगुपातो मध्या वैबं ग्रहा शशिदिनांते

[77] खखखधृतिघ्ना भक्ता गुर्वब्दा रुद्रनेत्रगजवंद्रैः

लब्दं स्छाप्पं वोषाद्विश्चाग्निनवाब्दित्रचशिविसैः ।

[78] गुणितात्खस्वाभ्ररसनगाविशिखेषुशरतुभिदिनादिघुतं ।

लब्दरविवर्षसावनशुद्धया तत्सावना शुद्धिः

Ms. B : 74 d °निहित° 75 a खाष्टा° 75 b °प्युगशशांकोघं 76 a °णान्नख°
76 b °खाब्दिलब्देन 77 b °चन्दैः 78 c लब्ट°

[गुर्वब्दान्ते चान्द्रदिवसात्मिका शुद्धिः]

नववसुगुणाङ्गभुजभुजनेत्रहतं [२२२६३८९] वाऽवशेषकं विभजेत् ।
खत्रयरसाङ्गयमनवदिग्भि[१०९२६६०००]दिवसादि चन्द्रशुद्धियुतम् ॥ ७९ ॥

गोऽङ्गखशशिकृत[४१०६९]निघ्ना नखगुणपञ्चाष्टमूर्च्छना[२१८५३२०]भक्ताः ।
गुर्वब्दा लब्धियुता नवाष्टरामाङ्गरस[६६३८९]हतं लब्धम् ॥ ८० ॥

खचतुष्टय[रस]शशधरनेत्रै[२१६००००]र्वर्षादि यत्प्राप्तम् ।
तद्वर्षैर्मासैरपि हीनं तिथयो गतास्तु चैत्रादेः ॥ ८१ ॥

प्राग्वत्सावनशुद्धया चान्द्रया वा कर्म देवगुर्वब्दे ॥ ८२ ॥

[गुर्वब्दाधिपः]

एका[गा]ङ्का[९७१]भिहता गुर्वब्दा द्वयश्विवेदरसरामैः [३६४२२] ।
भक्ताः फलं चतुर्घ्नैर्ज्याब्दैर्युक्तं ज्यावर्षपः स्यात् ॥ ८३ ॥

[गुर्वब्दान्ते अवमशेषम्]

शिवाङ्कोत्कृति[२६९११]निघ्नेभ्यो द्विद्विवेदरसाग्निभिः [३६४२२] ।
जीवाब्देभ्योऽवशेषं यत् तद्वियद्रस[६०]सङ्गुणम् ॥ ८४ ॥

---

Text of Ms. A :

[79] नववसुगुणांगभुजभुजनेत्रहतं वावशेषकं । वेभजेत्
खत्रपरसांगपमनवदिग्भिर्दिवसादि चंद्रशुद्धियुतं ॥ ॥

[80] गोंगखशशिकृत्तनिघ्ना नखगुणपंचाष्ठमूर्छभाभक्ताः
गुर्वब्दा लब्दियुता नवाष्टरामांगरसहतं लब्दं

[81] खचतुष्टयशशधरनेत्रैर्वर्षादि यत्प्राप्तं
तद्वर्षैर्मासैरापेकीना लवृया घुता गुरोस्तु चैत्रशुक्लादेः

[82] प्राग्वत्सावनसुद्धया चांद्रया वा कर्म देवगुर्वब्दे ॥ ॥

[83] एकांकानिहता गृर्वब्दाश्चिद्विवेदरसरामेः
भक्ताः फलं चतुघ्नेर्ज्पाब्दैर्युतकं ज्पावर्ष्टताः । स्स्पात् ।

[84] शिवांकोत्कृतिनिघ्नेभ्पो द्विद्विवेदरसाग्निभिः
जीवाब्देभ्पो विशेषं यत्तद्विपद्रससंगुणं ।

**Ms. B :** 79 b विभजेत् 80 c गुर्वब्दा 81 b °यत्प्राप्तं 81 d लब्टया
82 b °ब्दे 84 c जीवाब्दे°

**स्वच्छेदभक्तं घट्यादिहीनरात्रावशेषकम् ।**

**गुर्वब्दान्ते,**

[लब्ध्वहर्गणसाधनम्]

**चैत्रसितप्रारम्भाद्गतवासराः ॥ ८५ ॥**

**शुद्धयूना द्विरधो रुद्र[११]हताग्निखनगो[७०३]द्धृताः ।**
**दिवसा घट्यादियुताः तद्दिनोने दिवागणः ॥ ८६ ॥**

**अथवा शुद्धिविहीना दिवसाः हीनदिनहीनाः ।**
**द्विरधो रुद्र[११]विनिघ्नास्त्रिखाग[७०३]भक्ता दिनादिफलम् ॥ ८७ ॥**

**ज्याब्दान्तावमघटिका रुद्र[११]हतास्त्रिखाग[७०३]भक्ताः ।**
**वियुतास्ताभिस्तद्दिवसविहीनाज्ज्यावर्षतो द्युगणः ॥ ८८ ॥**

[गुर्वब्दान्ते ग्रहसाधनम्]

**गुर्वब्दाः शिवनेत्रै[२११]र्गुणिताः शश्येकबाहुधृति[१८२११]भक्ताः ।**
**लब्धसमादिविहीना गुर्वब्दान्ते रविर्मध्यः ॥ ८९ ॥**

**गोऽङ्गनभइन्दुतोयै[४१०६९]र्गुरुवर्षगणान् समाहतान् कृत्वा ।**
**खशिवाक्षिनागचन्द्रै[१८२११०]र्लब्धयुतो दिनकरश्चन्द्रः ॥ ९० ॥**

---

Text of Ms. A :

[85] स्वच्छेदभक्तं घद्यादिहीनरात्रोविशेषकं ।
गुर्वब्दांते चंद्रसितप्रारंभाद्गतवासराः ॥ ॥

[86] शुद्धयूना दिरदो रुद्रहताग्निखनगोद्धृताः ।
दिवद्यादियुतं । तद्दिनोनो दिवागणः ॥ ॥

[87] स--शुद्धिविहीना वा दिवसाः शुद्धिहीनदिनहीनाः
द्विरदो रुद्रविनिघ्नास्त्रिखागनक्ता दिनादियुतं ।

[88] ज्याब्दातावमघटिका रुद्रहतेस्त्रिखनखाग्रनता
वियुतास्ताभिस्तद्विवसविहीना ज्यवर्षतो द्युगणः ।

[89] गुर्वब्दा शिवनेत्रैर्गुणिताः शश्पेकराहधृतिभक्ताः
लब्दसमाधिविहीना गुर्वब्दांते रविर्मध्यः ।

[90] गोंगरसइंदुगोदैर्गुरुवर्षगणात्समाहता--त्
शशिवाक्षिनागचंद्रैर्लब्दयुतो दिनकरः चंद्रः ॥

Ms. B : 85 c °ब्दान्ते 88 b °खाग्तनता 89 a गुर्वब्दा 90 d °र्लब्द°

मुनिनखवेदाग्नि[ ३४२०७ ]हृतात् खरसाङ्गकराङ्कदिग्[ १०९२६६० ]घृताल्लब्धम् ।
योज्यमहर्पतिभेदे गुरुवर्षगणादिलासुतो मध्यः ॥ ९१ ॥

रसखाब्ध्यष्टभुज[ २८४०६ ]हताच्छराष्टिरामागबाहु[ २७३१६५ ]सम्भक्तात् ।
शिशिरगुतनयचलोच्चं गीर्वाणगुरोः समागणाल्लब्धम् ॥ ९२ ॥

गुरुभेदे संयोज्यं नगशशिनगनन्द[ ९७१७ ]ताडिताद् भक्तात् ।
पञ्चेषुखेन्दुनवभिः [ ९१०५५ ] ज्याब्दगणाद् भार्गवचलोच्चम् ॥ ९३ ॥

सप्ताभ्रैकरस[ ६१०७ ]हतात् खशिवाक्षिगजैक[ १८२११० ]भाजिता[ ज्ज्या ]ब्दात् ।
निविडतरतिमिरगजकरकेसरिरविदेहसम्भवो मध्यः ॥ ९४ ॥

सूर्यदशांशे [ $\frac{१}{१०}$ ] योज्यं नगाग्निसप्ता[ ष्टभू ][ १८७३७ ]गुणितात् ।
खाष्टगजाङ्गशिलीमुखमनु[ १४५६८८० ]भिर्जीवाच्छशांकोच्चम् ॥ ९५ ॥

इननखांशके [ $\frac{१}{२०}$ ] देयं नगैकचन्द्राष्ट[ ८११७ ]ताडिताज्जीवात् ।
खरदेषुधृतिभुजा[ २१८५३२० ]प्तं शशिपातो वा ग्रहा एवम् ॥ ९६ ॥

---

Text of Ms. A :

[91] मुनिनखवेदाग्निहताः खरसांगकराकदिग्घृताल्लव्दं ॥
योज्पमहर्यतिभेदे गुरुवर्ष्टगणादि–सुतो मध्यः ।

[92] रसखाव्द्यष्टभुजाहत्तश्छराष्टिरामागवाहुसंभत्कात्
शिशिरगुतनयं चलोश्चगीर्वाणगुरोस्समागणांल्लव्दं ॥

[93] गुरुमेदें संयांज्यं गनंशशिनगनंदताडिताद् भक्तात्
पंचेपुखेन्दुनवभिज्पाव्दगणाद्भार्गवचलोच्चं ॥ ॥

[94] सप्ताभ्रैकरसहताश्छशिव्यक्षिगजैकभाजिता–वात्
निविडतरतिभिरगजकरकेसरिरविदेहसंभवो मध्पः ।

[95] सूर्यदशांशे योज्पं नगाग्निसप्ता । – · · गुणितां
खाष्टगजांगशिलीमुखमनुभिर्जीवाश्छशांकोच्चं ॥ ॥

[96] दिननखंशिदेपं नगैकचंद्राष्टताडिताज्तीवात्
खरदेषुधृतिभुजाप्तं शशिपातो वा ग्रहा एवं ॥ ॥

Ms. B : 91 b °करांक° °लब्दं 92 d °लब्दं 93 a गुरुमेदे संयोज्यं 93 c पंचेषु°
96 b °ज्जीवात्

[प्रकीर्णविषयाः]

[१. ग्रहाणां (सावन) दिनगतयः]

भुजगोरसै[४९२]धृ॑तिः [१८] स्याद्‌भगणादी रजनिदयित इह।
धृति[१८]राशयः शशाङ्को द्युगणैः कुकृतै[४१]स्त्रिवृन्द[२७]मंशानाम् ॥ ९७ ॥
द्विखधीकृतै[४८०२]रतदुच्चं
नवभिः[९]र्भागः कला च भूषड्भिः[६१]।
रामैः [३] खभुजा [२०] लिप्ता
गोखरसै[६०९]दिक्[१०] कलाः शशाङ्कोच्चम् ॥ ९८ ॥
गोऽङ्गभुजै[२६९]र्वा राशिः खभास्करै[१२०]र्लिप्तिका हीनः।
तत्पातो नवचन्द्रै[१९]र्भागोऽब्ध्यङ्कैश्च[९४] लिप्तिकाद्वितयम् [२] ॥ ९९ ॥
वाऽङ्गाङ्गशरै [५६६] राशिः
[सु]खधृतिदिनै[१८४]र्विश्व[१३]र्विकलिका हीनाः।
कुभुजै[२१][श्च] [शिव][११]कुजांशा
दिवसैर्नभकुञ्जरै[८०]स्तथैव कला ॥ १०० ॥
अथवा धरातनूजो नवयमनेत्रै[२२९]स्तु राशयो वेदाः[४]।
द्युगणाब्धि[४]वधो भागा विश्वै[१३]र्भुजभूधराः[७२] कलाः ज्ञचलम् ॥ १०१ ॥

---

Text of Ms. A :

[97] भुजगोरसैर्हृतिस्स्याद्भागादी रजनिदयित इह ॥
धृतिराशयः शशांकोधिगमैः कुकृतैस्त्रिवृंदमंशानां।
[98] द्विखधीकृतैस्तदुघं नवभिर्भागैः कला च भूष्टड्भिः ॥
रामैः खभुजा लिप्ता गोविरसैर्दिक्कलाः शशांकोच्चं।
[99] गोंगभुजैर्वा राशिः खभास्करैर्लि। पुप्तिकाहीनाः ॥
तत्पातो नवचंद्रैर्भागै क्ष्म्पाक्ष्मांकैश्च लिप्तिकाद्वितयं।
[100] वांगांगशरै राशिः खधृतिदिनैर्विश्च विकलिका हीनाः।
कुकुजैः कुजांशा दिवसैर्व्यगकुंजरैस्तथैव कलाः
[101] अथवा धरातनूजो नवयमनेत्रैस्तु राशयो वेदाः
द्युगणाव्दिवधो भागा विश्चैर्भूजभूधराः कला ज्ञचलं।

Ms. B : 98 a °तदुच्चं 101 c °गणाब्दि°

गुण[३]राशयो द्विनेत्रैः[२२] कुनगै[७१] रस[६]लिप्तिका ज्ञशीघ्रं वा ।
द्युगणोऽक्ष[५]गुणो लिप्ता गुरुरभ्रनगै[७०]श्च लिप्तिका हीनः ॥ १०२ ॥
कुरसगुणै[३६१]र्वा राशिर्विकलोनोऽक्षजलधि[४५]दिनैः ।
पञ्चभि[५]रष्टौ[८] भागास्सितचलमेकाग्निभिः [३१] कला वेदाः [४] ॥ १०३ ॥
नगनववसुभी [८९७] राशि-
र्गुणेषुरामैश्च [३५३] सप्त [७] विकलोनः ।
खधृति[१८०]दिनैः कुरसगुणाः[३६१]
कलिकाः कलिकः शराब्धिभुजचन्द्रैः[१२४५] ॥ १०४ ॥
एभिर्द्युगणादिभवाः समन्विता वा स्युरिष्टदिने ।

[२. सूर्यांशेभ्यो ग्रहसाधनम्]

सूर्यांशेभ्यो वा स्युलब्धफलेनान्विता मध्याः ॥ १०५ ॥
त्रीशकरैः [२११३] सूर्यांशैः शशी शरागा[७५]स्त्रिभि[३]श्च पूर्णकृताः [४०] ।
भागास्तदुच्चपातौ कुरसा [६१] नवबाहवः [२९] कलाः छिद्रैः [९] ॥ १०६ ॥

---

Text of Ms. A :

[102] गुणराशयो द्विनेत्रैः कुनगै रसलिप्तिका ज्ञशीघ्रं वा ।
द्युगणोक्षगुणो लिप्ता गुरुरभ्रनखैश्च लिप्तिकाहोनः
[103] कुरसगुणैर्वा राशिर्विकलोतः पक्षजलदिदिनैः ॥
पंचभिरष्टौ भागास्सितचलमेकाग्प्रहैः कला चैका ॥
[104] तगनवरसवसुभी राशिगुणेषुरामैश्च सप्तविकलोनः
खधृतिगुणैः कुरसगुणाः कलिकाः कलिकः शराब्दिचंद्रैः ।
[105] पभिर्युगणादिभवास्समन्किता वा स्पुरिष्टदिनैः
सूर्यांशिभ्पो वा स्युर्लब्दफलेनान्विता मभ्पाः
[106] त्रीशकरैस्सूर्यांशैः शशी शरागास्त्रिभिश्च पूर्णकृताः
भागास्तदुच्चपातौ कुरसनववाहवः कलाः छिद्रै

Ms. B : 104 d शराब्दि° 105 a °स्समन्विता 105 c वा स्पुर्लब्द°
106 d कुरसा°

दिग्भिः [१०] शरा [५] महीजो भागा लिप्ताश्च नन्दशीतकराः [१९] ।
बुधचल[म]मरा [३३] भागा विश्वे[१३] च कला दिनैर्नागैः [८] ॥ १०७ ॥
गुरुरेकांशो[१]ऽत्यष्टि[१७]रविभागैर्लिप्तिकाश्च रसपक्षाः [२६] ।
सितशीघ्रं जिन[२४]भागास्तिथि[१५]भिर्दहनाश्विनौ [२३] लिप्ताः ॥ १०८ ॥
नवविषयाः [५९] पातङ्घ्रिर्लिप्ताः सूर्यांशकैर्गजाश्विमितैः [२८] ।
छित्वैवं गुणहारानिष्टखगात्साधयेद्रविं बहुधा ॥ १०९ ॥

[३. अवमपाततोऽधिमासपाततो वा गतदिवसाः]

प्रोक्तावमहारहतावमघटिका वासराः खरस[६०]लब्धाः ।
दिनगणितविशुद्ध्या हीना अवमविकलदिनानि चैत्रादौ ॥ ११० ॥
शोध्यं यदा न शु[द्ध्ये]त् तदाऽवमाद्धारसंयुताच्छोध्यम् ।
षडगाङ्का[९७६]हतशुद्धिः खाग्नि[३०]हृदधिमासशेषशेषः स्यात् ॥ १११ ॥

[४. चैत्रादितोऽहर्गणः]

मध्वादितस्तिथिगणः पृथगध्यहयुग्रसागनन्द[९७६]हृतः ।
लब्धाधिमासदिवसैर्युतोऽपरः पृथगवस्थाप्य ॥ ११२ ॥

---

Text of Ms. A :

[107] दिग्भिः शरा महीजो भागा लिप्ताश्च नंदशीतकराः
　　बुधचलमरा भागा विश्वे च कला दिनैर्नागाः ।
[108] गुरुरेकांशोत्यष्टारविभागैर्लिप्तिकाश्च रसपक्षाः ।
　　सितश्रीघ्रं जिनभागास्तिथिभिर्दहनाश्विनौ लिप्ताः ।
[109] नवन्विषया यातंगिर्लिप्तास्सूर्यांशकैर्गजाश्चिपितैः
　　छित्वैवं गुणहारानिष्टखगात्साधयेद्रविं वहुधा ।
[110] प्रोक्तावमहाराहतावमघटिका वांसराः खरसलब्पः
　　जिनगुणितविशुद्ध्या हीनास्त्यवमविकलानि चैत्रादौ ।
[111] शोध्यं यदा न शु⁻तदावमाद्वारसयुताश्छोघ्यं ।
　　षडगांकहतशुद्धिः खाग्निहृदधिमासशेषशेषस्स्पात्
[112] मध्वादितस्तिथिगणः पृथगव्पहयुग्रसागनंदहृतः⁻॥
　　लब्दाधिमासदिवसैयुतोपलः पृथगवस्छाप्प

Ms. B : 109 a नवविषया पातं° 110 a °हारहता° 110 b °लब्यः
110 c °विशुद्ध्या 111 b °संयुता°

**प्रोक्तवदवमानि हरेदितरस्माद्दिनगणोऽत्र दिन[प]श्च ।**
**चैत्रसिताद्यब्दपतिर्यथोक्त[व]द् वाऽब्दपसमीपात् ॥ ११३ ॥**

[५. अहर्गणं विना सूर्याचन्द्रमसोः साधनम्]

**निजगुणहीनैर्हारैस्स्वावमशेषाद्दिनादि तद्युक्तात् ।**
**अधिशेषादभ्रगुण[३०]घ्नाद्रसखखचन्द्रै[१००६]र्दिनादिफलम् ॥ ११४ ॥**
**मासदिने प्रथमयुतिः पृथक्कु[१]विश्वा[१३]हृता द्वितीयोना ।**
**रविशीतगू गृहाद्यौ बहुधा वा प्रोक्तवत्साध्यौ ॥ ११५ ॥**

[६. चैत्राद्यहर्गणात् ग्रहसाधनम्]

**शुद्ध्याहतभुक्त्यूनः शुद्ध्यन्तगखेचरश्च शुद्ध्यादौ ।**
**अवमघटीफलयुक्तो द्युगणफलेन चेष्टदिनमध्यः ॥ ११६ ॥**

[७. राश्यंशाधिपाः रोच्यमराः]

**प्रतिगृहमिनांशकानां क्रमशस्त्वधिपा भवन्ति रोच्यमराः ।**
**ब्रह्मा प्रजापतिद्यौः शस्त्वं तर्वन्नवासांसि ॥ ११७ ॥**

---

Text of Ms. A :

[113] प्रोक्तवदवृमानि हरोदितरस्माद्दिनगणोत्र दिनश्च ।
चैत्रसिताद्यब्दयतेर्यथोक्तद्वाब्दपसमेपात्

[114] निजगुणहीनैर्हरैस्खावमशेषाद्दिनादितघुक्तात् ॥
अधिशेषोगगुणघ्नाद्रसखस्वचंद्रैर्दिनादिफलं ।

[115] मासदिने प्रथमयुतिः पृथक्कुविश्चाहृता द्वितीयोना ।
रविशीतगू गृहाद्यौ वहुधा वा प्रोक्तवत्समध्यौ

[116] शुद्धपाहततुक्त्यू शुद्ध्यंतगखेचरश्च शुद्धपादौ
अवमघटीफलयुरको द्युगणहलनेष्टदिनमध्पः

[117] प्रतिग्रहमिनांशकानां क्रमशस्त्वाधिपा भवंति रोच्पनराः
व्राह्म्पा प्रजापतिद्यौः शस्त्वतर्वन्नवासांसि

Ms. B ; 113 c °द्यब्द° 113 d °द्वाब्दप° 114 b °स्स्वावम° 115 b पृथक्व°
115 d °वत्साध्पौ

कालाग्निखरविशशीन्द्रगोनियतिसवितृगुहाजपितृवरुणाः ।
हलिवायुयमा वाक्छ्रीधनदनिरयभूमिवेदपरपुरुषाः ॥ ११८ ॥
मध्यमगत्या चैते सहस्रकिरणस्य सूरिभिर्गदिताः ।
स्वे स्वे दिवसे पूज्या दिनकरदार्सैर्विवृद्धये भक्त्या ॥ ११९ ॥
यमकालनियतिहुतभुक्शस्त्राणां वासरा नेष्टाः ॥ १२० ॥

प्रत्यब्दादिशुद्धिविधिः पञ्चमः ।

---

**Text of Ms. A :**

[118] कालाग्निखखरवीन्द्रमोनियतिसवितृगृहार्जपितृतृवरुणाः
हलिवापुयमा वाकुछ्रीधनदनिरपभूमिवेदपरपुरुषाः

[119] मध्यमगत्पा चैते सहस्रकिरणस्प सूरिभिर्गदिताः ।
स्वे स्वे दिवसे पूज्या दिनकरदार्सैर्बिवृद्धये भक्त्या

[120] यमकालनियतिहुतश्छस्त्राणां वासरा नष्ठाः ।

प्रत्यब्दादिशुद्धिविधिः पंचमः ॥

**Ms. B :** 120 b नष्टाः

## 6. करणविधिः

[अधिमासावमभगणशेषदिनानि]

अधिमासा[व]मविकलग्रहमण्डलशेषकाणि चैत्रादौ ।
अधिमासावमभगणैः प्रोक्तैर्निजमुद्धरेद्दिनादिफलम् ॥ १ ॥

[गुणकपरिकल्पना]

रविचन्द्रभूमिदिवसा अधिकावमपर्ययोद्धृता हाराः ।
बहुतरशेषे स्वधिया गुणकं सञ्चिन्त्य गुणहतं विभजेत् ॥ २ ॥

[हारक्षेपपरिकल्पना]

छेदे गुणकारबधे हारः क्षेपः गुणकहतं क्षेपम् ।
तद्भागहारशकलादधिकं क्षेपं तदा हरेद्धारात् ॥ ३ ॥

[धनक्षयौ धनक्षयगणौ च]

सैव च्छिन्नो हारः शेषं च धनं क्षयाद्धमितरः स्यात् ।
तद्भक्ताः क्षितिदिवसाः प्रोत्पन्नहराहताः क्षयस्वगणः ॥ ४ ॥

---

Text of Ms. A :

[1] अधिमासामविकलग्रहमंडलशेषकानि चैत्रादौ
अधिमासावंमभगणैः प्रौक्तैर्निजमुद्धरेद्दिनादिफलं ॥ ॥

[2] रविचंद्रभूमिदिवसा अधिकावमपर्ययोद्धृता हाराः
वहुतरशेषे स्वधिया युणकं संचित्य गुणहत्तं विभजेत् ।

[3] देयं गुणाकरवधे हारः क्षेप्पः गुण्यहतं घुप्पां
तद्भारहरान्शकलादधिकं शेप्टं तदा हरेद्धारात् ॥ ॥

[4] सैकश्छिन्नो हारः शेजं च धनं क्षपाद्धमितरस्स्पाद्
तद्भक्ताः क्षितिदिवसाः प्रोत्पन्नहराहताः क्षयस्छगुणः ।

Ms. B : 2 d गुणाहत्तं 3 b गुणाहतं क्वेप्पं 4 b °स्स्पाद्

[अधिमासावमसम्बन्धिधनक्षयौ]

अधिमासावमजाभ्यामेवं गुणकाहता रवीन्दुनिशाः ।
क्षेपं निजहाराद्वा विशोधयेच्छेषमृणसंज्ञम् ॥ ५ ॥

[मध्यमग्रहसाधनम्]

इष्टाब्दादितदिवसाः पृथग्गुणकताडिता हरविभक्ताः ।
क्षयधनगणेन लब्धा वियुतयुता मध्यमा भूयः ॥ ६ ॥

[द्युगणसाधनम्]

क्षेप्ययुता हीना वा शोध्येन विभाजिताश्च हारेण ।
अधिमासाः शशिदिवसैरवमान्येवं तदूनिता द्युगणः ॥ ७ ॥

[प्रकारान्तरेण मध्यमग्रहानयनम्]

द्युगणे गुणकाभ्यस्ते धनयुजि शोध्योनितेऽथवा भक्ते ।
हारेण भगणपूर्वो ग्रहो द्युराशेः क्षये भगणवृद्धया ॥ ८ ॥

---

Text of Ms. A :

[5] अमासावमजाभ्पामेव गुणकाहता रवींद्रनिशाः
क्षेयं निजहाराद्वा विशोधयेश्छेषष्टणसंज्ञं ।

[6] इष्टाब्दादिनदिवसाः पृथग्रुणकताडितादृद्विधा विभस्काः
क्षयधनगणेन लब्दा वियुतयुता मध्पमा भूयः ।

[7] क्षेप्पयुता हीना वा शोघ्पेन विभाजितश्च हारेण
अधिमासाः शशिदिवसैरवमान्पेवं तद्वनिता घुगणः ॥ ॥

[8] घुगणे गुणकाम्पस्ते धनघुजि मठ्योनितेथवा तक्ते ।
हारेण भगणयूर्वो ग्रहो घुराशेः क्षयस्खगणवृद्धया ॥ ॥

[ग्रहस्पष्टीकरणम्]

**भगणाधिकयोनयुते मध्यस्स्यादेवमेव ग्रहपाताः ।**
**विधिवत्केन्द्रफलानि तु कृत्वा द्युचरोऽनुपाततः स्पष्टः ॥ ९ ॥**

[करणरचनाविधिः]

**युगाधिमासावमपर्ययाणां निरग्रता यत्र युगे स्फुटानाम् ।**
**कार्यं सुसंक्षिप्तमनन्यदृष्टं सुखावमेयं करणं जडानाम् ॥ १० ॥**

**करणविधिः षष्ठः ।**

---

Text of Ms. A :

[9] भगणाधिकयोनयुते मध्यस्पादेवमेव धृगुयाताः ।
विधिवत्केंद्रफलानि तु कृत्वा धृवरोनुपाततस्स्पृष्टः ॥ ॥

[10] युगाधिमासावमपर्पयोना न्निरग्रता यत्र युगे स्फुटानां ।
कार्यं सुसंक्षिप्तमनन्पदृष्टं सुखावमेयं करणं जडानां ॥ ॥

करणविधिष्पष्टः ।

## 7. कक्ष्याविधान-ग्रहानयनविधिः

[ क्षेत्रसम्बन्धि-परिभाषाः ]

रवेर्गृहान्तःस्थितरश्मितो ये प्रकाशमायान्त्यणवोऽष्टभिस्तैः ।
कचाग्रमष्टौ खलु तानि लिक्षा ताभिश्च यूकाऽष्टभिरेवमुक्ता ॥ १ ॥
यवोऽष्टयूकोऽङ्गुलमष्टभिस्तैरथाङ्गुलद्वादशभिर्वितस्तिः ।
वितस्तियुग्मेन करः करैर्ना चतुर्भिरेको नृसहस्रमुक्तः ॥ २ ॥
क्रोशस्तु तैर्योजनमष्टसंख्यैस्तैर्व्योमवृत्तं कथयन्ति सन्तः ।
खव्योमपूर्णर्तुनगेषुखाक्षिग्रहाब्धिभू[भू]त्[सु]खपक्षचन्द्रैः[१२४७४७२०५७६०००] ॥ ३ ॥

[ भानोः करप्रसारः ]

गगने गगनान्तःस्था द्युतयो विलयं न यत्प्रकुर्वन्ति ।
यावत्तावदिह नभो दीप्तं भानुना भानोः ॥ ४ ॥

---

Text of Ms. A ;

[1] रवेर्गृहांतस्छितरश्मितो यं प्रकाशमायात्पणवोप्टभिस्ते ।
कचाग्रमष्टौ खलु तानि रक्षा ताभिश्च यूकाष्टभिरेवमुक्ता ।

[2] यवोष्ठयूकोंगुलेमष्टभिस्तरथांगुलद्वादशभिर्वितस्तिः
वितस्तियुग्मेन करः करोत्रो चतुर्भिरेके नृसहस्रमुक्त ॥ ॥

[3] त्कोशस्तु तै येजिनमवृक्षंख्यैस्तैर्व्योमवृत्तं कथयति संतः
खव्योभपूर्णर्तुनगेषुखाक्षिगृकाव्दिभूत्खपक्षचंद्रैः ।

[4] गगनगगनातछा वितयो वितयो नयत्प्रकुर्वन्ति
घावत्तावहिह नभो दीप्ता भानके भानुः ।

Ms. B : 1 d °वभुक्ता 2 a °गु १ ल° 3 a योजन° 4 d भानवो भानुः

[खभयोः रविचन्द्रयोश्च कक्ष्याः]

**रविशशियुगघातः खाक्षि[२०]भक्तः खकक्ष्या शशिभगणहता वा दिग्[१०]घ्नचक्रस्य लिप्ताः।**
**निजभगणविभक्ता सा ग्रहस्य स्वकक्ष्या भवति खरस[६०]निघ्ना सूर्यकक्ष्या भकक्ष्या ॥ ५ ॥**
**खखनखमुनि[७२०००]भक्ता वा खकक्ष्या भकक्ष्या त्रिगुणविधुभसङ्घो वोडुवृत्तं प्रदिष्टम्।**
**नख[२०]हृतरविवर्षैश्चन्द्रकक्ष्या हिमांशोर्नख[२०]हृतपरिवर्तैर्भास्वतो धामधाम ॥ ६ ॥**

[ग्रहभानां कक्ष्यायोजनानि]

**पञ्चांशो[१/५]ननगाङ्गर्तु[न]गगजनागाक्षि[२८८७६६७]योजनैर्भानोः।**
**कक्ष्या शशिनो दिग्घ्ना भगणकला [२१६०००] धरणितनयस्य ॥ ७ ॥**
**नेत्रवसुरविहुताशनजलधिशरैः [५४३१२८२] षड्भुजाङ्गैश्च।**
**मुनिखयमाब्धिधराधरशरांशकै[६२६/५७४२०७]श्च शशधरसुतस्य ॥ ८ ॥**
**नेत्रागवेदसायकनवर्तु[६९५४७२]भिर्जिनसमुद्रशशिचन्द्रैः।**
**सुरशरखाङ्गाक्षलवै[११४२४/५६०५३३]रमरगुरोर्योजनैः कक्ष्या ॥ ९ ॥**
**नवखेषुखतत्त्वाब्धित्रि[३४२५०५०९]भिरेणधराभ्रजलधिगुणवर्गैः।**
**शिवनेत्राष्टकुभागै[९४०१/१८२११]र्जिनवेदा[ङ्गा]गधरणिधरचन्द्रैः[१७७६४२४] ॥ १० ॥**

---

Text of Ms. A :

[5] रविशशियुगघातः ख्पक्षिभक्तः खकक्ष्पा शशिभगणहृता वा दिग्घ्नचक्रस्प लिप्ताः।
निजभगणविभक्ता सा ग्रहस्प खकक्ष्पा भवति खरसनिघ्ना सूर्यकक्ष्पा भकक्ष्पा ॥ ॥

[6] खखनगमुनिभक्ता वा खकक्ष्पा भकक्ष्पा त्रिगुणविधुभसंघो वोडुवृत्तं प्रदिष्टं
नखहृतरविवर्षैश्चंद्रकक्ष्पा हिभांशो नखहृत्तपरिवर्त्तैर्भारिवतो घामधाम।

[7] पंचाशोनतगांगर्तगगजनागाक्षियोजनैर्भानोः
कक्ष्पा शशिनो दिग्घा भगणकला धरणितनयस्प ॥ ॥

[8] नेत्रवसुरविहुताशनलधिशरैष्पड्भुजंगैश्चा
मुभिखयभाब्दिर्धराधरशराशकैश्चशशधरसुतस्पं।

[9] नेत्रागवेदसायकन्पवर्तुभिर्जिनसमुद्रशशिचंद्रैः।
सुरशरखागाक्षिलवैरसरगुरोर्योजनैः कक्ष्पा।

[10] नवखेषुखतत्वाद्वित्रिभिरेणधराभ्रजलधियुणवर्गैः
शिवनेत्राष्टकुभार्गैर्जिनवेदागधरणिधरवंद्रैः।

Ms. B ; 5 c स्वकक्ष्पा 9 c °खांगा°

रविकुशरैः सप्ताग्निस्तम्बेरमदिग्लवै[५११२/१०८३७]र्भूगुसुतस्य ।
रविजस्य खनगचन्द्रद्वीशेषुगजैः [८५११२१७०] खचन्द्रवसुचन्द्रैः ॥ ११ ॥
पर्वतदिग्रसभागै[१८१०/६१०७]र्योजनसंख्या भचक्रवृत्तस्य ।
वसुगगनाभ्रनभोऽङ्गद्वित्र्यगचन्द्रा[१७३२६०००८]स्समस्तस्य ॥ १२ ॥

[ग्रहगतिसाधनम्]

क्वहैः खकक्ष्या विहृता ग्रहाणां गतिस्तदिष्टद्युगणाहृतिः स्युः ।
ग्रहोपभुक्तानि तु योजनानि स्ववृत्तभुक्तिद्युगणाहृतिर्वा ॥ १३ ॥

[ग्रहगतियोजनानि]

शरगुणशरेषुवसुरसखैणधरैः [१०६८५५३५] खेन[१२०]हृत्कुदिनभागैः ।
शरखनवागै[७९०५]र्युक्तैर्योजनभुक्तिर्ग्रहस्य सर्वस्य ॥ १४ ॥

[कक्ष्याविधिना मध्यमग्रहसाधनविधयः]

अभीष्टखेटपर्ययैर्हृतान्यमूनि भाजयेत् ।
खवृत्तयोजनैर्ग्रहः स एव पर्ययादिकः ॥ १५ ॥

---

Text of Ms. A :

[11] रविकुशरैस्सप्ताग्निस्तम्भेरमदिग्ववैर्भृगुसुतस्प
रविजस्प खनगचंद्रहांशेषुगजैः खचंद्रवसुचंद्रः

[12] पर्वतदिग्रसमागैर्घोजनसंख्या भचक्रवृत्तस्पा ॥ ॥
वसुगगनाभ्रनभोगद्वित्र्यगचंद्रास्समस्तस्प ॥ ॥

[13] क्वहैः खकक्ष्पा विहृता ग्रहाणां गत्तिस्तदिष्टग्रहणाहतिस्स्पुः
ग्रहोयमुक्तानि तु घोव्रनानि खवृत्तनिभ्रद्युगणाहत्तेर्वा ॥ ॥

[14] शरगुणशरेषुवसुरसखेणधरैः खेनहहत्तुदिनभागैः
शरखनवागैर्युजा योजनभुक्तिर्ग्रहस्थ सर्बस्प ॥ ॥

[15] त्पभीष्टखेरापर्ययैटतात्पसूति भाजयेत्
खवृत्तियोजनैर्ग्रहस्स एव पर्ययादिकः ।

Ms. B :　　12 b °वृत्तस्प　　13 c ग्रहोपमुक्तानि

**योजनानि निजकक्ष्ययाऽथवा भाजितानि भगणादिखेचरः ।**

**व्योमवृत्तगुणिताद्द्युराशितो मण्डलादि कुदिनघ्नकक्ष्यया ॥ १६ ॥**

[भवृत्तखवृत्तयोर्भोगकालः]

**भवृत्ततुल्यानि हि योजनान्यमी व्रजन्ति पूर्वाभिमुखं स्ववृत्तगाः ।**

**इनाब्दषष्ट्या समगा दिवौकसः खवृत्ततुल्यानि युगस्य वत्सरैः ॥ १७ ॥**

[बुधशुक्रकक्ष्या-रविकक्ष्यासमत्वे हेतुः]

**रविभगणहता बुधसितयोर्कक्ष्या योजनैर्युगाब्दाः स्युः ।**

**बुधसितयोर्यत एवं लिप्ताभोगतोऽनयोः सौरः ॥ १८ ॥**

[कुजगुरुशनिशीघ्रकक्ष्या-रविकक्ष्यासमत्वे हेतुः]

**चलकक्ष्यायां भ्रमतां कुजगुरुश[नै]श्चराणां कक्ष्या ।**

**इनभगणहता अध्वा तच्छीघ्राणामतश्चार्कः ॥ १९ ॥**

[ग्रहभानां क्षितेरुपर्युपरि-स्थितिक्रमः]

**शशिज्ञशुक्रार्कमहीसुताङ्गिराशनैश्चरार्क्षाणि यथाक्रमं क्षितेः ।**

**अधोपरिस्थानि सुरक्षसां पुरि भ्रमन्ति तिर्यक्त्विवतर[त्र] भूतले ॥ २० ॥**

---

Text of Ms. A ;

[16] योजनानि निजकक्ष्याथवा भाजितानि भगणादिखेचरः
व्तोमवृत्तगुणिता घुराशितो मंडलादेकुदिनघ्नक · · या ।

[17] भवृत्ततुल्यानि हि योजनात्पमा व्रजंति पूर्वाभिमुखं स्ववृत्तमाः
इनात्मषष्ट्या समगा दिवौकसः स्ववृत्ततुल्पानि युगस्प वत्सरैः ॥

[18] रविभागाहता वुधसितचलकक्ष्पायोजनैर्युगाब्दास्स्युः
वुधसितयोर्यत एवं लिष्ताभोगतोनयोस्सौरः ॥

[19] चलकक्ष्पापा भ्रमतोः कुजगुरुशश्चराः कक्ष्पा
इतरभगणहत्ता अभ्वातश्छीघ्राणामतश्चार्कः ॥

[20] शशिज्ञः शुक्राश्च महीसुतांगिरः शनैखराक्षाणि यथाक्रमं । क्षेतेः
क्षक्षपरिस्छानि सुरक्षसां पुरि । भ्रमंति तिर्यक्त्विवतर भूतले ।

Ms. B : 17 a योजनान्पमी 17 c °षष्टचा 19 c अब्वात°

**[होरा-दिन-मास-वर्षाधिपानयनम्]**

[(i) ग्रहाणामधिकाधिकगतिक्रममधिकृत्य]

**होरेश्वराः सप्त शनैश्चराद्या यथाक्रमं शीघ्रजवाश्चतुर्थः ।**
**दिनाधिपः सावनमासनाथः स्यात्सप्तमोऽब्दाधिपतिस्तृतीयः ॥ २१ ॥**

[(ii) ग्रहाणामधिकाधिकदौर्यक्रममधिकृत्य]

**विधोर्यथोर्ध्वं द्युपतिस्तु पञ्चमो भवेच्च षष्ठोऽब्दपतिस्तु सावनः ।**
**अनन्तरो मासपतिश्च सप्तमो भवेच्च होराधिपतिर्यथाक्रमम् ॥ २२ ॥**

[ग्रहभगणानां भिन्नत्वे हेतुः]

**अल्पे हि वृत्ते गृहभागलिप्ताः स्वल्पा महत्यो महतीन्दुरस्मात् ।**
**अल्पेन कालेन लघु स्ववृत्तं भ्रमत्यनल्पं महताऽर्कसूनुः ॥ २३ ॥**

[नाक्षत्रसावनदिवसयोः स्वल्पाधिकत्वे हेतुः]

**प्राणेन लिप्ता भमुदेति पूर्वे भूजेऽपरेऽस्तं व्रजति ग्रहश्च ।**
**स्वभुक्तिलिप्तायुतचक्रलिप्ताभोगस्समं तेन यतो जवत्वम् ॥ २४ ॥**

**कक्ष्याविधान-ग्रहानयनविधिः सप्तमः ।**

---

Text of Ms. A :

[21] होरेश्चरास्सप्त शनेश्चराधा यथाक्रमं शीघ्रजवाश्चतुर्थः ।
दितादिपस्सावनमासताथस्स्पात्सप्तमोव्दाधिपतिस्तृतीयः ॥

[22] विधोर्यथोर्ध्वं घुपतिस्तु पंचमो भवेच्च षष्टोव्दपतिस्तु सावनः
अनंतरो मासपतिश्च सृप्तमो भवेच्च होराधिपतिर्यथाक्रमं ॥

[23] अस्ये हि वृते गृहनागलिप्तास्स्वल्पा महत्पो महतीदरस्माद
अल्येत कालेन लघु स्ववृत्तं भ्रमप्पनल्पं महतार्कसूनुः ।

[24] प्राणेन लिप्ता भमुदेति पूर्वे मूजे परेस्तं व्रत्राते ग्रहश्चा
स्वभुक्तिलिप्तायुत्तचक्रलिप्ताभोगस्समस्तेन यतो जवत्वं ।

कक्ष्याविधानग्रहानयनविधिस्सप्तमः ।

**Ms. B :**　**24 d** °स्समभेन

## 8. देशान्तरविधिः

[रेखापत्तनानि]

लङ्का कुमारी तु ततस्तु काञ्ची मानाटमश्वेतपुरी त्वथोदक् ।
श्वेतोऽचलोऽस्मादपि वात्स्यगुल्मं पूः स्यादवन्ती त्वनु गर्गराटम् ॥ १ ॥
आश्रमपत्तनमालवनगरे पट्टशिवमेव रोहितकम् ।
स्थाण्वीश्वरस्तु हिमवान् मेरुर्लेखाध्वकर्म नास्त्येषाम् ॥ २ ॥

[भूमेः व्यासपरिधी]

कृतखगदिग्[१०५४]भिर्भूमेर्व्यासः स्याद्योजनैर्भगोऽग्नि[३९२७]हृतः ।
खशरार्क[१२५०]हृतः परिधिः स्पष्टाऽतो दशकरणिका[√१०]त्स्यात् ॥ ३ ॥

[पूर्वाचार्यमतेन देशान्तरसाधनम्]

तिर्यग्लेखापत्तनपल-निजपलयो[र्विशे]षशेषांशैः ।
[गुणितः] क्षितिपरिणाहश्चक्रांश[३६०]हृतस्तु बाहुः स्यात् ॥ ४ ॥
लेखा[पूः]स्वपुरान्तरयोजनसंख्याश्रुतिस्तु लोकोक्ता ।
तद्दोःकृतिविवरपदं कोटिर्देशान्तरं प्रोक्तम् ॥ ५ ॥

---

Text of Ms. A :

[1] लंका कुमारी तु ततस्तु कांची मानाटमश्वेतपुरी त्वथोदक
श्वेतोचलोस्मादपि वात्यगुल्मं पूस्स्पावंती त्वनु गर्गराटं ।

[2] आश्रमं पत्तमालवनगरे चट्टशिवमेव रोहितकं ।
स्थाण्वीश्वरस्तुहिगवान्मेरोर्लेखाध्वकर्म नास्त्पपरं ।

[3] कुततगदिग्भिर्भूमेर्व्यासस्स्पाद्यांजनैर्भगोगृहतः
खशरार्कहृतः परिधिः स्पष्टातो दशकरणिकात्स्पात् ।

[4] तिर्यग्लोवापत्तनपलनिजपलयोः षशेषांशैः
क्षितिपरिणाहश्चक्रांशहृदस्ठुवाहस्स्पात् ।

[5] खेलास्वपरांतर्योजनसंख्या च श्रुतिस्नु लोकोक्ता ।
तद्दोःकृतिविविरपदं कोटिर्देशातरं प्रोक्तं ॥ ॥

[ देशान्तरकर्म च ]

देशान्तरगतिघातात्कुवृत्तलब्धं विशोधयेत् पुरतः ।
देयं कलादि पश्चाल्लेखाया मध्यमे द्युचरे ॥ ६ ॥

[ तत्खण्डनम् ]

श्रुतियोजनास्फुटत्वाद्वक्रत्वात्कुपरिधेश्च नेष्टमिदम् ।

[ अन्यमतानामुल्लेखपूर्वकं खण्डनम् ]

स्वपदांशवर्जितेऽन्ये श्रवणे देशान्तरं जगुः ॥ ७ ॥
प्रोक्तं [च] पलयोजनं तथाऽन्यैर्भाद्वयेन[1] घर्मांशोः ।
कोटिलघुत्वात्पूर्वं मिथ्या भाऽविशेषतोऽन्यच्च ॥ ८ ॥

[ ग्रन्थकारमतेन स्पष्टं देशान्तरम् ]

गणितागतशीतांशोः प्रग्रहकालं प्रसाध्य निजविषये ।
प्रत्यक्षेण तदन्तरकालो देशान्तरं स्पष्टम् ॥ ९ ॥

---

**Text of Ms. A :**

[6] देशांतरगतिघात्तात्कुवृत्तलब्दं विशेथयेत्पुरक्षः
देयं कलादि पश्चाल्लेखाया मध्यमे घुचरे
[7] श्रुत्तियोजनास्फुटत्वाद्वक्रत्रात्कुपरधेच्च नष्टमिदं
स्वपदांश्चवर्जित्तेत्पे । अवणे देशांतरं जगुः प्रेक्ति ।
[8] पलयोजनं तथान्ये भाद्वयेन घर्मांशोः
कोटिलघुत्वात्पूर्वं मिथ्या षाद्विशेषत्तोत्पच्चा ॥ ॥
[9] गणितागतशोतांशोः प्रग्रहकालं प्रसाघ्य निजविषये
प्रत्पक्षेण तदतः कालो देशांतरं स्पष्टं ॥ ॥

**Ms. B :** 7 c °त्तेन्पे । 8 d °त्तोन्पच्च

---

1. द्वितयेन would be better metrically.

[ देशान्तरकर्म ]

[ प्रथमविधिः ]

तन्नाडिका[गति]वधात् षष्ट्याप्तकलोनसंयुतः प्राग्वत् ।
खचरः स्वधाम्नि मध्यो मध्यमतिथिनाडिकास्वेवम् ॥ १० ॥

[ द्वितीयविधिः ]

षष्टिहृतः क्षितिपरिधिर्देशान्तरनाडिकाहृतः स्पष्टा ।
योजनसंख्या परिधौ फल[म]स्याः पूर्ववत्खचरे ॥ ११ ॥

[ देशान्तरवशाद् वारप्रवृत्तिः ]

देशान्तरघटिकाभिः प्राग् लेखाया इनोदयात् पश्चात् ।
वारप्रवृत्तिरुक्ता पश्चात्स्वार्कोदयात्पूर्वम् ॥ १२ ॥

[ अक्षांशवशाद् वारप्रवृत्तिः ]

दक्षिणगोले पूर्वं रव्युदयाच्चरदलेन वारादिः ।
उत्तरगोले पश्चादिनोदयाच्चरदलेनैव ॥ १३ ॥

---

Text of Ms. A :

[10] तन्नाडिकावधात्षष्टयाप्तकलोनसंयुतः प्राग्वत्
खचर स्वधाम्नि मध्यामध्यामध्यमतिथिनाडिकाखेवं ॥ ॥

[11] षष्टिहृतः क्षितिपरिधिर्देशांतरनाडिकाहृतः स्पष्टा
योजनसंख्या परिघो फलस्पाः पूर्ववत्ववचरे ।
षष्टयभ्यधिकोते संख्या गलकालो रखापरपूर्वे द्रष्टा क्षितिशे

[12] वेशांतरघटिकाभिः प्राग्लेखाया इनोदये पश्चात् ।
वारप्रवृत्तिरुक्ता पश्चास्स्वार्कोदयात्पूर्वं ॥

[13] दक्षिणगोले पूर्वखायाश्चरदलेन वा भराठिः ॥ ॥
उत्तरगोले पश्चादिनोदयाच्चरदलेनैव

Ms. B : 13 a पूर्वं

[ देशान्तर-भुजान्तर-चरकर्माणि ]

**भूदिवसैर्भगणेभ्यः कलादिलब्धिस्तु वारभोगोऽस्मात् ।**
**ग्रहवद्भुजान्तरफलं देशान्तरचरदले वाऽपि ॥ १४ ॥**

[ सावनवर्षमासाधिपसाधनम् ]

**कायुःकल्पकृतेभ्यो द्युगणात् खरसाग्नि[ ३६० ]भाजिताल्लब्धम् ।**
**त्रि[ ३ ]गुणमग[ ७ ]भक्तशेषं सावनसमाधिपः सैकम् ॥ १५ ॥**
**यममन्दभास्कराद्यो मासाधिपतिः खहव्यभुग्[ ३० ]भक्तः ।**
**द्युगणः फलं द्वि[ २ ]निघ्नं सैकं नग[ ७ ]भक्तविकलं स्यात् ॥ १६ ॥**

[ होराधिपादिसाधनम् ]

[ प्रथमविधिः ]

**ऊर्ध्वं वारप्रवृत्तेर्दिनगतघटिका द्वचा[ २ ]हताः पञ्च[ ५ ]भक्ता**
**होरेशः सैकमाप्तं नग[ ७ ]हृतविकलं वासरेशाच्च षष्ठः ।**
**पञ्चा[ ५ ]भ्यस्तं फलं वा हिमकर[ १ ]सहित स्यात्क्रमेण द्युनाथात्**
**मासेशः स्यात्तृतीयोऽब्दपतिदिनपती तच्चतुर्थो द्वितीयः ॥ १७ ॥**

---

Text of Ms. A :

[14] भूदिवसैर्भगणेभ्यो दिनादितछिस्तु वारभोगोस्मात् ।
ग्रहवद्भुजांत्तरफलं देशांतरचरदलेनापि

[15] बायुः कल्पकृतेभ्यो घुगणाः खरसाग्निभाजिताल्लब्दं ।
त्रिगमगभक्तमेषं सावनसमाधिपस्सैकं

[16] यमनंदभास्कराद्यो मासाधिपत्तिः खहव्पमुग्भक्ताः ।
घुगणाः फलं द्विनिघ्ने सैकं नगभक्तविकलं स्पात् ।

[17] ऊर्ध्वं वारप्रवृत्तेर्दिनगतघटिका द्वचाहताः पंचमक्ता
होरेशस्सेकमांप्त नगहृतविकलवासरेशाश्च षष्टाः ।
पंचाभ्यस्तं फलं वा हिमकरसहितं स्पात्कमेण द्युभाथो
मासेशस्स्यात्तृतीयोव्दपतिदिनपती तच्चतुर्थ द्वितीय

Ms. B :　　14 b दिनादिलब्दिस्तु वारभोगोस्मात्

[ द्वितीयविधिः ]

सूर्योनलग्नहोराः पञ्च[५]गुणाः पर्वतो[७]द्धृताः शेषम् ।
सैकं दिवसाधिपतिक्रमेण होरापतिः षष्ठः ॥ १८ ॥

देशान्तरविधिरष्टमः ।

---

Text of Ms. A ;

[18] सूर्योनलग्ने होराः पंचगुणाः पर्वतोद्धृताः ॥ शेषा
सैम्रकं दिवसाधिपतिः क्रमेण होरापतिष्पष्टः ॥ ॥

देशांतरविविरष्टमः ॥

# 9. प्रश्नविधिः

[ उपोद्‌घातः ]

आकर्ण्य कुतन्त्रविदः प्रश्नान् ग्लानिमुपयान्ति नष्टगिरः ।
यस्मादतः स्वधीभिः प्रश्नाध्यायं समुद्यतो वक्तुम् ॥ १ ॥

[ प्रश्नाः ]

आनयति यो द्युराशिं विनाधिमासैस्तथा तिथिप्रलयैः ।
रविदिवसेभ्योऽस्माद् वा द्युचरान्यः स तन्त्रज्ञः ॥ २ ॥

अधिमासैः शशिमासैरवमैः कुदिनैर्विना च य आनयति ।
द्युगणं रविदिवसेभ्यो वेत्ति प्रकटं स मध्यगतिम् ॥ ३ ॥

कुदिनैः शशिदिवसान् तैः खरांशुदिवसान् करोति तैर्भाहान् ।
अधिकैरवमानवमैरधिकान् वा यः स तन्त्रज्ञः ॥ ४ ॥

---

Text of Ms. A :

[1] आकर्ण्यं कुतंत्रविदः प्रस्नात्लानिमुपयांति नष्टशिरः
यस्मादतः स्वधीभिः प्रश्नाध्पायं समुच्पते वकुं ।

[2] आमयति यो द्युराशि वेनाधिमासैस्तथा त्रिथिप्रलयैः
रविदिचसेप्पोस्माद्वा द्युचराद्यस्स तंत्रज्ञः ।

[3] अधिमासैः शशिमासैरवमैः कुदिनैर्विना य त आनयत्ति
द्युगणं रविदिवसेभ्पो वेत्ति प्रकटं स मध्यगतिं ।

[4] कुदिनैः शशिद्वसोर्तैः खरांशुदिवसान्करोति तेर्भाहान्
अधिकैखमैखसैरधिकात्वायस्स त्तंत्रज्ञः

द्युगणादृते रवीन्दू ताभ्यामिष्टं ग्रहं चान्यम् ।
बहुधा यः शशिन इनं रवेरिन्दुं करोति गणकः सः ॥ ५ ॥

अश्विन्यौदयिकानथवाऽभीष्टदिवौकसाभ्युदयकाले ।
साधयति दिविचरान् यो गणको मुख्यः स तन्त्रविदाम् ॥ ६ ॥

वारं विलोमविधिना स्वसप्तमाद् यः करोति संक्षेपात् ।
द्युसदां च विलोमगतिं मध्यगतिं [वेत्ति] विमलां सः ॥ ७ ॥

महदल्पगती द्युचरावन्योन्यं यः प्रसाधयेद् बहुधा ।
ग्रहमर्कमर्कमथवा करोति खचरं स तन्त्रज्ञः ॥ ८ ॥

अभ्युदयं प्रतिपाद्य ग्रहभुक्तिं वेत्ति यो ग्रहाभ्युदयात् ।
बहुधा करोति तेभ्यो भावर्तान् यः स तन्त्रज्ञः ॥ ९ ॥

अन्य[ग्रह]भगणगुणाद् द्युगणात् प्रश्नागताक्षरादथवा ।
कुरुते यो ग्रहमिष्टं स च्छेदगुणापवर्तज्ञः ॥ १० ॥

---

Text of Ms. A :

[5] द्युगणादृते रवींदू त्ताभ्पामिष्टं ग्रहन्त्वान्यं
वहुधा षः शशित इनं रवेरिंदुं करोति गणकस्स्पः ।

[6] अश्वित्पौदाप्टेकातचवापीष्टदिवोकसाभ्पुदधकाले
साधयति दिविचरान्पो गणको मुख्यस्स तंत्रविदां ।

[7] वारं विलोमविधिना स्वसृप्तमाद्यं करोति संक्षेपात्
घुसदां च विलोपागतिं मध्पागतिं विमलांशः ।

[8] महदल्पगती द्युचरावन्योन्यं यः प्रसाधपेद्वहुधा
ग्रहमर्कमर्कमथवा करोति खवरं स तंत्रज्ञः ॥

[9] प्रत्युदयं प्रतिपादं ग्रहभुक्ति वेत्ति यो ग्रहाभ्पुदयात्
बहुद्या करोति त्तेभ्पो भावर्तान्पस्स तंत्रज्ञः ॥

[10] अन्यभगणगुणाध्पुगणात्प्रस्नाहृताक्षरादथवा
कुरुते पो ग्रहमिष्टं त्तश्छेदगुणापवर्त्तज्ञः ॥

Ms. B : 5 c वहुधा यः 8 d खचरं

इष्टग्रहोऽवमेभ्यो मध्यतिथिं तद्दिवौकसाभ्युदयात् ।
रविशीतगू च बहुधा यो वेत्ति स वेत्ति मध्यगतिम् ॥११॥

अपवर्तितगुणहारैर्यो द्युगणादीन् करोति संक्षेपात् ।
कल्पात् कजन्मतो वा कृतात् कलेर्वा स तंत्रज्ञः ॥ १२ ॥

द्वि[२]त्रि[३]गुणयो रवीन्द्वोर्योगादष्टो[८]द्धृताज्ज्ञहीनाद् यः ।
आनयतीष्टद्युचरं करामलकवत्स वेत्ति मध्यगतिम् ॥ १३ ॥

नव[९]धी[८]गो[९]हतभूमिज-गुरु-शनियोगाद् दिगीश[१०, ११]गुणिताभ्याम् ।
ज्ञसिताभ्यां युक्ताद् यो वेत्तीष्टखगं स तन्त्रज्ञः ॥ १४ ॥

रविशशिकुजबुधयोगः पृथक् पृथक् त्रि[३]गुणितैश्च तैर्हीनः ।
युक्तो वा तद्योगात् स्वधनगुरुं वेत्ति यः स तंत्रज्ञः ॥ १५ ॥

सर्वग्रहयोगो वा सप्तगुणैस्तैः पृथक् पृथग् युक्तः ।
हीनो वा तद्योगात् के ते सर्वे स्वधनगुरवः ॥ १६ ॥

---

Text of Ms. A :

[11] इष्टग्रहावमेभ्पो मध्यतिथिं त्तद्दिवोकसाभ्पुदयात् ।
रविशीतगू त्व वृहुधा यो वेति स वेत्ति मध्यगतिं ॥ ॥

[12] अध्रवर्तिवगुणाहारेर्यो पुगुणादीन्करोत्ति संक्षेपात्
कल्पार्कजन्मनो वा कृत्तात्कले वा तंत्रज्ञः ॥ ॥

[13] द्विविगुणयो रवीन्द्वोर्योगादऽटोद्धृताञ्ज्ञाहीनाद्यः
आनयतीष्टघुचरं करामलकवत्स वेत्ति मध्यगतिम् ॥ ॥

[14] नवधीगोहत्तभूमिजगुरुशनियोगाद्दिगीशगुणिताभ्पां
ज्ञसिताभ्पां युत्काद्योवीष्टखगं स तंत्रज्ञः ॥

[15] रविशशिकुजबुधयोगः पृथक्पृथक्त्रिगुणितेश्च तैर्हीनः
युत्को वा तघोगात्स्वधनगुरुं वेत्ति यस्स तंत्रज्ञः ॥ ॥

[16] सर्वग्रहयोगो वा सप्तगुणैस्तैः पृथक्पृथग्पुक्तः
होनो वा तद्योगात्कसेर्वे स्वधनगुरवः ॥ ॥

Ms. B : 12 b द्युगुणा° 14 b °ताम्पां

दश[१०]गुणितः शीतांशुः त्रिगुणे[३३]न युतोऽन्यपर्ययाप्तेन ।
विदाहतेन मिश्रः शनिर्विहीनोऽथवाऽन्यभगणाः के ॥ १७ ॥

भौमस्त्रिभुजा[२३]भ्यस्तस्त्रि[३]गुणगुरूनोऽन्यभगणलब्धेन ।
हीनो रविः समेतो मन्दो वाऽन्यस्य के भगणाः ॥ १८ ॥

सम्वत्सरादिशुद्धिं करोति बहुधा ततश्च दिनराशिम् ।
द्युगणाद्रविं च बहुधा दिवसक्षयशेषकाच्च रजनीशम् ॥ १९ ॥
द्युगणाद् ग्रहा दिनाद्वा समाधिपः सावनो द्युमासेशौ ।
रोच्चमरान् होरेशं वारादिं वेत्ति निजविषये ॥ २० ॥
प्रतिकक्ष्यातः खचरान् देशान्तरस्फुटं वेत्ति[वा] ।
यस्सोऽब्धिमेखलायां भुवि तन्त्रविदां भवेन्मुख्यः ॥ २१ ॥

प्रश्नविधिर्नवमः ।

---

Text of Ms. A :

[17] दशगुणितः शीतांशुः त्रिगुणेन पुतोत्पपर्ययाप्तेन ।
विताहतेन मिश्रः शनिर्विहीनोथवान्पभगणाः के ॥ ॥

[18] भौमस्त्रिभुजाभ्पस्तस्त्रिगुणागुरून्पोन्पमगणलव्देन
हीनो रविस्समेतो मदो वान्पस्पा के मगणाः ॥

[19] संवत्सरादिशुद्धि करोति बहुधा ततश्च दिमराशिं ।
घुगणाद्रषि च बहुधा दिवसक्षयशेषकाश्च रजनीशं ॥ ॥

[20] घुगणाद्ग्रहादिनाद्वा समाधिपसावने दिवोर्केषु
रोच्पमरान्होरांशं वारादि वेत्ति निजविषये ॥ ॥

[21] प्रतिकक्ष्गातः खत्वरान्देशांतरस्फुटं वेत्ति
यस्सोब्दिमेखलायां भुवि त्तंत्रविदां भवेन्मुख्पः ॥ ॥

Ms. B : 17 b युतोन्य° 19 c बहुधा

# 10. ब्राह्मस्फुटसिद्धान्तपरीक्षाध्यायः

[उपोद्घातः]

दिव्यशास्त्रमपहाय यदन्यत् प्राह जिष्णुतनयो निजबुद्ध्या ।
तस्य शास्त्रमधिकृत्य ततोऽहं दूषणानि कतिचित् कथयामि ॥ १ ॥

[युगाङ्घ्रिखण्डनम्]

जिष्णुपुत्रकथितैर्युगाङ्घ्रिभिः खेचरो नहि यतः स्वपर्ययम् ।
भुञ्जते सममतो युगाङ्घ्रयः श्रीमदार्यभटकीर्तितास्स्फुटाः ॥ २ ॥

[युगखण्डनम्]

स्मार्तमस्य युगमेव चेत्क[थं] नो रवेरुपरि शीतदीधितिः ।
तत्स्मृतावसदितीह नेष्यते हन्त ! साऽपि युगकल्पना मृषा ॥ ३ ॥
कल्पमेव युगमुच्यते त्वया तत्कथं युगमपेशलं न ते ।
प्राप्यते युगमिदं त्वयैव नो त्वत्कृतं मुनिगणैरसत्ततः ॥ ४ ॥

---

Text of Ms. A :

[1] दिव्यशास्त्रमपहाय यदन्पत्प्राह जिष्णुतनयो निजवुद्धचा
तस्य शास्त्रलवमधित्तयोहं दूषणानि कतिचित्कथयामि ॥ ॥

[2] जिष्णुपुत्रकथितैर्युगांघ्रिभिः खेचरा नहि घत्तस्स्वपर्ययं ॥ ॥
भुंजते सममतो युगांघ्रयः श्रीमदार्यभटकीर्त्तितास्स्फुटाः ॥ ॥

[3] स्मार्तमस्प युगमेव चेत्क– नो रवेरुपरि शीतदीधितिः
तत्स्मृतावसृदतीह नेष्पते हंत्त सापि युगकल्पना मृषा ॥ ॥

[4] कल्पमेव युगमुच्पते त्वया तत्कथं युगमपेशलं न ते
प्राप्पते युगमिदं त्वयैव तो त्वत्कृतं मुनिगणैरसत्ततः ॥ ॥

Ms. B : 3 c नेष्यते

[मनु-कल्प-युगाङ्घ्रिखण्डनम्]

**पुलिशरोमकसूर्यपितामहप्रकथितैर्मनुकल्पयुगाङ्घ्रिभिः ।**
**न हि समाः खलु जिष्णुसुतेरिताः कथमपीह यतो न ततः स्फुटाः ॥ ५ ॥**

[मनुसंध्याखण्डनम्]

**मनुरपि यदि संध्ययैकया स्याद् द्वितयमसद् द्वयमेव चेन्न चैका ।**
**निजमतिपरिकल्पिताश्च संध्या न च मनुना पुलिशेन वा स्मृतास्ताः ॥ ६ ॥**

['चरण'-शब्दस्य खण्डनम्]

**चरणश्चतुरंशकः स्थितो वत लोके न दशांशकः क्वचित् ।**
**युगकल्पसमानवाच्यता न यतस्तत्स्फुटताप्यसत्कृता ॥ ७ ॥**

[जगदुत्पत्तिप्रलयखण्डनम्]

**जगदुत्पत्तिप्रलयौ कमलजनित उवाच यत्तदसत् ।**
**वेदानां नित्यत्वाच्छ्रुतिवाक्यानां गतिर्भवति ॥ ८ ॥**

[होराद्यधिपक्रमखण्डनम्]

**शीघ्रक्रमान्निरुक्ता होरादिनमासवर्षपा धात्रा ।**
**मन्दादेर्नार्कादिर्वेत्ति न वा तत्स्वरूपमपि ॥ ९ ॥**

---

Text of Ms. A:

[5] पुलिशरोमकसूर्यपित्तामहप्रकथितैर्मृनुकल्पयुगांघ्रिभि ।
त हि समाः खलु जिष्णुमुतेरिताः कथमपीह यतो न तत स्फुटाः ॥

[6] मनुरपि पदि संध्पयैकपा स्याद् द्वितपमसद्द्वयमेव चेन्न चैका ।
निजपतिपरिकल्पिताश्च संध्या न च मनुना मुलिशेन वा स्मृतास्ताः ॥ ॥

[7] चरणश्चतुरंवशकः स्थितो वत लोके न दशांशकः क्वचित्
युगकल्पसमानवाच्पता न यतस्तत्स्फुटताभितः कृतः ॥ ॥

[8] जगदुत्पतिप्रलयौ कमलजनितमुवाच तत्तदसत्
वेदानां मित्पत्वाच्छ्रुतिवाक्यानां वातिर्भवति ॥ ॥

[9] शीघ्रक्रमान्निरुक्ता होरादिनमासवर्षपा धाता
मंददिर्नार्कादिर्वेत्ति न वा तस्वरूपमपि ॥

Ms. B: 5 c न हि, जिष्णुसुते° 7 a °रंशकः 8 d गतिर्भवति

[कल्पस्याद्यन्तदिवसयोः खण्डनम्]

**कल्पादौ यद्यर्कः कल्पान्ते भास्करिः कथं न भवेत् ।**
**निजवचनव्याघातात्स्वबुद्धिकल्पः कृतः कल्पः ॥ १० ॥**
**ओंकारो इनवारो ह्यतीतकल्पद्युसंयुताद् द्युगणात् ।**
**नासौ घटते यस्मादोंकारो विस्वरस्तस्मात् ॥ ११ ॥**

[तिथ्यादीनां खण्डनम्]

**तिथिकरणधिष्ण्ययोगा ग्रहणादौ व्यभिचरन्ति दृष्टेन ।**
**रविशशिनोरज्ञानाद्यतो न पञ्चाङ्गमपि वेत्ति ॥ १२ ॥**

[जिष्णुसुतोक्तं ब्रह्मोक्तसम्मतमित्यस्य खण्डनम्]

**न ब्रह्मोक्त्या घटते जिष्णुसुतोक्तं युगादि किञ्चिदपि ।**
**यस्मान्मृषैव तस्माद्ब्रह्मोक्तमिति यच्चकार तत्संज्ञम् ॥ १३ ॥**

[कलियुगादौ युगयातखण्डनम्]

**युगपादान् जिष्णुसुतस्त्रीन् यातानाह कलियुगादौ यत् ।**
**तस्य द्वापरपादो युगगतयेये स्फुटे नातः ॥ १४ ॥**

---

Text of Ms. A :

[10] कल्पादौ यघर्कः कलषांते भास्करिः कथं न भवेत् ।
निजवचनव्याघाताप्स्वबुद्धिकल्पः कृतः कल्पः ॥ ॥

[11] उकारो दिनवरि ह्यतीतकल्पघुसंघुता घुगणात् ।
नासौ घटते यस्मादोंकारो विरवरस्तस्मात् ॥ ॥

[12] तिथिकरणधिस्प्रयोगा ग्रहणादौ व्यभिचरंति दृष्टेना
रविशशिनोरज्ञात्तास्तिथिर्न पंचांगमयि वेत्ति ॥ ॥

[13] भब्रह्मोक्तया घटते जिष्णुसुतोत्कं युगादि किंचिदपि ।
यस्मान्मृषैव तस्माद्ब्रह्मोत्कमिति यच्चकार यसंतसंज्ञं ॥ ॥

[14] युगपादां जिष्णुसुतस्त्रीन्पातीनाह कलियुगादौ यत् ।
तस्य द्वापरपादो युगगतयेये स्फुटे नातः ॥ ॥

Ms. B : 11 d विस्वरस्तस्मात् 12 a धिष्ण्ययोगा

[ द्युगणानीतग्रहाः रेखार्कोदयिका इत्यस्य खण्डनम् ]

"लङ्कासमयाम्योत्तररेखायां भास्करोदये मध्याः ।"[1]
जिष्णुसुतेनोक्तं यन्न तत्स्फुटं विषुवतोऽन्यत्र ॥ १५ ॥

[ वारप्रवृत्तिखण्डनम् ]

"दिनवारादिः पश्चादुज्जयिनीदक्षिणोत्तरायाः प्राक् ।"[2]
चरदलसंस्कारवशान्न तत्स्फुटं गोलवाह्यस्य ॥ १६ ॥

[ अयनचलनतिरस्कारखण्डनम् ]

तत्कालायनचलनं भगणविशेषे प्रकल्पितं सवितुः ।
तन्नाशाच्चन्द्रादिग्रहप्रणाशस्ततोऽस्फुटास्सर्वे ॥ १७ ॥
अत एव विनष्टमतिः प्रागुदयो भास्करस्य मेषादौ ।
कथयति शास्त्राज्ञानात्तत्रायनचलनमभिहितं मुनिभिः ॥ १८ ॥

---

Text of Ms. A :

[15] लंकासमयाम्पोत्तररेखायां भास्करोदये मध्पः
जिष्णुसुतेनोत्कं यत्नत्स्फुटं विषुवतोन्पत्न ॥ ॥
[16] दिनवारादिः पश्चादु॑पितीपश्चिमोत्तरायाः प्राक्
चरदलसंस्कारवशान्न तत्स्फुटं गोलावाह्यस्य ॥ ॥
[17] तत्कालायनचलनं भगणविशेषे प्रकल्पितं सवितुः
तन्नाशाच्चंद्रादिग्रहप्रणाशस्ततो स्फुटास्सर्वे ॥ ॥
[18] अतप्टव विनष्टमतिः प्रागुदंपो भास्करस्प मेषादी
कषयति शाखाज्ञानात्तत्रायनवलनमनिहित्तं मुनिभिः ॥ ॥

Ms. B : 18 d °हित्त

---

1. These are words of Brahmagupta. See *BrSpSi*, i. 35(a-b).
2. These are words of Brahmagupta. See *BrSpSi*, i. 36(a-b).

[ मध्यगतिखण्डनम् ]

**न समा युगमनुकल्पाः कल्पादिगतं कृतादियातं च ।**
**ब्राह्मोक्तं जिष्णुसुतो नातो जानाति मध्यगतिम् ॥ १९ ॥**

[ ग्रहभगणखण्डनम् ]

**वास्तवभगणैर्द्युचरो यादृक् तादृङ्न कल्पितैर्भवति ।**
**कल्पितभगणैर्द्युचरो नानाकारस्तथैव स्यात् ॥ २० ॥**
**भगणाद्यं[क]चतुष्कं कुजस्य भगणेषु दृग्दृगक्षधियः[८५२२] ।**
**शरगुणरसखा[०६३५]न्यथवा द्वीषुशरागा [७५५२] द्विगोद्विनन्दा [९२९२] वा ॥ २१ ॥**
**अनया दिशाऽसृजोऽन्ये भगणाः कल्प्यास्सहस्रशोऽन्यस्य ।**
**द्युचरस्योच्चस्य तथा परमार्थां नात्र केचित्स्युः ॥ २२ ॥**

[ भूपरिधिखण्डनम् ]

**"भूपरिधिः खखखशराः[५०००]"[1] स्थूला स्थाण्वीश्वरोज्जयिन्योस्तु ।**
**अक्षान्तरेण सिद्धा योजनसंख्या न सम्यगतः ॥ २३ ॥**

---

Text of Ms. A :

[19] न समा युगमनुकल्पाः कल्पादित्तं कृतादियातं त्व ।
ब्राह्मोक्तं जिष्णुसुतो नातो जानाभि मध्यमर्ति ॥ ॥

[20] वास्तवभगणो द्युचरो यादृत्कादृत्काद्ं न कल्पितैर्भवति ।
कल्पितभगणैद्युचर नानाकारस्तथैव स्पात् ॥ ॥

[21] भगणाद्यं चतुष्कं कुजस्प भगणेषु दृग्दृगक्षधियः
शरगुणरसखान्पथवा द्वीणुशरागा द्विगोद्विनंदा वा ॥ ॥

[22] अनया दिशामृजोन्ये भगणाः कल्प्यास्सहषशोन्यस्या
द्युचरस्पोच्चस्य तथा परमार्था नात्व केचित्स्युः

[23] भूपरिधिः खखशरा स्छताः स्छाणीश्वरोज्जयिन्यासु
अक्षांतरेण सिद्धाः योजनसंख्या न सम्पं गतः

Ms. B : 23 a स्छलाः

---

1. These are words of Brahmagupta. See *BrSpSi*, i. 37(a).

**भूपरिधेरज्ञानाद् व्यर्थं देशान्तरं तदज्ञानात् ।**
**स्फुटतिथ्यन्ताज्ञानं तन्नाशाद्ग्रहणयोर्नाशः ॥ २४ ॥**

[देशान्तरसाधनस्य **खण्डनम्**]

**भूपरिधिखण्डवर्गो देशान्तरयोजनैः कृतस्तेन ।**
**तदतीव गणितजाड्यं प्रदर्शितं जिष्णुतनयेन ॥ २५ ॥**

[रविसङ्क्रान्तेः ग्रहाणाञ्च खण्डनम्]

**संक्रान्तिर्घर्मांशोः समस्तसिद्धान्ततन्त्रबाह्योऽतः ।**
**कुदिनानामज्ञानान्मन्दोच्चस्य स्फुटो नार्कः ॥ २६ ॥**
**कल्पितभगणैर्द्युचराः कल्पितकुदिनैः प्रकल्पितैस्तुङ्गैः ।**
**परिधीनामज्ञानाद् दृष्टिविरोधात्स्फुटा नातः ॥ २७ ॥**

[व्यासार्धखण्डनम्]

**त्यक्ते भव्यासार्धे शास्त्रप्रसम्मिते गणितसौक्ष्म्यात् ।**
**कर्तव्यं व्यासार्धं "खमुनिरदा"[३२७०][1] स्त्वतिगणितजाड्यमिदम् ॥ २८ ॥**

Text of Ms. **A** :

[24] भूपरिधेरज्ञाताद्व्यर्थं देशांतरं तदज्ज्ञानाद
स्फुटतिथ्यंताज्ञानतन्नाशाद्ग्रहणयोर्नाशः ।

[25] भूपरिधिखंडवर्गो देशांतरयोजतैः कृतस्तेन
तदतीव गणितजाड्यं प्रदर्शितां जष्णुतनयने ॥ ॥

[26] संक्रांतिर्घर्मांशोस्समस्तसिद्दांतंत्रबाह्यतः
कुदिनानामज्ञानान्मंदोश्चस्य स्फुटो नार्कः ॥ ॥

[27] कल्पितभगणैर्द्युचराः कल्पितकुदिनैः प्रकल्पितै सुंगैः
परिधीनामज्ञानाद्दृष्टिविरोधात्स्फुटा तातः ॥ ॥

[28] त्यक्ते भव्यासार्धे सहस्रप्तसंमिते गणितसौक्ष्म्पात्
कर्तव्यं व्यासार्धं खमुनिरदस्त्वतिगणितजाड्यमिदं ॥ ॥

**Ms. B** : 27 b °स्तुंगैः 27 d स्फुठा नातः

1. These are words of Brahmagupta. See *BrSpSi*, xxi. 16.

[क्रमोत्क्रमज्याखण्डनम्]

जिन[२४]जीवासङ्ग्रहणाद्रसाङ्क[९६]भागो भमण्डलस्य समः ।
यदभिहितवांश्छरस्तत्र [न] तत्स्फुटो मुनि[७]समस्तस्य ॥ २९ ॥
मण्डलसमभा[गा]नां पुरुषवदाख्यानं [यत्कृतं तेन] ।
तत्तथा न यतः समं दोर्द्वितयं विशिखः कथं भवति ॥ ३० ॥
नातोऽस्ति ज्यानियमः शरसौक्ष्म्यात्तन्निवर्तनं युक्तम् ।
सप्तक[७]शरे निवृत्तिर्जिष्णुसुतस्यैव युक्ततमा ॥ ३१ ॥

[नतज्याक्षेत्रखण्डनम्]

लम्बाक्षज्यानयनेऽतो नतज्याप्रकारवचनं यत् ।
प्रोवाच क्षेत्रफलं जिनजीवासंगतं तदसत् ॥ ३२ ॥

[ग्रहस्पष्टीकरणखण्डनम्]

पूर्वाचार्यादृष्टं स्पष्टीकरणं [कृतं] यतस्तेन ।
न भवति दृग्गणितैक्यं गणितसमं गोलबाह्यस्य ॥ ३३ ॥

---

Text of Ms. A :

[29] क्षिनजीवासंग्रहस्पाद्रसांकभागो भमण्डलस्प समः ।
यदिभिहितवावछरस्तत्र तस्स्फुटं मुनिसमस्तस्प ।
[30] ममंडलसमभाना परपुरुषवदाखपातं ।
तत्तया नियतः समं दोर्द्वितयं विवुधा कथं भवति ॥ ॥
[31] नातोस्ति द्यानियमः शरसौक्ष्म्यादंतिवर्तनं युत्कं ।
सप्तकशरे निवृत्तिर्जिष्णुसुतस्पैव घुक्ततमा ॥ ॥
[32] लंवाक्षज्पानयनेतो नतज्पाप्रकारवचनं यत्
प्रोवाच क्षेत्रफलं जिनजीवासंगतं तदसत् ॥ ॥
[33] पूर्वाचार्यादृष्टस्पष्टीकरणं यतस्तेन
न भवति दृगणितैक्यं गणितसमं गोलवाह्यस्प ॥ ॥

[भौमचलपरिधिसंस्कारखण्डनम्]

यदि मन्ये संस्कारश्चलपरिधौ भूसुतस्य किं न तथा ।
चंद्रसितादेः कस्मादागमभासात् स्फुटा नातः ॥ ३४ ॥

[शङ्कुच्छायादिखण्डनम्]

दृङ्मात्रमेव कथिता छायासिद्धिर्मंदान्वितान्धधिया ।
प्रज्ञाज्वरप्रलपितं "छायानयनानि षट्त्रिंशत्"[1] ॥ ३५ ॥
प्राक्[क्षि]तिजेऽपमवलयोदयमानं प्राङ्निरूपितं दृष्टम् ।
जिष्णुसुतेनान्यत्र तु नातो जानाति तद्भ्रमणम् ॥ ३६ ॥
वास्तववेधादन्यज्जिष्णोस्तनयस्य भाविनी भाऽपि ।
दूरभ्रष्टाऽङ्गुलकैरतोऽस्फुटास्तस्य सर्वेऽपि ॥ ३७ ॥

[कोणसममण्डलशङ्कोः खण्डनम्]

कोणसममण्डलनराः पूर्वाह्णि वाऽस्त एव बह्वक्षे ।
नाशमुपयान्ति तस्याभीष्टस्थाने न वेत्ति शङ्कुमपि ॥ ३८ ॥

---

Text of Ms. A :

[34] यदि मन्ये संस्कारश्चलपरिधौ भूतसुतस्य किं न तथा
चंद्रसितादेः कस्मादागमभाशात् स्फुठा नातः

[35] दृंमात्रमेव कथिता श्छायासिद्धि मंदान्वितोघधिया ।
प्रज्ञाज्वर प्रवलितं छायाभयनानि षड्भ्रमणं । आस्तावेधादन्यज्जि ड्त्रिषत् ।
[The portion underlined is wrongly inserted from vss. 36-37.]

[36] प्राविति जोपलवलयोदयमानं प्रानिरूपितं दृष्टं
जिष्णुसुतेनान्यत्र तु नातो जानाति त्तद्भ्रमणं ॥ ॥

[37] आस्तावेधादन्यज्जिष्णोस्तनयस्य भाविनी भापि ।
दूरभ्रष्टांगुलकैस्तो स्फुटास्तस्य सर्वेपि ॥ ॥

[38] कोगसममंडलनराः पूर्वाह्नि वास्व एव वह्वक्षे
नाशमुपयांति त्तस्याभीष्टस्छाने न वेत्ति शंकुमिति ॥ ॥

Ms. B : 35 d °मणं ॥ आस्ता वेधादन्यज्जिष्णोस्तनयस्य ड्त्रिशत् 36 d जानीति
38 d नवोत्ते शे°

---

1. There are words of Brahmagupta. See *BrSpSi*, iii. 37(d).

[ राहुकृतग्रहणस्य खण्डनम् ]

अन्यद्योजनबिम्बैर्निरागमैस्त्वेन्दुं भा भुवर्या सा ।
निजकर्णे यातीन्दोर्ग्रहणे प्रतिवेत्ति नो किञ्चित् ॥ ३९ ॥

नो वा गोलं नो लम्बनकं संस्थानं नो तथा क्षेत्रम् ।
नापि रविग्रहहृदयं जिष्णुसुतो गणितगोलबाह्योऽयम् ॥ ४० ॥

खण्डयति तमोऽर्धेन क्षपाकरं विद्युदलेन तिग्मांशुम् ।
राहुकृतं च ग्रहणं प्राहास्तसमस्तशास्त्रार्थः ॥ ४१ ॥

[ त्रिभोनलग्ननतांशसाधनस्य खण्डनम् ]

वित्रिभलग्नापक्रमपलांशयोगान्तरं त्रिभोनलग्नस्य ।
नतभागास्तदयुक्तं दृ[क्क्षे]पे वित्रिभं च यतः ॥ ४२ ॥

[ दृक्कर्म-खण्डनम् ]

उदयास्तमयभानोरिष्टे काले ग्रहस्य दृक्कर्म ।
कृतवान् जिष्णुसुतो यत्स्वौदयिके सुगणितजाड्यं तत् ॥ ४३ ॥

---

**Text of Ms. A :**

[39] अन्पद्योजनविंवैंनिरागमैत्स्वेंद्रमाकुवद्या सा
निजकर्णेत्पातीड्रहणे प्रतिवेत्ति नो किंचित् ॥ ॥

[40] ना व गोवाना लंवनके शंस्छानं नो तथा क्षेत्रं ।
नापितविग्रहहृदपं डिष्णुसुतो गधितगोलवाह्योपं ॥ ॥

[41] खंडयति मोतर्धेन क्षपाकरं तिग्मांशुं विधुदलने
राहकृतं च ग्रहणं घाहास्तसमस्तस्त्राशार्थः ॥ ॥

[42] वित्रिभलग्लापक्रमपलांशघोगांतरं त्रिभोनलग्रतस्प
नतभागास्तदयुक्त दृ᳚ये वित्रिभं च यतः ।

[43] उदयास्तमय भानोरिष्टे काले ग्रहस्प दृक्कर्म
कृतवां जिष्णुसुतो पत स्वौदयिके सुगणितजाद्यं तत् ।

**Ms. B :** 42 b °धोगांतरं

[चन्द्रसितस्य खण्डनम्]

भानुभुजाविनियोगाच्चन्द्रे शुक्लं प्रदर्शितं तेन ।
नो लग्नभुजानुगतं वेत्ति नु शुक्लं सुतो जिष्णोः ॥ ४४ ॥

[उपसंहारः]

जिष्णुसुतदूषणानां संख्यां वक्तुं न शक्यते यस्मात् ।
तस्मादयमुद्देशो बुद्धिमताऽन्यानि योज्यानि ॥ ४५ ॥

एकमपि न वेत्ति यतो जिष्णुसुतो गणित[काल]गोलानाम् ।
न मया प्रोक्तानि ततः पृथक् पृथग् दूषणान्येषाम् ॥ ४६ ॥

नो कालविधिं गोलं नो तद्भ्रमणं न चापि प्रत्यक्षम् ।
गोलानुगतं सर्वं भ्रमणवशादज्ञानाद् दशा तस्य ॥ ४७ ॥

[ब्राह्मस्फुटसिद्धान्तपरीक्षाध्यायः दशमः]

इति श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्वरविरचिते स्वनामसञ्ज्ञिते स्फुटसिद्धान्ते
मध्यगतिः प्रथमोऽधिकारः ॥ १ ॥

---

Text of Ms. A :

[44] भानुभुजादियागाश्चंद्रे शुक्लं प्रकल्पितं तेन ।
तो लग्नभुजानुगतं वेत्ति न् शुक्लं सुतो जिष्णोः ॥ ॥

[45] जिष्णुसुतदूषणानां संख्या वक्तुं न शक्यते घस्मात्
तृस्मादुपदेशो वुद्दिमत्तान्यातियाज्यानि ॥ ॥

[46] एकमपि न वेत्ति पतो जिष्णुस्वतगणितगोलानां ।
न मपा प्रोक्तानि ततः पृथक्पृथग्दृषणान्येषां ॥ ॥

[47] नो कोलविधि मोले नो तद्भ्रमणं न चापि प्रत्पक्षं ।
गोलानुगतं सर्वं भ्रमणैवशादशातादस्प ॥ ॥

श्रीमदानंदपुरोयमट्टमदत्तसुतवटेश्वरावेरचिते स्वनामसंज्ञिते स्फुटसिमद्धांते
मध्यगतिः प्रथमोधिकारः ॥ ॥

Ms. B : 47 d भ्रसणैव°

# II. स्फुटगत्यधिकारः

## 1. सूर्याचन्द्रमसोः स्फुटीकरणविधिः

[उपोद्घातः]

नीचोच्चवशाद्द्युचरः कक्ष्यायां दृश्यते न मध्य[स]मः ।
यस्मादतः स्फुटत्वं नीचोच्चविधानतो वक्ष्ये ।। १ ।।

[अर्धज्या-कलाः]

अर्धज्या रसबाणाः [५६] करशशिशशिनो [११२] गजाङ्गचन्द्रमसः[१६८] ।
वेदाकृत[यो] [२२४] व्योमस्तम्बेरमबाहवो [२८०] रसाग्निगुणाः [३३६] ।। २ ।।
नेत्रनवहुतभुजो [३९२] गजजलधिकृताः [४४८] कृतनभोबाणाः [५०४] ।
नन्दशिलीमुखबाणाः [५५९] शरशश्यृतवः [६१५] खपर्वताङ्गानि [६७०] ।। ३ ।।
तत्त्वागाः [७२५] खाष्टनगाः [७८०]
शराग्निनागा [८३५] नवाष्टपवनभुजः [८८९] ।
रामाब्ध्यङ्का [९४३] नगनव-
नन्दाः [९९७] कु[श]राभ्ररजनीशाः [१०५१] ।। ४ ।।

---

Text of Ms. A :

[1] नोचोश्चवशाघुचरः कक्ष्पायां दृश्यते न मध्यमः
घस्मादतः स्फुटत्वं नीचोच्चविघानतो वक्ष्ये ।। ।।

[2] अर्धज्या रसवाणाः कर । शशिशशिनौ गजांगचंद्रमसः
वेदकृतव्योमस्तंभेरमवाहवो रसाग्निगुणः ।

[3] नेत्रनवहुतभुजो गजजलधिकृताः कृतनभोवाणाः
नंदशिलीमुखवाणाः शरशश्पृतवः खपर्वतांगनि ।

[4] तत्वागाः खाष्टनगाः शराग्निगाना नवाष्टपवनत्तुजः
रामान्पंका न्पगनवनंदा कुराभ्ररजनीश्मः

Ms. B : 3 d °पर्वतांगानि

शरखशिवाः [११०५] स्तम्बेरम-
तिथिशशि[नः] [११५८] [जलधरप्रकृतिशशाङ्काः (१२१०)।
शिखिरससूर्याः (१२६३) शरशशि-
वह्निधराः (१३१५) स्वराङ्गरामभुवः(१३६७) ॥ ५ ॥
नागैकवेदशशिनो (१४१८)
नवरसशक्रा (१४६९) नखेषुरजनीशाः (१५२०)।
खागतिथयो (१५७०) नखनृपा (१६२०)
नवरसनृपा (१६६९)] धृतिसप्तभुवः [१७१८] ॥ ६ ॥
सप्तर्तुसप्तशशिन[१७६७]स्तिथिधृतयो [१८१५] द्व्यङ्गनागहरिणधृतः [१८६२]।
नवखाङ्कभुवो [१९०९] रसशरनवचन्द्राः [१९५६] करखशून्यकराः [२००२] ॥ ७ ॥
नगकृतखनया [२०४७] द्विनवव्योमभुजाः [२०९२] सप्तविश्वनेत्राणि [२१३७]।
खधृतियमा [२१८०] वेदभुजद्विभुजा [२२२४] रसषड्भुजाक्षीणि [२२६६] ॥ ८ ॥
वसुखाग्नियमाः [२३०८] खशर-
त्रिभुजा [२३५०] आकाशनन्दगुणयमलाः [२३९०]।
खगुणजिनाः [२४३०] खागजिना [२४७०]
नवाभ्रतत्त्वा[२५०९]न्यगाब्धितत्त्वानि [२५४७] ॥ ९ ॥

---

Text of Ms. A :

[5] शरखशिवाः तंभेरमतिथिशशि[unindicated
gap ]

[6] [unindicated gap
] धृतिसप्तमत्पः

[7] सप्तर्तुसप्तशशिनस्तिथिधृतयो व्यंगनागहरिणधृतः।
नवखांकभुजो रसशरनवचंद्राः करखशून्पकराः

[8] नगकृतखनवा द्विनवव्योमभुजः सप्तविश्चनेत्राणि ॥ ॥
खधृतियमा वेदभुजद्विभुज रसषड्भुजाक्षाणि।

[9] वसुखाग्निधमाः खशरत्रिभुजा आकाशनंदगुणयमलाः।
खगुणजिनाः खागजिना नवाभ्रतत्त्वान्पगाब्दितत्वानि

Ms. B : 8 d °जाक्षीणि

वेदाष्टेषुयमाः [२५८४] शशिनेत्राङ्गभुजा [२६२१] नगेषुरसयमलाः [२६५७] ।
द्विनवोत्कृतयः [२६९२] सप्तद्विनगभुजा [२७२७] श्चन्द्रषड्भानि [२७६१] ॥ १० ॥
वेदाङ्कभानि [२७९४] रसयम-
वसुनेत्रा [२८२६] ण्यष्टपञ्चवसुयमलाः [२८५८] ।
नववस्वष्टभुजा [२८८९] नव-
शशिनन्दयमा [२९१९] गजाब्धिनवदस्राः [२९४८] ॥ ११ ॥
नगसप्ताङ्कभुजाः [२९७७] कृत-
ख[ख]रामाः [३००४] शशिगुणाभ्रहव्यभुजः [३०३१] ।
सप्तविशिखाभ्ररामा [३०५७]-
स्त्रिनागखगुणा [३०८३] नगाभ्रशशिरामाः [३१०७] ॥ १२ ॥
भूगुण[कु]गुणा [३१३१] जलधी-
ष्वेकगुणा [३१५४] रसधराधरैकगुणाः [३१७६] ।
[स्वरनवकुगुणाः (३१९७) सप्त-
प्रकृतिपुष्करा (३२१७) रसगुणदन्ताः (३२३६)] ॥ १३ ॥
विशिखविशिखाक्षिरामा (३२५५) बाहुधरित्रीधराक्षिहव्यभुजः [३२७२] ।
क्रमपरिपाट्या जीवाश्छिद्रस्तम्बेरमद्विगुणाः [३२८९] ॥ १४ ॥

---

Text of Ms. A :

[10] वदोष्टेषुधमाः शशिनोभ्रांभुजा तगेषुरसयमलाः
द्विनववृपत्तपः सप्तद्विनगभुजाः चंद्रषड्भानि

[11] वेदांकभानि रसयम । वस्छनेत्रान्पष्टपक्षबहुयमलाः
नववस्वष्टभुजा नवशशिनंदयमा मजाब्दिनवदस्राः

[12] नबसप्तांकभुजाः कृतखरामाः शशिगुणाभ्रहव्यभुजः ।
सप्तविशिस्वाभ्ररामास्त्रिनागखगुणा नवाभ्रशशिवामाः

[13] भुगुणगुणा जलयीष्टेकगुणा रसधराधरैकयुणाः ।
unindicated gap

[14] विशिखविशिखाक्ष्माम । वाहुवांहुधरित्री धराक्षिहव्पभुजः :
क्रमपरिपाद्या जीवाछिद्रस्तंभेरमद्विगुणाः

Ms. B : 11 d मजाब्दि०

शरखसुरा [३३०५] [नख]देवा [३३२०]
वेदत्रिसुरा [३३३४] नगाब्धिगुणरामाः [३३४७]।
खाङ्गत्रिगुणा [३३६०] भूनग-
नाकगृहा [३३७१] नेत्रनागगुणरामाः [३३८२] ॥ १५ ॥
शशिनन्दाग्निगुणा [३३९१] [नभ-
खाब्धिगुणा (३४००) गजव्योमाब्धिहुताशाः (३४०८)।
तिथिजलरामाः (३४१५)] चन्द्र-
द्व्यब्धिगुणा[1] [३४२१] रसकराब्धिहव्यभुजः [३४२६] ॥ १६ ॥
खाग्निसमुद्रहुताशा[३४३०]स्त्रित्र्यब्धिगुणाः [३४३३] शराग्निकृतरामाः [३४३५]।
सप्तगुणवेदरामा [३४३७] नगगुणवेदाग्नयो [३४३७] लिप्ताः ॥ १७ ॥

[अर्धज्या-विकलाः]

आसां विकलास्तिथयो [१५]
नन्दभुजाः [२९] क्वब्धयः [४१] पयोदशराः [५०]।
रसविशिखाः [५६] सप्तशरा [५७]
ऽग्निशरा[५३]स्त्रिकृताः [४३] शराक्षोणि [२५] ॥ १८ ॥

---

Text of Ms. A.

[15] शरखसुरदेवा वेदत्रिसुरा नगाब्दिगुणरामाः ॥ ॥
खांगत्रिगुणा भूतगनाकगृहा नेत्रनागगुणरामाः
[16] शशिभंदाग्निगुणा unindicated gap
[चंद्रद्वयब्दिगुणा] रसकराब्दिहव्पमुजः ॥
[17] खाग्निसमुद्रहुत्ताशीस्त्रित्यब्दिगुणाश्चंद्रद्वयब्दिगुणा शराग्निकृतरामाः।
सप्तगुणवेदरामा नगगुणवेदाग्रयो लिप्ताः
[18] आसां विलालास्तिथयः नंदभुजाः क्वब्दियः पयोदशराः।
रसविचिशिखास्सप्तशराग्निशरास्त्रिकृताः शराक्षीणि

Ms. B: 15 b नगाब्दि° 15 c भूनग° 16 d रसकराब्दि° 17 b °द्वयब्दिगुणा।
चंद्रद्वयब्दिगुणा belongs to 16 d, and has been wrongly inserted here.

---

1. Transferred from vs. 17. See manuscript reading.

नवविशिखाः [५९] पञ्चयमाः [२५]
खकृताः [४०] पञ्चाब्धयो [४५] द्विरदरामाः [३८] ।
धृति[१८]रिषुवेदा [४५] मङ्गल-
विशिखाः [५८] पञ्चेषव[५५]स्तुरङ्गगुणाः (३७) ॥ १९ ॥
भू[१]र्नागा [८] रसबाणा[५६]
स्तत्त्वानि [२५] जलाग्नयः [३४] कुभुजाः [२१] ।
नगवेदा [४७] नन्दकृता [४९]
वसुनेत्रा[२८]ण्यग्निजलधयो [४३] दन्ताः [३२] ॥ २० ॥
विशिखशरा [५५] नेत्रशराः [५२]
कुभुजाः [२१] द्वियमा [२२] हुताशशराः [५३] ।
वेदेषवो[५४]ऽक्षनेत्रा[२५]-
ण्यब्धियमा [२४] द्वीषवो [५२] रससमुद्राः [४६] ॥ २१ ॥
अङ्गा[६]न्यग्निपृषत्का [५३]
वेदा [४] नववह्नयो [३९] ऽङ्कगुणाः[३९] ।
रूपं [१] सायकवेदाः [४५]
कुशरा [५१] गजभूमयः [१८] शराः [५] सूर्याः [१२] ॥ २२ ॥

---

Text of Ms. A :

[19] नवविशिखाः पंचयमाः टवकृताः पंचाव्दयो द्विरदरामाः ।
छ्पतेरिषुवेदा मंगलविशिखाः पक्षेषवस्तुरंगगुणाः
[20] भूनागा रसवाणास्ततत्वानि जलाग्वपः कुभुजाः
नगवेदा नंदकृतां वसुनेत्राण्पग्निजलधयो दंत्ताः
[21] विशिखशतनेत्रशरा । कुभुजा द्वियमा हुताशराः
वदैषवोक्षनेत्रण्यव्दिपमा द्वीषवो रससमुद्राः
[22] अंगान्पग्निपृषटक्विदा नववह्नयोंकगुणाः
रूपं सायकवेदाः कुशरा गजभूमयः शरास्सूर्याः

Ms. B : 19 b ठवकृताः 21 a °शराः कुभुजा 21 c वेदेषवो°

गजरामा [३८] नेत्रयमा[२२]-
स्तत्त्वानि [२५] कृताऽब्धयः [४४] कुनेत्राणि [२१]।
विश्वे [१३] [कु]भुजाः [२१] सायक-
निगमा [४५] गुणत्राहव[२३]स्तिथयः[१५] ॥ २३ ॥

खभुजा [२०] नन्दगुणा [३९] दश[१०]
त्रिशरा [५३] नन्दाऽब्धयो [४९] ऽक्षशराः [५५]।
विश्वे [१३] कुकृता [४१] ऽतिधृति[१९]-
रङ्गानि [६] गुणा [३] [नवा(९)]ऽब्धिनेत्राणि [२४] ॥ २४ ॥

सप्ताऽब्धयो [४७] धृति[१८]र्नग-
विशिखा [५७] गुणसागराः [४३] ऋतुगुणाश्च [३६]।
रसरामा [३६] रामकृता [४३]
रागेषवो [५६] वासराः [१५] कुकृताः [४१] ॥ २५ ॥

सूर्या [१२] नन्दसमुद्रा [४९]
रदा [३२] नखा [२०] वह्निचन्द्रमसः [१३]।
ईशा [११] मनवो [१४] ऽग्निभुजा [२३]
रसाग्नयो [३६] वेदसायका [५४] विधृतिः [१७] ॥ २६ ॥

वेदकृता [४४]

---

Text of Ms. A :

[23] गजरामा नेत्रयमास्तत्वानि कृताब्दयः कुनेत्राणि
विश्वे भुजास्सापकनिगमा गुणवाहृवस्तिथयः

[24] खभुजा नंदगुणा दश त्रिशरा नंदाब्दयोक्षशराः।
विश्वकुधृता अतिधृतिरंगानि गुणाब्दिनेत्राणि

[25] सप्ताब्धर्यो धृतिर्नगविशिखा गुणसागरा हृतगुणाश्च।
दन्वराम्प रामकृता रामेषवो वासराः कुकृताः

[26] सूर्या नंदसमुद्रा रदा नखा व। ह्लेचंद्रमृसः ॥
ईशा मनवोग्निभुजा रसाग्नयो वेदसायका विधृतिः

Ms. B : 24 b नंदाब्दयो 24 d गुणाब्दि° 26 d वेदसायक। विधृतिः

[उत्क्रमज्या-कलाः]

विपरीताः खं [०] भू[१]र्वेदा [४] नगा [७] रुद्राः [११] ।
अष्टि[१६]र्नेत्रभुजा [२२] नवनेत्रा[२९]ण्यगवह्नयो[३७] विशिखवेदाः[४५] ।। २७ ।।
पञ्चशराः [५५] षड्ऋतवो [६६]
नगमुनयो [७७] नन्दकुञ्जरा[८९]स्त्रिदशाः [१०३] ।
नगरुद्रा [११७] रदचन्द्रा [१३२]
वसुमनवो [१४८] वेदरसचन्द्रा [१६४] ।। २८ ।।
द्व्यष्टभुवः [१८२] शून्यनखाः[२००]
खाक्षिभुजाः [२२०] खाब्धिनेत्राणि [२४०] ।
कूत्कृतय[२६१]स्त्र्यष्टभुजा [२८३]
रसखगुणा [३०६] व्योमगीर्वाणाः [३३०] ।। २९ ।।
वेदेषुगुणा [३५४] नवनग-
रामाः [३७९] शर[खा]ब्धयो [४०५] रदसमुद्राः [४३२] ।
खाङ्गाब्धयो [४६०] ऽङ्ककुञ्जर-
वेदा [४८९] धृतिसायका [५१८] गजाब्धिशराः [५४८] ।। ३० ।।
नवनगविशिखा [५७९] जलधरशश्यृतवो [६१०] गुणकृताङ्गानि [६४३] ।
रसनगरसाः [६७६] खशशधरनगाः [७१०] पृषत्काब्धिधरणिधराः [७४५] ।। ३१ ।।

---

Text of Ms. A :

[27] वेदकृत विपरीताः ह्यं भूर्वेदा नगा रुद्राः ।
अष्टिर्नेत्रभुजा नवनेत्राण्पगवह्नयो विशिखवेदाः

[28] पच्चशराष्पट्ऋतवो नगमुनयो नंदकुंजशस्त्रिदशः ।
नगरुद्रा रदंचंद्रा वसुमनवो वेदस्सचंद्राः

[29] द्व्यष्टभुवः शून्पनदवाः खाक्षिभुजाः खाव्दिनेत्ताणि ।
कूत्कृतयस्त्ताष्टमुजा रसखगुणा व्योमगीर्वाणाः

[30] वेदेषुगुणा नवनगरामाः शराव्दयो रदसमुद्राः ।
खांगाद्दयोंककुंजरवेदा धृतिसायका गजव्दिशराः

[31] नवनगविशिखा जलधृरशश्पृत्तवो गुणकृत्तांगानि ।
रसनगरसाः खशशधरनागाः पृष्टट्काव्दिधरणिधरः ।

खाष्टनगा [७८०] रसकुगजा[८१६]-
स्त्रिशरगजा [८५३] जलदनन्दवसवश्च[८९०] ।
वसुभुजनन्दा [९२८] नगरस-
बिलानि [९६७] रसखाभ्रहरिणाङ्काः [१००६] ॥ ३२ ॥

ऋत्वब्धिदिशो [१०४६] नगाष्ट-
खभुवो [१०८७] ऽङ्कनेत्र[शशि]चन्द्रमसः[११२९] ।
कुनगशिवा [११७१] विश्वा[र्का] [१२१३]
रसतत्त्वभुवः [१२५६] खखाग्निरूपाणि [१३००] ॥ ३३ ॥

वेदकृताग्निशशाङ्का [१३४४]
नवाष्टविश्वे [१३८९] शराग्निकृतचन्द्राः [१४३५] ।
ववष्टमनवो [१४८१] भतिथयो [१५२७]
ऽब्ध्यगशरचन्द्रा [१५७४] द्विबाहुरसचन्द्राः [१६२२] ॥ ३४ ॥

खनगाष्टयो [१६७०] ऽष्टभूनग-
शशिनो [१७१८] [ऽग]रसागचन्द्रमसः [१७६७] ।
नगशशिधृतयो [१८१७] ऽगरस-
द्विपशशिनो [१८६७] ऽगैकनन्दरजनीशाः [१९१७] ॥ ३५ ॥

---

Text of Ms. A :

[32] खाधृतगा रसकुगजास्त्रिशरगजी जलदनंदवसवश्च ।
वसुभुजनंदा नगरसविलानि रसखाभ्रहरिणांकाः

[33] ज्ञत्वब्दिदिजो भगाष्टखभुवोंकनेत्रं चंद्रमसः ॥ ॥
कुनगशिवा विश्वे रसतत्वभुवः खस्वाग्निरूपाणि ।

[34] वदेकृताग्निशशांका नवाष्टविश्वे श्वराग्निकृतचंद्राः
ववथमनवो भतिथयोव्दागशरचंद्रा द्विवाहुरसचंद्राः

[35] खनागाव्दयोश्वमूनगशशिनो रसागचंद्रमसः ॥
भगशशिधृतयोगरसद्विपशशिमौगैकनंदरजनीशाः ।

Ms. B : 35 a खनागाब्द°

सप्ताङ्गाङ्कभुवो [१९६७] ऽष्टकु-
खभुजा [२०१८] व्योमागशून्यनेत्राणि [२०७०]।
द्वीनभुजाः [२१२२] कृतनगशशि-
नेत्रा[२१७४]ण्यङ्गाक्षिबाहुरविपुत्राः [२२२६] ॥ ३६ ॥
अङ्कागाक्षिभुजा [२२७९] रद-
रामभुजा [२३३२] [रसगजा]ग्निनयनानि [२३८६]।
नवरामजिना [२४३९] गुणनव-
सिद्धाः [२४९३] सप्ताब्धितत्त्वानि [२५४७] ॥ ३७ ॥
द्व्यभ्रोत्कृतयः [२६०२] पर्वत-
शराङ्गनेत्राणि [२६५७] रुद्रभानीह [२७११]।
सप्ताङ्गभानि [२७६७] यमयम-
नागभुजा [२८२२] नगनगाष्टकराः [२८७७] ॥ ३८ ॥
सुरनवभुजा [२९३३] नवाष्ट-
छिद्राक्षी[२९८९]ण्यब्धिजलधिशून्यगुणाः [३०४४]।
खखकुगुणा [३१००] [रसपृषत्क-
भूरामा (३१५६) द्विशशिभुजाग्नयः (३२१२) ॥ ३९ ॥

---

Text of Ms. A :

[36] सप्तांगांकभुवोष्टकुनखभुजा व्योमागशून्पनेत्राणि ॥ ॥
द्वीनभुजाः कृत्तनगशशिनेत्राण्यंगाक्षिवाहुरविपुत्राः
[37] अंगागाक्षिभुजा रदरामभुजाग्निनयनानि ॥ ॥
नवरामजिना गुणनवसिद्धास्सप्ताब्दितत्वाति ।
[38] द्वयब्दोत्कृतयः पर्वतश्ररांगनेत्राणि रुद्रभानीह ।
सप्तांगभानि यमयमनागभुजा नगतगाष्टकराः ।
[39] सुरनवभुजा नवाष्टश्छिद्राक्षीण्पब्दिजलधिशून्यगुणाः ॥
खखकुगणा unindicated gap

Ms. B : 37 d °ब्दितत्वानि 39 b °ण्पब्दि°

नवरसरद्वाः (३२६९) पञ्चाक्षि-

रामा]ग्नय[३३२५]श्चन्द्रनागगुणरामाः [३३८१] ।

नगगुणवेदहुताशा [३४३७]

[उत्क्रमज्या-विकलाः]

विकलाः भान्य[२७]म्बुदपृषत्काः [५०] ॥ ४० ॥

वसवः [८] कुभुजाः [२१] खगुणाः [३०]

सु[रा]ः [३३] कुरामा [३१] जिना [२४] रवयः [१२] ।

पञ्चशरा [५५] नेत्रगुणा [३२]

रामा [३] नवबाहवो [२९] द्विपसमुद्राः [४८] ॥ ४१ ॥

भू[१]र्वसवो [८] ऽष्टौ [८] चन्द्रो [१]

नगवेदाः [४७] षड्भुजा [२६] अचलबाणाः [५७] ।

विंशति[२०]रिषुहव्यभुजः [३५]

कुकृता [४१] वसुवह्नयो [३८] ऽक्षभुजाः [२५] ॥ ४२ ॥

रामाः [३] कुगुणा [३१] वर्गः

सप्तानां [४९] पञ्चशराः [५५] [शशिबाणाः (५१)] ।

वेदगुणाश्च [३४] पृषत्काः [५]

सिद्धा [२४] न[व]बाहवः [२९] कुभुजाः [२१] ॥ ४३ ॥

---

Text of Ms. A :

[40] ग्नपश्चंद्रामगुणरामाः

नगगुणवेदहुताशा विकला भान्पम्बुदपृथट्काः ॥

[41] वसवः कुभुत्राः खगुणास्सुः कुरामा जिना रवयः

पंचशरा नेत्रगुणा रामा नववाहवो द्विपसमुद्राः

[42] भूर्वसवोष्टौ चंद्रे नगवेदाष्पड्भुजा अवलवाणाः

विंशतिरिषुहव्पभुजः कुकृता वसवेह्नियोक्षभुजाः ।

[43] रामाः कुगुगा वगास्सप्तानां पंचशराः

वेदगुणाश्च पृष्टट्कास्मिद्धा नवाहवः कुभुजाः ।

Ms. B : 42 b अचल०

**नवविशिखा [५९] रामभुजा [२३]**
**इलाग्नयो [३१] वह्निनयनानि [२३] ।**
**खं [०] नवचन्द्रा [१९] द्विभुजा [२२]**
**रसा [६] रदा [३२] नन्दवह्नयो [३९] ऽङ्गभुजाः [२६] ॥ ४४ ॥**
**त्रिशरा [५३] नन्दपृषत्का [५९]**
**गुणाब्धयः [४३] सायका [५] विशिखाः [५] ।**
**खकृताः [४०] कुशरा [५१] मङ्गल-**
**हव्यभुजो [३८] वसुशरा [५८] द्विशराः [५२] ॥ ४५ ॥**
**व्योमभुजा [२०] नवचन्द्राः [१९]**
**खशराः [५०] कुशरा [५१] दृगक्षीणि [२२] ।**
**त्रिकरा [२३] द्विशरा[५२]श्छिद्र-**
**प्रणिम्नगेशा [४९] इन[१२]श्चन्द्रः [१] ॥ ४६ ॥**
**अष्टिः [१६] पञ्चशरा [५५] नग-**
**बाणा [५७] ऽग्निभुजा [२३] दिशो [१०] ऽङ्कभुवः [१९] ।**
**अष्टकृता [४८] रसरामा[३६]-**
**स्त्रिकृता [४३] अचलो [७] ऽङ्काब्धयो [४९] ऽङ्गकृताः [४६] ॥ ४७ ॥**

---

Text of Ms. A :

[44] नवविशिखा रामभुजा इलाग्नयो वह्निनयनानि ।
खनवचंद्रा द्विभुजा रस रसा नंदवह्नयोगभुजाः
[45] त्रिशरवा नंदपृषट्का गुणाब्दयस्साघका विशिखाः ।
खकृताः कुशरा मंगलहव्यभुजो वसुशरा द्विशराः
[46] व्योमभुजा नवचंद्राः खशराः कुशरा दृगक्षीणि
त्रिकरा द्विशराश्छिद्रप्रनिम्नगेसा इनश्चंद्रः ।
[47] अष्टिः पंचशरा नगचाणा । ग्नेभुजा दिशोंकभुवः
अष्टकृता रसरामास्त्रिकृता अचलो रवाब्दयोंगकृताः ।

Ms. B : 45 a त्रिशखानंद° 45 b गुणाब्द° 46 a व्योममुला 47 b ग्नेभुजा
47 d रवाब्द°

नवविशिखा [५९] रसनेत्रा[२६]-

ण्यङ्गा[६]न्यङ्केषवो [५९] ऽब्धयो [४] [ऽङ्क]भुवः [१९]।

शरवेदा [४५] नवचन्द्रा [१९]

भू[१]रिन्दुशरा [५१] नगाब्धयो [४७] ऽष्टकृताः [४८] ॥ ४८ ॥

वेदशरा [५४] हव्यभुज[३]-

स्तिथयो [१५] ऽङ्कभुजाः [२९] कृताब्धय[४४]स्त्रिज्या।

[त्रिज्या]

अगगुणवेदहुताशाः [३४३७]

कलिका विकलाः समुद्रजलधयः [४४] ॥ ४९ ॥

[त्रिज्याकृतिः जिनांशज्या च]

सप्तजलखाष्टशशिधृतिशशिनः [११८१८०४७] कलिकाः शराग्नयो [३५] विकलाः।

त्रिज्याकृतिरष्टनवत्रिभुवो [१३९८′] विश्वे [१३″] जिनांशज्या ॥ ५० ॥

गणितवशगास्तु जीवाः षण्णवतिः प्रोदिताः क्रमेणैव।

करणीमूलग्रहणात्तुल्यत्वं प्रथमजीवया धनुषः ॥ ५१ ॥

---

Text of Ms. A :

[48] नववविशिखा रसनत्राण्यंगान्यकेषवोव्दयो भुवः।

शरवेदा नवचंद्रा भूरिंदुशरा नगाव्दयोष्ठकृताः

[49] वेदशरा हव्वभुजस्तिथयोंकभुजाः कृत्ताकव्दयस्त्रिज्पाः

अगगुणवेदहुत्ताशाः कलिका विकलास्समुद्रजलधयः

[50] सप्तजलखाष्टशशिपृतिशशिनः कलिकाः शराग्नयो विकलाः

त्रिज्याकृतिरष्टनवत्रिभुवो विश्व जिनांशज्या।

[51] गणितावशगास्तु जीवा ष्पगग्भवतिः प्रोदिताः क्रमेणैव

करणीमूलग्रहणात्तुल्यत्वं घष्पमजीवया धनुषः।

Ms. B : 48 b °वोब्दयो 48 d नगाब्दयोष्ट° 49 b °कब्दय° 51 b ष्पगणवतिः
51 d प्रष्यम°

[मन्दपरिधयः]

शक्राः [१४] सदलेन्दुगुणा [३१।३०]
दृगगा [७२] द्विभुजाः [२२] सुराः [३३] शिवाः [११] स्पष्टाः।
रसवेदा [४६] भागाख्या
रव्यादीनां मृदुपरिधयः ॥ ५२ ॥

[शीघ्रपरिधयः]

त्रिगुणयमा [२३३] वसुविश्वे [१३८]
शरर्तवः [६५] खोत्कृतयः [२६०] तथाक्षिगुणाः [३२]।
शैघ्रास्त्वमी परिधयो
भौमादीनां सन्ति अंशाख्याः ॥ ५३ ॥

[मन्दशीघ्रकेन्द्रे]

मन्दतुङ्गरहितो नभश्चरो मन्दकेन्द्रमथ खेचरोनितम्।
शीघ्रमत्र चलकेन्द्रमुच्यते तत्पदानि भवनैस्त्रिभिस्त्रिभिः ॥ ५४ ॥

[भुजकोटिज्ये तयोः विभिन्नरूपाणि च]

अयुक्पदे स्तो गतयेययोर्गुणौ भुजाग्रसंज्ञौ युजि येययातयोः।
भुजाग्रभागोत्क्रममौर्विकोनिता त्रिमौर्विका वेतरमौर्विका भवेत् ॥ ५५ ॥

---

Text of Ms. A :

[52] शक्रास्सदलींद्रगुणा दृगगा द्विभुजाः सुराः शिवाः स्पष्टाः
रसवेदा नागाख्या रव्यादीनां मृदुयरिधयः

[53] त्रिगुणयमा वसुविश्वे शरर्तवः खोत्कृती तथाक्षिगुणाः।
शैघ्रास्त्वमी परधयो भौमादीनां संददशाख्पाः।

[54] मंदतुंगरहितो नभश्चरो मंदकेन्द्रमथ खेचरोनितां
शीघ्रमत्र चलकेन्द्रमुच्पते तत्पदानि भवनैस्त्रिभिस्त्रिभिः।

[55] अयुक्पदे स्तो गयथेययोर्मुणौ भुजाग्रसंज्ञौ युजि येययातयोः।
भुजाग्रभागोत्क्रममौर्विकोनिता त्रिमौर्विका वेत्तरमौर्विका भवत् ॥ ॥

Ms. B : 52 b द्विमुजाः

त्रिज्याबाह्वग्रमौर्व्योः कृतिविवरपदं वेतरज्या प्रदिष्टा
बाह्वग्रज्या[त्रि]मौर्व्योर्विवरयुतिहतेर्मूलमाहुस्तयोर्वा ।
व्यस्तज्या-व्यस्तजीवाविरहितनिहतेर्यत्पदं स्यात्क्रमज्या
व्यासघ्ना व्यस्तजीवा निजकृतिरहिता मूलमस्याः क्रमज्या ॥ ५६ ॥

क्रमगुणकृतिर्विभक्ता स्वोत्क्रममौर्व्या फलं त्रिभज्योनम् ।
वाऽन्यः कोटिभुजांशैस्त्रिभाद्विहीनाद्गुणो वाऽन्यः ॥ ५७ ॥

[इष्टज्यासाधनम्]

[प्रथमविधिः]

धनुषा हृतास्त्वभीष्टा लिप्ता ज्या ज्यान्तरहताच्छेषात् ।
धनुषा हृतात्फलयुता ज्या कोटिज्या भुजज्या वा ॥ ५८ ॥

[द्वितीयविधिः]

राश्यादि दन्त[३२]गुणितं ज्या वा भागादि मौर्विकान्तरहतम् ।
खगुण[३०]हृतं लब्धयुता जीवा जीवाग्रहणमेवम् ॥ ५९ ॥

---

Text of Ms. A :

[56] त्रिज्यावाह्वग्रे मौर्व्योक्रुतिविविरपदं वेतरज्पा प्रदिष्टाः
वाह्वग्रज्पामौव्पोर्विवरयुतिहतेर्मूलमाहुस्तयोर्वा
व्योमव्पस्तजीवां विरहितानिहतेयत्पदं शाक्रमाज्पा
व्पासघ्ना व्पस्तजीवा निजकृतिरहिता मूलमस्पाः क्रमज्पाः ।

[57] क्रमणगुकृतिविभक्तांस्छोत्क्रमंमौव्पांफलं त्रिभज्पोनं ।
वान्य कोटिभुजांशैंस्त्रिभाद्विहीनाद्गुणो वान्पा ।

[58] धनुषा हृतास्त्वभीष्टा लिप्ता ज्पा ज्पान्तराहताश्छेषात्
धनुषा हृतात्फलघुगा ज्पा कोटिज्पा भुजाज्पा वा ॥

[59] राश्यादि दंतगुणितं ज्पा वा भागादिमौर्वेकर्णंरहितं
खगुणहृतं लव्दधुतां त्रीवा जीवाग्रहणमेवं ।

**Ms. B :** 59 c लब्दधुतां

[तृतीयविधिः]

वांशादि तिथि[१५]लब्धयुतं जीवा जीवान्तराहतं भक्तम् ।
तिथ्या [१५] कलादिलब्धं जीवायुक्तं गुणो वा स्यात् ॥ ६० ॥

[चतुर्थविधिः]

भागाद्यष्टि[१६]गुणं वा तिथि[१५]भक्तं मौर्विका विशेषहतात् ।
ज्याविवरात्तद्भक्ताल्लब्धयुतात् मौर्विकाप्येवम् ॥ ६१ ॥

[पञ्चमविधिः]

कृत[४]संगुणिता लिप्तास्तिथिवर्ग[२२५]हृताः फलं गुणः शेषात् ।
ज्यान्तरहताद्विभक्तात्तत्वयमै[२२५]र्लब्धयुग्गुणो जीवा ॥ ६२ ॥

[भुक्ताभुक्तज्यान्तरप्रयोगेण इष्टज्यासाधनम्]

[प्रथमविधिः]

भुक्ताभुक्तज्यान्तरदल-विकलवधात् स्वचापलब्धोना ।
युक्ता क्रमोत्क्रमज्या भुक्ता गुणकः फलं च लब्धघ्नम् ॥ ६३ ॥

---

Text of Ms. A :

[60] वंशादि तिथिलव्दयुतं जीवा जीवान्तराहतं भक्तं ।
षष्टया कलादिलव्दं जीवायुक्तं गुणो वा स्यात् ।
[61] भागाद्यष्टिगणं वा तिथिभक्तं मौर्विका विशेषहृत्तात्
ज्याविचरात्तद्भक्तालव्दयुत्ता मौर्विकाप्येवं ।
[62] कृत्तसंगुणिताल्लिप्तास्तिथिवर्गहृताः फलं गुणः शेषात् ।
ज्यांतरहिताद्विभक्तात्तत्वयमैर्लव्दयु–णा जीवा ।
[63] भुक्ताभुक्तज्यांतरदलविकलवधात्स्वचाषलव्धोना
युक्ता क्रमोत्क्रमज्या भुक्ता गुणकः फलं च लव्दो वं ।

Ms. B : 60 a °लव्दयुतं 60 c °लब्दं 61 c ज्याविवरा° 61 d °लव्दद्युत्ता°

[तदेव रूपान्तरेण]

विकलाच्चापाप्तदलं ज्यान्तरहतमृणधनं गुणे भुक्ते ।
तद्धनुषाप्तं हीनं युक्तं विकलाहतेन विकलज्या ॥ ६४ ॥

[द्वितीयविधिः]

अगतातीतज्यान्तरदलं विकलहतं स्वधनुषाप्तयुतम् ।
ज्यान्तरदलं तदूनो युक्तो भुक्तो गुणो भोज्यम् ॥ ६५ ॥
धनुषाप्त-भुक्तजीवाघाते लब्धं सरूपकं दलितम् ।
लब्धघ्नविवरहतं [च] संशोध्य नियोज्य विक[ल]ज्या ॥ ६६ ॥

[तस्य एव द्वितीयं रूपम्]

विकलचापयुतिविवराहताद्द्विगुणचा[प]हृताप्तवियुग्युतः ।
गतगुणो गुणको वि[क]लो हरस्स्वधनुराप्तसमो विकलागुणः ॥ ६७ ॥

[तृतीयं रूपम्]

विकलकृतिश्चापहृता विकलयुता चापहृद्विवरनिघ्ना ।
दलिता शोध्या योज्या गतगुणे विकलहृते धनुर्हृज्ज्या ॥ ६८ ॥

---

Text of Ms. A :

[64] विकलाश्चापाप्तदलं ज्यांतरहतमृणधनं गुणे भक्ते
तद्धतमाप्तहीनं युल्कं विवराहतेन विकलज्या ।

[65] अगतातीतज्यांतरदलं विकलहते स्वधनूराप्तयुतं ।
ज्यांतरदलं तदूनौ युक्तो भुक्तो गुणो भोज्पं ।

[66] धनुषाप्तभुक्तजीवोघाते लव्दं सरूपकं दलितं ।
लव्दघविवरहतं संशोध्प नियोज्प विकज्पा ॥ ॥

[67] विलचापयुत्तिविवराहताद्दिगुणचाहृताप्तवियुग्पुतः ।
गतगुणो गुणिको विले हरस्वधनुराप्तसमो विकलाद्गुणः ।

[68] विकलकृतिश्चाप्तहृत्ता चिकलयुत्ता वापहृद्विवरनिघ्ना
दलिता शोध्पा योज्पा गत्तगुणविकलाहत्तो धनुर्हृज्पा ।

Ms. B : 66 b लब्दं 67 a विकल°

[चतुर्थं रूपम्]

विवरा[र्ध]हतसमेतो विकलश्चापांशकस्तदूनयुतः ।
भुक्तगुणो हीनयुतो [भुक्त]तरजीवा[न्तरार्ध]हत्या ॥ ६९ ॥
[लब्ध]स्स्वार्धसङ्गुणो वसु[८]गुणो[ऽपि तद्] दृढो वाच्यः ।
विकलधनुरंशशशि[१]युतविवरार्धवधोनयुग्गता जीवा ॥ ७० ॥
द्विघ्नाऽन्तरयुतहीना तद्वर्गदृढान्तरवसु[८]लवः ।
[विकलश्चापांशगुणो विवरहृतो वा विकलजीवा] ॥ ७१ ॥

[पञ्चमं रूपम्]

विकलदलचापयोगाज्ज्यान्तरनिहतात् स्वचापलब्धहृतात् ।
विकलाच्चापविभक्तादाप्तं लब्धाद्युतं राशिः ॥ ७२ ॥
भुक्तज्यान्तरसंयुतिविवरहताद्विकलतस्स्वचापाप्तम् ।
तद्युतहीनं विवरेण राशितद्विवरयुतिविकलजीवम् ॥ ७३ ॥

---

Text of Ms. A :

[69] विवराहतसमेतौ विवरश्चापांशकस्तदूनघुतः
भुक्तगण [unindicated gap]

[70] स्स्वार्धसंगुणो हीनः युक्तातरजीवाहत्या वसुगुणो दृढो वा ज्या ।
विकलधनुरंश्रशशियुतविवरद्विवधोनयुग्घता जीवा

[71] द्द्विघांतरघुतहीना तद्वर्ग्दृठांतरविचरवसुलवः ॥ ॥

[72] पिवरदलचापयोगाज्ज्यांतरनिहतात्स्ववापलब्दिघुतात्
विकलश्चापविभत्कादाप्तं लब्दा । घुतं राशिः ।

[73] भुक्तज्यांतसंयतिविवरहताद्विकलतस्खचापाप्तं ।
तघुतिहीनं विवरेण राशितद्विवरमथ विकलजीवं ।

Ms. B : 71 b °विवर° 72 a पिवरदभचाप°

[षष्ठं रूपम्]

भुक्तज्याऽन्तरविहृता त्रिस्थाऽन्त्या ह्यगणिताऽऽद्यसंस्थे द्वे ।
रूपार्धेन युतोने मध्यकृतिर्वाऽविहीनयुता ॥ ७४ ॥
सुदृढो धनुषावाप्तविकलाद्यत्प्रापितं शोध्यम् ।
देयं प्रथमे तत्कृतिसुदृढान्तरविवरहतिभेदः ॥ ७५ ॥

[सप्तमं रूपम्]

गतमौर्वी विवरहृता फलवर्गः फलवियुग्युतो युक्तः ।
पादेन दृढो विकला[च्चा]पाप्तविहीनसंयुतफलस्य ॥ ७६ ॥
अर्धोनयुतस्य कृतिस्तद्दृढविवरं समभिनिघ्नम् ।
अर्धेन गतागतयोर्गुणयोर्विवरस्य विकलज्या ॥ ७७ ॥

[अष्टमं रूपम्]

सैकविकलार्धताडितविवरोनयुतो गतो गुणोऽभिहतः ।
विकलेन विकलजीवा विकलं रूपात्समुद्दिष्टम् ॥ ७८ ॥

---

Text of Ms. A :

[74] भुक्तज्यांतरविहृतात्त्रिस्छांत्पा द्विगुणित्ताद्यसंछे द्वे
रूपार्धेन घुतोने मध्यकृतिर्वा विहीनयुता ।
[75] स्वदृढ्ये धनुषावाप्तं विकलाद्रूपान्वितं शोघ्यं
देयं प्रथमे तत्कृत्तिसुदृढांतमौर्विकाहतिभेदः ।
[76] गतमौर्वी विवरहृत्ता फलवर्गः फलवियुग्पुतो युक्तः
पादेन दृढो विकलापाप्तविहीमसंयुतफलस्प ।
[77] अर्धोतयुत्तस्प कृतिस्तद्दृढविवरं समाभेनिघ्नं
अर्धनागनागतयोगुणयोर्विवरस्प विकलज्पा ।
[78] सैकविकलावताडितविवरोनयुतो गत्तो गुणोभिहत्तः ।
विकलेन विकलजीवा विकलं रूपात्समुद्दिष्टं ।

Ms. B : 77 c °नगताग°

रूपविकलांशभक्तं वा विशोध्य संयोज्य [विकलज्या] ॥ ७९ ॥

[नवमं रूपम्]

चापविकलांशभक्तो भुक्तगुणश्चापविकलयोगदलात् ।
विवरहृताच्चापहृतादाप्तेन युतो विकलजीवा ॥ ८० ॥

[ज्यान्तर-साधनम्]

सैकविकलार्धभक्तं रूपाद्विकलाप्तसमभिनिघ्नस्य ।
विकलगुणस्यान्तरकं गतमौर्व्या मौर्विकान्तरकम् ॥ ८१ ॥

[गतज्या-साधनम्]

चापदलविकलदलयुतिविवरवधाच्चापभाजितालल[ब्धम्] ।
विकलज्या-चापवधाद्विकलहृता[द्यु]तोनितं गतज्या स्यात् ॥ ८२ ॥

**[इष्टधनुःसाधनम्]**

[प्रथमविधिः]

या ज्या ज्यातः शुद्धा तत्संख्याताडितधनुर्युक्तम् ।
विकलशरासनघाताज्ज्यान्तरलब्धेन चापं स्यात् ॥ ८३ ॥

---

Text of Ms. A :

[79] रूपविकलांशभक्त वा विशोध्प संयोज्पं ॥ ॥

[80] चापविकलांशभक्ता भुक्तगुणाश्चापविकलघोगदलात् ।
विवरहृताच्चापहृतादाप्तेन युतो विकलजीवा ॥

[81] सैकविकलार्धतक्तं रूपाद्विकलाप्तसमभिनिघ्नस्प
विकलगुणस्पांतरकं गेतमौर्व्पा मौर्विकान्तरकं ।

[82] चापदलविकलदलयुतिविवरवधाच्वापभाजितालल¯
विकलज्पार्धापवपाविकलहृत्तातोनितगतज्पा स्पात् ॥ ॥

[83] या ज्या ज्यातः शुधत्तत्संख्पात्ताख्याडिता धनुर्चुक्तं ।
विकलशरासनघाताज्जांतरलब्देन त्वापस्स्पात् ॥

Ms. B : 82 b °चापभीजि° 83 d ° लब्देन

[द्वितीयविधिः]

ज्यां प्रोज्झ्य वासर[१५]कृतिः शेषगुणा ज्यान्तराब्धि[४]हृतिभक्ता ।
फलयुक्सपादरसशर[५६$\frac{१}{४}$]शुद्धसंख्याहृतिश्चापम् ॥ ८४ ॥

[भुक्ताभुक्तज्यान्तरप्रयोगेण इष्टधनुःसाधनम्]

[प्रथमविधिः]

द्वि[२]गुणभुक्तज्यान्तरयुतहीनाऽऽद्योऽपरोऽवशेषयुता ।
भुक्तज्याऽम्बक[२]गुणिता ज्यान्तरभक्तौ स्फुटौ च विवरयुतेः ॥ ८५ ॥
आद्यर्धद्विगतापरराश्योर्मूलं तदाद्यदलयोगश्च ।
विवरं शशाङ्क[१]हीनं चापगुणं विकलचापं स्यात् ॥ ८६ ॥

[द्वितीयविधिः]

भुक्ताभुक्तज्यायुतिदलचापवधो भवेत्प्रथमसंज्ञः ।
चापकृतिविकलघातोऽपरः स्फुटौ ज्यान्तरार्धेन ॥ ८७ ॥
भक्तावाद्यर्धकृतिद्वितीयविवरैक्यपदं यत्स्यात् ।
तत्प्रथमार्धान्तरमिह चापं विकलं भवत्येव ॥ ८८ ॥

---

Text of Ms. A :

[84] ज्यां प्रोज्ज्य वासरकृतिः शेषगुणाज्ज्यांतराव्दिहृतिभत्का
फलपुक्सणदशरशुद्धस्पासंख्पयाहृतिश्चायं ।

[85] त्रिगुणतुक्तज्यांत्तपुत्तहीनादद्योपरोवशेषयुत्ता ।
भुक्तज्पांतरगुणित्ता ज्यांतरभक्तो स्फुटौ च विवरयुत्तेः ।

[86] आद्यवद्विगत्तापरराश्पोर्मूलं त्तदाद्यदलयोगश्च
विवरं सशांकहीनं चापगुणं विकलचापं स्पात् ।

[87] भुक्ताभुक्तज्पाघुतिदलचापवयो भवेत्प्रथमसंज्ञः
चापकृतिविकलघातोपरः स्फुटो ज्यांतरार्धेना ॥ ॥

[88] भक्तावाद्यर्धयुतिद्वित्वीयविवरैकयतदं स्पात्
तत्प्रथमाघ्पांतरमिह चापं विकलाद्भवत्पेवः ।

[तृतीयविधिः]

भुक्तज्याऽन्तरभक्ता फलमृणधनं तत्स्वसंगुणं कृत्वा ।
फलवर्गे पादयुते फलयुतहीने द्विसंगुणं विकलम् ॥ ८९ ॥
विवराप्तं चातः पदमेतत्फलविवरमर्धोनम् ।
स्वमभीष्टचापगुणितं क्रमोत्क्रमाद्विकलखण्डधनुः ॥ ९० ॥

[चतुर्थविधिः]

विवरार्धोनयुताऽऽद्यो भुक्तज्या विवरहृत्ततो वर्गात् ।
विवरार्धहृत्विकलवियुग्युतान्मूलमाद्यतद्विवरम् ॥ ९१ ॥
वा जीवान्तरदलहृतविकलकृतिविवरतः पदं युक्तम् ।
हीनं प्रथमात्तत्फलविवरं चापाहृतं चापम् ॥ ९२ ॥

**[नीचोच्चविधिना सूर्याचन्द्रमसोः स्पष्टीकरणम्]**

[भुजाफल-भुजान्तरफले]

परिधिघ्नभांशभाजितभुजकोटिज्ये तयोः फले भवतः ।
रविशशिदोःफलचापं मेषतुलादिस्थनिजकेन्द्रे ॥ ९३ ॥

---

Text of Ms. A :

[89] भुक्ताज्यांतरभक्ता फलमृणधनं तद्विसंकुणं कृत्वा
फलवर्गे पादयुते फलघुतहीने द्विसगुणाद्विवालं ॥ ॥

[90] विवराप्तं चातः पदमेतत्फलविवरमर्धोनं ।
समभीष्टचापगुणितं कमात्क्रमाद्विकलखंडधनुः ॥ ॥

[91] विवरार्धोनघुताद्यो भुकूज्पा विवरहृत्ततो वर्गात्
विवरविकलांशहृतिवियुग्पुतान्मूलमाद्यतद्विवरं ।

[92] वा जीवांतरदलाहृत । विकलस्छिरचिवरतः पदं युत्कं
हीनं दलनातत्फलविवरं चापाहृतं चापं ।

[93] परिधिघ्नमांश्रभाजितभुजकोटिज्पे तयोः फलं भवतः
रविशशिदोःफलचापं मेषतुलादिस्छनिजकेन्द्रे ॥

Ms. B : 89 d द्विसंगुणा द्विवलं　93 a °माजितमुज°

शोध्यं क्षेप्यमिनेन्द्वोः स्पष्टौ स्तः सूर्यफलकलाभिहताः ।
गतयोऽर्कभोगसंयुतभगणकलाभाजिताः फलं रविवत् ॥ ९४ ॥

[चरफलम्]

भानोश्चरार्धनिहता गतयो ग्रहाणां खाभ्राङ्गस्वर्ग[२१६००]विहृताः फलहीनयुक्ताः ।
मेषादिगे दिनपतावुदयास्तसंस्थे जूकादि[गे] तु खचराः सहिता वियुक्ताः ॥ ९५ ॥

[सूर्याचन्द्रमसोः स्पष्टा गतिः]

[परिभाषा]

ह्यस्तनाद्यतनयोर्विशेषजा सूर्ययोः स्फुटगतिर्गताऽगता ।
श्वस्तनाद्यतनयो रवेर्विधोरेवमिष्टखचरस्य वा भवेत् ॥ ९६ ॥

[जीवाभुक्तिः]

मन्दतुङ्गगतिवर्जिता गतिः केन्द्रभुक्तिरिह खेचरस्य सा ।
दोर्गुणान्तरहताऽऽद्यजीवया भाजिता स्वमृदुवृत्तसंगुणा ॥ ९७ ॥
भगणांश[३६०]हृता फलं गतौ निजकेन्द्रे मकरादि[के] क्षयः ।
धनमिन्दुगृहादिके स्फुटा श्रवणाग्रे खलु वा गतिस्तदा ॥ ९८ ॥

---

Text of Ms. A :

[94] शीघ्य क्षेपमिनेंद्वोः स्पष्टौ स्तस्सूर्यफलकलाभिहताः
गतयोर्कभोरासंयुततगणकलाभाजिताः फलं रविवत् ॥ ॥

[95] भानोश्चरावनिहतो गतयो ग्रहाणां खभ्रांगवर्गविहृताः फलहीनयुक्ताः
मेषादिगे दिनपतावुदयास्तसंस्छा जूकादि तु खचरास्सहिता विघुत्काः ॥ ॥

[96] ह्यस्तनाधतनयोर्विशेषजा सूययोः त्फुदृगतिर्गतागतात्
स्वस्तनाद्यतनयो रवेर्विधोरेवमिष्टस्ववरस्प वा प्तवेत् ।

[97] मंदतुंगतिवर्जिता गतिः केम्द्रभुक्तिरिह रवेखस्प सा ।
दोर्गुणांतरहताद्यजीवया भाजिता स्वष्टदुवृत्तसंगुणा ॥

[98] भगणांशहृताः फलं गतो निजकेन्द्रे मकरादि क्षयः
धनमिंदुगृहादिके स्फुटा श्रवणाग्रे खालु वांतमानिका ।

Ms. B : 97 b खेखस्प

[कर्णभुक्तिः]

निजकेन्द्रगतिः समाहृता त्रिभमौर्व्या मृदुकर्णभाजिता ।
स्वमृदूच्चगतिः फलान्विता ग्रहभुक्तिस्त्वथवा परिस्फुटा ॥ ९९ ॥

[करणविधिना जीवाभुक्तिः]

भुजभोज्यगुणान्तरं रवेः स्वर[७]निघ्नं द्विस्वरेन्दु[१७२]भाजितम् ।
शशिनोऽङ्कजला[४९]हतं हृतं खकृतै[४०]र्भुक्तिफलं कलादि वा ॥ १०० ॥

[चंद्रस्य जीवाभुक्तिः]

निजकेन्द्र[गतौ] जह्या[दा]दौ [भु]जभोज्यधनुर्युगशकले ।
धनुषा ग्राह्या जीवा विषमपदे व्युत्क्रमात्क्र[मा]द्युग्मे ॥ १०१ ॥
धनुयुगले धनु[ष]हृते भुजभोज्यगुणान्तराभ्यस्ते ।
तन्मध्यशुद्धमौर्वीयुतिः परिधिसङ्गुणा हृता भांशैः ॥ १०२ ॥
लब्धधनुः स्वमृणं वा गतौ स्फुटा ह्यस्तनाद्यतनयान्तः ।
पादान्तस्थे केन्द्रे क्रमजीवा व्यत्ययात्पदे ओजे ॥ १०३ ॥

---

Text of Ms. A :

[99] निजकेन्द्रगतिस्समाहृत्त त्रिभभौव्पा मृदुकर्णभाजिता ।
स्वमृदूच्चगतिः फलान्विता ग्रहभुक्तिष्टप्टावा परिस्फुदा ।
[100] भुजभोज्पगुणांतरं रवेः । शरनिघ्नं द्विशरेन्दुभाजितं ।
शशितोंकजलाहतं हृतं खकृतैर्भुक्तिकलं कलादि वा ।
[101] निजकेन्द्र जह्यादोज भोज्यधनुर्गुणशकलं ।
धनुषा ग्राह्या जीवा बिषमपदे व्पुत्क्रमात्क्राद्युग्मे ।
[102] धत्ववले धनुहृते निजमोज्यगुणातराभ्यस्ते ।
तन्मध्पशुद्धमौर्वीयुतिः यरिधिसंगुणा हृता भांशैः ॥ ॥
[103] लब्दधनुस्वमृणं वा गतां स्फुटं हृथस्तनाद्यतनयांतः
भार्तावस्छे कंद्रकेन्द्रे क्रकतीवा व्पत्पयांत्पमेदोजे ।

Ms. B : 99 d परिस्फुटा　102 d परिधि॰　103 b गतौ　103 c ॰कंद्रकेन्द्रे

यद्युग्मेऽव्यस्तज्या [पृथक्] पृथक् च साध्ये फले तयोः ।
व्यस्तं धनमृणमेतत् खण्डभवं गतिविवरे ।
उक्त[क्रम]व्यस्तज्याविधिना ग्रहभुक्तिस्स्फुटीकार्या ॥ १०४ ॥

सूर्याचन्द्रमसोः स्फुटीकरणविधिः प्रथमः ।

---

Text of Ms. A :

[104] यद्युग्मे व्यस्तज्पा पृथक्व साध्ये फलेत्तासु
व्पस्तं धनमृणमेतत् ढंडभवं गता विवरा ॥
उक्तव्पत । यविधिद्दा ग्रहभुत्किस्फुटीकार्या ॥ ॥

सूर्यचंद्रमसोः स्फुटीकरणविधिः प्रथमः ॥ ॥

## 2. स्वोच्चनीचग्रहस्फुटीकरणविधिः

[भौमगुरुशनीनां स्फुटीकरणम्]

प्राग्वन्मन्दफलं खगाच्छकलितं मध्ये तदूनाच्चला-
च्छैघ्रार्धं च मृदुस्फुटे धनमृणं केन्द्रेऽजजूकादिके ।
तस्मान्मन्दफलं ग्रहादविकलं मध्ये तदूनात्पुन-
स्तद्वच्छीघ्रफलं च तत्र खचरे कृत्स्नं स्फुटोऽसौ भवेत् ॥ १ ॥

[बुधशुक्रयोः स्फुटीकरणम्]

ग्रहोनात्स्वचलात्कृत्स्नं फलं शैघ्रं ज्ञशुक्रयोः ।
मान्दं चैव स्वमन्दोनात्सकलं मध्यमाद् ग्रहात् ॥ २ ॥

[शीघ्रकर्णमन्दकर्णसाधनविधयः]

अग्राफलत्रिगुणयोर्विवरैक्यमुक्तं केन्द्रे कुलीरमकरादिगतेऽत्र कोटिः ।
तद्वर्गबाहुफलवर्गयुतेः पदं स्यात्कर्णो भुजाफलहतत्रिगुणस्य हारः ॥ ३ ॥

---

Text of Ms. A :

[1] प्राग्वन्मंदफलं खगाश्छकलितं मध्पे तदूनाश्चला-
श्छेघ्राधं च मृदुस्फुटं धभसृणं कंद्रेजजूकाधिके ।
तस्मान्मंदफलं ग्रहादबिकलं मध्पे तदूना पुन-
स्तद्वियुक्छीघ्रफलं च तत्र खचरे कृत्स्नं स्फुटोसौ भवेत् ॥ ॥

[2] ग्रहोनात्स्ववलात्कृत्स्नं फलं सैःघ्रं ज्ञशुक्रयोः
मांदवैव स्वमंदोनात्सकलं मध्ययाङ्गुहात् ।

[3] अग्राफलत्रिगुणयोर्विवरैक्यमुक्तं केन्द्रे कुलीरमकरादिगतेत्र कोटिः
तद्वर्गवाहुफलवर्गयुतेः फदं स्पात्कर्णो भुजाफलहतत्रिगुणस्प हारः ।

Ms. B : 1 d भावेत् 2 b सैघ्रं 2 c मांदचैव

लब्धस्य चापमिह शीघ्रफलं प्रदिष्टमेवं मृदुश्रवणको द्युचरस्य साध्यः ।
बाह्वग्रयोः स गुणकस्त्रिगुणश्च हारस्ताभ्यामसावसकृदेवमनिश्चलत्वम् ॥ ४ ॥

स्फुटकोटयग्राफलकृतिविवरान्त्यफलगुणकृतियुतेर्मूलम् ।
कर्णः स्यादथवा भुजाफलेन विनियोजना नात्र ॥ ५ ॥

तद्युतिविवरहृतिः परफलगुणवर्गसंयुता वा स्यात् ।
कर्णकृतिस्तन्मूलं कर्णो दोःफलगुणं विनैवायम् ॥ ६ ॥

भुजफलरहिताग्रया हता वा युतिरनयोर्विवरं तदन्वितोना ।
नयन[२]हतकृती पदे तयोर्वा भुजफलकोटिकयोः श्रुती प्रदिष्टे ॥ ७ ॥

भुजाफलाग्रे स्वविशेषताडिते धनक्षयाह्वे स्वकृतौ बधस्तयोः ।
बधाद्द्विनिघ्नात्स्वविशेषवर्गितात् प्रयोजनान्मूलमुशन्ति वा श्रुतिम् ॥ ८ ॥

---

Text of Ms. A :

[4] लव्दस्प चापमिह श्रीघ्रफलं प्रदिष्टमेवं षृदुश्रवणको द्युचरस्प साध्पः
वाह्वग्रयोस्सगुणकस्त्रिगुणश्च हारस्ताभ्पामसाकसकृदेवमृनिश्चलत्वे ।

[5] स्फुटकोघग्राफलकृतिविवरांत्पफलगुणकृतियुतेर्मूलं ।
कर्णस्स्पादथवा भुजाफलेन विनियोजना नात्र ॥

[6] तघुतिर्विवरहृतिः परफलगुणवर्गसंयुता सा स्पात् ।
कर्णकृतिस्तन्मूलं कर्णो दोःफलंगुणिविनैवाघं ।

[7] भुजफलरहिताश्रया हता वा युतिः नयोर्विवरं तदन्वित्तोनेना
नपनहतकृती पदे तयोवा नुजफलकोटिकयोः श्रुती प्रविष्टे ।

[8] भुजाफलाश्रेष्टविसेषताडिते धनक्षयाह्वे स्वकृतौ वधौ तयोः
वधाद्विनिघ्नात्स्वविशेषवर्गिता प्रयोजनान्मूलमुषंति वा श्रुति ।

Ms. B : 6 d दोःफलं° 7 c तयोर्वी° 7 d °तुजफल° 8 c °र्वागिती 8 d श्रुति

दिघ्नाग्राफलताडितस्त्रिभगुण: केन्द्रे मृगादिस्थिते
व्यासार्धान्त्यफलज्ययोः कृतियुतौ देयः कुलीरादिगे ।
हेयः स्याच्छ्रवणः पदं परफलव्यासार्धकृत्योर्युतेः
व्यासाप्ते श्रुतिवर्गतश्च फलयोः स्यादन्तरेऽग्राफलम् ॥ ९ ॥

भुजफलाग्रसमासहते तु ते निजविशेषहताग्रभुजाफले ।
धनमृणं क्र[म]शो हतयोस्तयोः पदमुशन्ति तयोरथवा श्रुती ॥ १० ॥

[ग्रहाणां स्फुटगतिसाधनम्]

एवं खेचरमेकमेव गणयन् श्वश्चाद्य एव स्फुटं
भुक्तिः स्याद्विवरावशिष्टमनयोः स्पष्टाऽधिके चेत्परे ।
वक्राख्याऽद्यतनेऽथवा ग्रहगतेः साध्यं फलं पूर्ववत्
मान्दं तद्दलसंस्कृतामपनयेत्तच्छीघ्रभुक्तेः पृथक् ॥ ११ ॥
केन्द्रभुक्तिरवशेषमुच्यते तां स्वशीघ्रफलधन्वभोज्यया ।
जीवया शशिरसैः [६१] प्रताडयेत् भाजयेच्च चलकर्णसंख्यया ॥ १२ ॥

---

Text of Ms. A :

[9] द्विघ्नाग्राफलताडितास्त्रिभगुणः केंद्रे षृगादिस्छिते
व्यासावांत्पफलज्पयोः कृतिपुतौ दयेः कुलीरादिगे
हियस्स्पाक्रवणात्पदं फरफलं व्यासार्घकृत्पोर्घुतेः
व्यासस्तं श्रुतिवर्गतः च फलयोः स्पादंतरेग्राफलं ।
[10] भुजफलाग्रसमासहते तु ते निजविशेषहताग्रमुजाफले
धनमृणं कसो हतयोः पदमुषंति तयोरथवा श्रुती
[11] पवं खेचरमेकमेव गणयश्छश्चाघदेवं स्फुटं ।
भुक्तिस्पाद्विवतावशिष्टमुन्नयोः स्पष्टादिकेश्चदरा
वक्राखपाघतनेथवा ग्रहगतेस्साध्पं फलं पूर्वव-
न्मांदं तद्दलसंस्कृतामपनयेतश्छीघ्रमुक्तेः पृथक् ।
[12] केन्द्रभुक्तिरवशेषमुच्पते तां स्वशीघ्रफलंधन्वभोज्पया
जीवपा शशिरसैः प्रताडयेद्भाजयेचच चलकर्णसंखपया ।

Ms. B : 9 a केंद्रेष्टगा° 11 a पवं 11 d °नयेत्तश्छी°

लब्धमत्र निजकेन्द्रभुक्तितः शोधयेद् गतिफलं धनक्षयः ।
व्यस्तशुद्धिविकलं दलीकृतं स्यान्मृदुस्फुटगतौ ततः पुनः ॥ १३ ॥
प्रोक्तवन्मृदुफलं समस्तकं मध्यमग्रहगतौ यथोदितम् ।
तद्विहीनचलतुङ्गभुक्तितः शीघ्रजं च निखिलं स्फुटं भवेत् ॥ १४ ॥
शोधनीयमपि नो यदा गतेः शुध्यतीह चलकेन्द्रजं फलम् ।
भुक्तिमेव फलतस्तदा हरेद् वक्रभुक्तिरवशिष्टकं भवेत् ॥ १५ ॥

[मन्दशीघ्रफलसाधनविधयः]

मंदग्रहोनमथवा विचलश्च खेटः केन्द्रं ग्रहे धनमृणं [स्वफलं विधेयम् ।
मान्दं फलं क्रियतुलादिगते स्वकेन्द्रे शीघ्रोच्चसाधितफलं तु तद]न्यथोक्तम् ॥ १६ ॥

भुजाफलं वाऽयुजि साधयेद्गताद्युजि त्रिभज्योत्क्रमजीवयोः फले ।
क्षयं क्षयस्वे च धनं धनक्षयौ ग्रहेऽथवा केन्द्रपदक्रमाद् भवेत् ॥ १७ ॥
क्षयस्वं [हि] ग्रहे कुर्यात् फलं जीवान्तरं भवेत् ।
फलयोर्वा विशेषोत्थं व्यत्यासाच्च चले भवेत् ॥ १८ ॥

---

Text of Ms. A :

[13] लव्दमत्न निजकेंद्रभुक्तिवः शोधयेद्गत्तिफलं धनक्षयः
व्यस्तशुद्धिविकलं दलीकृतं स्पान्मदुस्फुटगतौ ततः पुनः ।
[14] प्रोक्तवन्मृदुफलसमस्तकं मध्पमग्रहयुतौ यष्ठोदितं ।
तद्विहीनचलकेंद्रयुक्तितशीघ्रजं चानेखिलं स्फुटं भवेत् ।
[15] शोधनीयमघिनो पदा गतेः शुद्धयतीह चलकेन्द्रजं फलं ।
भुक्तिमेव फलतस्तदा हरेद्वक्रभुक्तिरवशिष्टकं भवेत् ।
[16] मंदग्रहोनमथवा विचलश्च खेठः केंद्रं ग्रहे धनसृणं ---
--- मन्पश्योक्तं ॥ ॥
[17] भुजफलं वायुजि साधृयेद्गताद्युजि त्रिभज्पोत्क्रमतीवयोः फलैः
क्षये क्षयस्वे च धते धनक्षपौ ग्रहेथवा केंद्रपदक्रमाद्भवेत् ।
[18] क्षयरवं ग्रहे कुर्यात्फलं जीवांतरं भवेत
फलयोर्वा विशेषोत्पं व्पत्यासाच्च चलो भवेत् ।

Ms. B : 15 d भग्वेत्

स्वोच्चनीचपरिवर्तशेषकाद् भूदिनैः कृत[४]हतात्पदानि तु ।
शेषकात् त्रि[३]गुणिताद् गृहाद्यतः पूर्ववच्च भुजकोटिसाधनम् ॥ १९ ॥
मन्दजं चलभवं च तद्धतैर्भूदिनैर्भगणलिप्तिको[२१६००]द्धृतैः ।
खेचरस्य भगणावशेषकं संस्कृतं कलिकयाखिलैः स्फुटम् ॥ २० ॥
दोःफलेन सवितुश्चरासुभिः स्वेन देशविवरेण चोक्तवत् ।
संस्कृतं कुदिनभाजितं भवेन्मङ्गलादिखचरः परिस्फुटः ॥ २१ ॥

पदशेषं गतसंज्ञं तदूनकुदिनानि गम्यमपि ते द्वे ।
षण्णवति[९६]घ्ने कुदिनैर्जीवा मौर्व्यन्तराहताच्छेषात् ॥ २२ ॥
कुदिनैर्लब्धयुता ज्या भुजकोटिज्येऽथवा पदानुगते ।
तत्फलमिलाहनिघ्नं चक्रकलाभाजितं शेषे ॥ २३ ॥

---

Text of Ms. A :

[19] स्वोच्चनीचपरिवर्त्तशेषकाद्भूदिनैः कृतहतात्पदानि तु ।
शेषकात्त्रिगुणिताद्गृहाघतः पूर्ववच्च भुजकोटिसाधनं ।
[20] मंदजं चलभवं च तद्धतैः भूदिमैर्भगणालिप्तिकोद्वृत्तः
खेचरस्प भगणावशेषकं सक्कृत्तं कलिताखिलैः स्फुटं ।
[21] दोःफलेन सवितुश्चरासुभिः स्वेन देशविवरेण चोक्तवत्
संस्कृतं कुदिनभाजितं भवेन्मंगलादिखचरः परिस्फुटः ।
[22] पदशेषं गतसंज्ञं त्तदूनं कुदितानि गम्पमधिते द्वे ।
षण्नवतिघ्नै कुदिनैर्जीवा मौर्व्पंतराहताश्छेषात् ।
[23] कुदिनैर्लब्दव्पयुता ज्या भुजकोटिज्पोथवा पदानुगते
तत्फलभिनाहनिघ्नं चक्रकलाभाजिते शेषे ।

Ms B : 20 b °द्धृत्तः 23 a °र्लब्द° 23 c °मिनाह°

**[भग्रहोदयेभ्यो ग्रहे स्पष्टे तद्वशात् ग्रहकर्माणि]**

[उपोद्घातः]

**भग्रहाभ्युदयेभ्यो वा ग्रहे स्पष्टे तु तद्वशात् ।**
**तद्दोःफलचराध्वाख्याः संस्काराः परिकीर्तिताः ॥ २४ ॥**

[अध्वकर्म]

**स्वोदयभोगोऽभिहतो देशान्तरयोजनैः कुवृत्तहृतः ।**
**प्राग्वद्धनमृणमिन्दोर्युगोदयाः प्राग्दिशि निबद्धाः ॥ २५ ॥**
**जिनभुजकृताष्टकृतकृतद्विशरभुवो [१५२४४८४२२४] मध्यमोदये भुक्तिः ।**
**धृतिवसवो [८१८′] नगचंद्राः [१७″] स्तम्बेरमबाहवः [२८‴] कलाद्यैवा ॥ २६ ॥**

[भुजान्तरकर्म]

**यस्योदयगाः खेटास्तन्मध्यस्फुटविशेषलिप्ताघ्नाः ।**
**गतयस्स्वोदयभोगव्यामिश्रितभगणलिप्तिकाभक्ताः ॥ २७ ॥**
**मध्यादधिके स्पष्टे स्वमृणं चोने भुजान्तरं चैतत् ।**

---

Text of Ms. A :

[24] भग्रहाभ्पुदयेभ्पो वा ग्रहे स्पष्टे तु तद्वशात् ।
तद्दोःफलचेरावाख्पः संस्कारः परिकीर्त्तितः ॥

[25] स्वोदपभोगोपहिते देशांतरयोजनैः कुवृत्तहृतः
प्राग्वद्धनमृर्णमिंदोर्यथोदयाः प्राग्दिशि निवद्धाः ॥

[26] निजभुजकृताष्टेकृतकृत्तद्विशरभुवे मध्पमोदये भुक्तिः
धृतिवृसवो नगचंद्राः सांमेरमवाहवः कलाद्यैषा ॥

[27] पस्पोदयगाः खेटीसून्मध्पस्फुटविशेषलिप्तघाः
गतषस्स्वोदयभोगव्पामिश्रितभगणलिप्तिकावक्ताः ।

[28] मध्पादधिके स्पष्टे स्वमृणं चोने भुजांतरं चैतत्

Ms. B : 26 d स्तंभेरम°

[चरकर्म]

यदुदयगास्तदहो या गतयस्तज्जातचरदलेन हताः ॥ २८ ॥
तदहोरात्रासुहृता हीनयुता व्योमवासिनः सर्वे ।
अश्विन्योदयिकास्तदश्विनीदर्शनान्तरोनयुताः ॥ २९ ॥

स्वोच्चनीचग्रहस्फुटीकरणविधिर्द्वितीयः ।

---

Text of Ms. A :

तदुदयगास्तदहोत्पागतयस्तज्जातरचदलेत हताः ॥ ॥
[29] तदहोरात्रचषहृता हीना युता व्योमचासिनस्सर्वे
अश्चिन्पादपिकास्तदश्चिनीदर्शनांतरोनयुताः ॥

स्वोच्चनीचग्रहस्फुटीकरणविधिर्द्वितीयः ।

## 3. प्रतिमण्डलस्पष्टीकरणविधिः

[उपोद्घातः]

इदमभिहितं ग्रहाणां स्पष्टीकरणमुच्चनीचविधिनैव ।
प्रतिमण्डलाख्यमधुना स्पष्टीकरणं प्रवक्ष्यामि ॥ १ ॥

[अन्त्यफलम्]

परिधिगुणा त्रिभजीवा भगणांश[३६०]विभाजिताऽन्त्यफलजीवा ।
नीचोच्चव्यासदलं शरासनं चास्य परमफलम् ॥ २ ॥

[कर्णसाधनविधयः]

मृगकर्क्यादौ केन्द्रे कोटयन्त्यफलज्ययोर्युतिविशेषः ।
तद्बाहुज्याकृत्योस्समासमूलं श्रुतिर्भवति ॥ ३ ॥

स्पष्टकोटिकोटिज्याकृतिविवरात्त्रिगुणवर्गसंयुक्तात् ।
[विवरादपि] मूलं कर्णो वा स्याद् विनैव बाहुज्याम् ॥ ४ ॥

---

Text of Ms. A :

[1] इदमभिहितं ग्रहाणां स्पष्टाकरणमुच्चनीचविधिनैव
प्रतिमंडलाख्पमधुना स्पष्टीकरणं प्रवक्ष्यामि ।

[2] परिधिगुणास्त्रिभजीजा भगणा । शविभाजितांत्पफलजीवा ।
नीचोच्चव्यासदलं शरासनं चास्य परमफलं ।

[3] मृगकंघादौ केंदे कोटचत्पंफलज्पयोर्युतिविशेषः
तद्वाहुज्पाकृत्पोस्समासमूलं श्रुतिर्भवति ।

[4] स्फुटकीटिकोटिवाकृतिविवरात्त्रिगुणवर्गसंयुत्काात्
मूलं कर्णो वा स्पाद्विनैव पाहुज्पां ।

Ms. B : 1 b. स्पष्टी°

तद्योगान्तरघातत्रिज्याकृतियोगविवरमूलं यत् ।
मृगमुखशशिभवनादौ कर्णो वा स्याद् विनैव बाहुज्याम् ॥ ५ ॥

द्विघ्नाग्रज्याभ्यस्ता परमफलज्या मृगादिगे योज्या ।
त्रिज्यापरफलमौर्व्योः कृतियोगे कर्कटादिगे शोध्या ॥ ६ ॥
केन्द्रे तस्मान्मूलं कर्णो वा स्याद् विनैव बाहुज्याम् ।

[कोटिज्या]

त्रिज्यान्त्यफलज्याकृतियुत्या श्रवणवर्गविवरं यत् ॥ ७ ॥
तद्दलितं प्रविभक्तं परमफलमौर्व्याऽथ कोटिजीवा स्यात् ।
अपरेष्टश्रुतियोगात्तद्विवरघ्नात्पदं वा स्यात् ॥ ८ ॥

[पुनः कर्णसाधनम्]

कोटिभुजान्तरनिघ्नो भुजाग्रयोगोद्भवस्तदूनयुते ।
कोटिभुजकृती द्विघ्ने तन्मूले स्तोऽथवा श्रवणौ ॥ ९ ॥

---

Text of Ms. A :

[5] तद्योगांतरघातस्त्रिज्याकृतियोगविवरमूलं पत् ।
मृगमुखशशिभवभादौ कर्णे वा स्पाद्विनैव वाहुज्पां ।
[6] द्विघ्नाग्रज्पाभ्पस्ता परमफलज्पा मृगदिके योज्पा ।
त्रिज्यापरफलमौर्व्पारः कृतियुगे कर्कटादिगे शोघ्पा ।
[7] केंद्रे तस्मान्मूलं कर्णो वा स्पाद्विनैव वाहुज्पां ।
त्रिज्पांतपफलज्पायुतिकृत्पाश्रवणविचरं यत् ।
[8] तद्दलित्तं प्रविभत्कं परफलमौर्व्पाथ कोटिजीव्प स्पात्
अपरेष्टश्रुतियोगात्तद्विवरघ्नात्पदं वा स्पात् ।
[9] कोटिभुजांतरतिघ्वो भुजाग्रयोगोद्भवं तदूनयुते
कोटिभुजकृती द्विघ्ने तन्म्रले स्वोप्पवा श्रवणौ ।

Ms. B : 9 d स्वोथवा

निजयुतिहतभुजकोटयौ कोटिभुजे स्वान्तराहते स्वमृणम् ।
मूले श्रुती द्विगुणिताद् वधात्पदं वाऽन्तरकृतियुतात् ॥ १० ॥

[ग्रहस्पष्टीकरणम्]

[मंदशीघ्रफले]

त्रिज्याहता भुजज्या कर्णहृताऽऽप्तस्य कार्मुकं तु फलम् ।
देयं मन्दे शोध्यं शीघ्रोच्चे स्यात्स्फुटो द्युचरः ॥ ११ ॥

[फलसंस्कारविधिः]

अविकृत आद्ये चरणे भगणदलाच्छोधितं द्वितीयेऽस्मिन् ।
षड्गृहयुतं तृतीये भगणाच्छुद्धं चतुर्थपदे ॥ १२ ॥

[पदज्ञानम्]

अग्राऽन्त्यफलज्यातो [ऽग्रे] यदि पतति तदा प्रथमचतुर्थे ।
सैवाग्रज्यान्तश्चेत्पतति तदा मध्यमे ज्ञेये ॥ १३ ॥
मध्यपदे वा परफलरहिते तथाऽधिके [पदे] शेषे ।
पदसंज्ञा चामीभिः फलावगतिरुक्तवच्चान्यत् ॥ १४ ॥

---

Text of Ms. A :

[10] निजयुतिहतभुजकोष्वौ कोटिहते स्वांतराहते स्वमृणं ।
मूले श्रुती द्विगुणिताद्वधात्पदं वांतरकृतिघुतात् ।

[11] त्रिज्याहता भुजज्पा कर्णहृतास्तस्प कार्मुकर्तु फलं ॥
देयं मध्पे शोध्यं शीघ्रोच्चे स्पात्स्फुटो द्युचरः ।

[12] अविकृत पादे चरणे भगणदलास्छोधितं द्वितीयस्मिन्
षड्गृहयुतं तृतीये भगणाश्छुद्धं चतुर्थपदे ।

[13] अग्रचांत्पफलज्यातो यदि पतति तदा प्रथमचरणे
सैवाग्रज्यात्तच्चेत्पतति तदा मध्पमे ज्ञेयो ।

[14] मध्पपदे वा परफलहिने तथाधिके शेषे ।
पदसंज्ञा चामीभिः फलावगतिरुत्तरत्वान्पत् ।

Ms. B : 12 b °स्मित्

[प्रकारान्तरेण ग्रहस्पष्टीकरणम्]

मध्यस्य स्फुटमंदेन विवरार्धं तु मध्यमे ।
स्पष्टे च मध्यमादूने क्षयस्स्वमधिके तथा ॥ १५ ॥
तत्स्फुटतरान्तरार्धं च तत्रैव स्याद्यथोक्तवत्स्वमृणम् ।
स्फुटमंदेनान्त्यस्य भवेद्विवरमशेषं ग्रहे मध्ये ॥ १६ ॥
तत्स्पष्टशीघ्रयोः स्यात्तत्रैवाशेषमन्तरं स्पष्टः ।
द्वाभ्यामिन्दुजशुक्रावेकेन व्रघ्नशीतकरौ ॥ १७ ॥

[स्पष्टगतिसाधनम्]

निजफलभोज्यज्याघ्ना केन्द्रगतिश्चाद्यजीवया भक्ता ।
त्रिज्याघ्ना कर्णहृता लब्धोनयुता स्वशीघ्रमन्दगतिः ॥ १८ ॥

ग्रहवदनयोर्विशेषौ दिविचरभुक्त्यां दिवौकसो भुक्तिः ।
संस्कार्यौ स्पष्टा स्यात्स्वदलैर्निखिलैर्धनर्णवशात् ॥ १९ ॥

---

Text of Ms. A :

[15] मध्यस्प स्फुटमंदन विवराध नु मधामे
स्फष्टोच्च मध्यमादूनक्षयस्खमधिके तथा ।
[16] तत्स्फुटचरांवरार्धं तत्रैव स्थाघृथोक्तवत्स्वमृणं ॥
स्फुटंमदेनात्पस्त्र भवेद्विवरमशेषं ग्रहे मध्ये ।
[17] तत्स्पष्टशीघ्रयोस्स्पात्तत्रैपाशेषमंतरं स्पष्टः
द्वाभ्यामंतरशुक्रावेकेन व्रघ्नशीतकरौ ।
[18] निजफलभोज्पाज्पाघ्ना केंद्रगतिश्चाद्यजीवया भक्ता ।
त्रिज्पाघ्ना कर्णहृता लव्दोनहृता स्वशीघ्रमंदगतिः ।
[19] ग्रहवदनयोर्विश्वेषौर्दिविचरभुक्तया दिवौकसे भुक्तिः
संस्कार्ये स्पष्टे स्पात्स्वडि निखिलैर्धनर्णवगात् ।

Ms. B : 15 b तु मघामे

[शीघ्रमन्दफले]

चलमन्ददोर्गुणौ वा निजान्त्यफलजीवया हतौ भक्तौ ।
कर्णव्यासार्धाभ्यां फलधनुषी [शीघ्रमन्दफले] ॥ २० ॥

[स्पष्टग्रहात् मध्यग्रहानयनम्]

शीघ्रात्स्पष्टग्रहोनाच्चलफलमखिलं खेचरे स्यादनष्टे
व्यत्यासात्स्पष्टसंज्ञे धनमृणमसकृत्स्यान्मृदुस्पष्टसंज्ञः ।
तस्मान्मन्दोच्चहीनान् मृदुफलमपि च व्यत्ययादेव कृत्स्नं
तत्रानष्टे क्षयःस्वं गदितवदसकृन्मध्यमोऽन्यच्च तस्मात् ॥ २१ ॥

प्रतिमण्डलस्पष्टीकरणविधिस्तृतीयः ।

---

Text of Ms. A :

[20] चलमंददोर्गुणौ वा निजांत्पफलजीवया हतौ भक्तौ
कर्णव्पासार्धभ्पां फलधनुषी
[21] शीघ्रात्स्कष्टग्रहोनाच्चलफलमखिलं खेचरस्स्पादनष्ठे
व्पत्पासात्स्पष्टसंज्ञे धनमृणमसकृत्स्पान्मृदुःस्पष्टसंज्ञः ।
तस्मान्मंदोच्चहीनान्मृदुफलमपि चच्पत्पयदिव कृत्स्नं
तत्रानेष्ट क्षयस्स्वं गदित्तवदसकृन्मृष्पमौन्पश्चत्तस्मात् ॥ ॥

प्रतिमंडलस्पष्टीकरणविधिः ।

## 4. ज्याभिर्विना स्फुटीकरणविधिः

[उपोद्घातः]

त्रिज्याशकलैर्द्युसदां स्पष्टीकरणं मयेरितं विधिवत् ।
अधुना विनैव मौर्वीशकलैर्वक्ष्ये स्फुटीकरणम् ॥ १ ॥

[भुजांशैः पिण्डाख्यराशिसाधनम्]

चक्रार्धांशा भुजांशैर्विरहितनिहतास्तद्विहीनैर्विभक्ताः
खव्योमेष्वभ्रवेदैः [४०५००] सलिलनिधि[४]हताः पिण्डराशिः प्रदिष्टः ।
षड्भांश[१८०]घ्ना भुजांशा निजकृतिरहितास्तत्तुरीयांशहीनैः
भक्ताः स्यात्पिण्डराशिर्विशिखनयनभूव्योमशीतांशुभि[१०१२५]र्वा ॥ २ ॥

[ततः भुजकोटिज्ययोः मन्दशीघ्रफलयोश्च साधनम्]

परफलगुणनिघ्ना स्यात्फलज्या त्रिमौर्व्या भवति हि भुजजीवा एवमन्याहतेऽपि ।
मृदुफलमिह साध्यं प्रोक्तवद्बाहुभागैः त्वरफलमपि चैवं बाहुकोटयंशकैः स्वैः ॥ ३ ॥

---

Text of Ms. A :

[1] त्रिज्पासकलैर्द्युसदां स्पष्टीकरणं मयेरितं विधिवत्
अधुना विनैव मौर्वांशिकलैर्वक्ष्पे स्फुटीकरणं ।

[2] चक्राधांशा भुजांर्शैविरहित्तनिहितास्तद्दिहीनैर्विभक्तः
खव्पेमेष्वभ्रवेदैस्सलिलनिषिहताः पिष्टराशिः प्रदिष्टः
षड्भांघ्रा भुजांशा निजकृतिरहित्तास्त्तुरोपांशहीनै-
र्भक्ता स्पात्पिंडराशिर्विशिखनयनभूव्योमश्रीशीतांशुभिर्वा ।

[3] परफलगुणनिघ्नस्स्पात्फलज्पा त्रिमौर्व्पा भवति हि भुजजीवा घैवमन्पाहृत्तेपि
मृदुफलमिहृ साध्यं प्रोक्तवद्वाहुभागैस्स्वफकलमपि चैवं वाहुकोद्यंशकैस्खैः ।

Ms. B : 1 a °र्द्युष्टस° 2 b खरव्पेमे°

[ज्यातः चापानयनम्]

त्रिभवनगुणयुक्तो ज्यातुरीयोऽत्र हारो
विशिखरविखचन्द्रै[१०१२५]स्ताडितायास्तु मौर्व्याः ।
खखविशिखखवेदै[४०५००]राहता वेष्टजीवा
त्रिभगुण-कृति[४]घात-ज्यासमासेन भक्ता ॥ ४ ॥
फलहीना नवतिकृति[८१००]स्तन्मूलेन च वर्जिता नवतिः [९०] ।
शेषं धनुरथवा यत्त्रिज्याखण्डैर्विनैव फलम् ॥ ५ ॥

[ग्रहाणामष्टधा गतिः]

स्फुटमध्यमखेचरान्तरं दलितं मध्यखगात्स्फुटेऽल्पके ।
स्वमृणं महति स्फुटोनिते स्वचलेऽस्मिन् भवनेषु खेचरः ॥ ६ ॥
अतिशीघ्रगतिः शीघ्रो निसर्गकस्तदनु भार्धयोराद्ये ।
मन्दोऽपरेऽतिमन्दो वक्री भे तदनु भेऽतिवक्रगः ॥ ७ ॥
चक्रच्युतेऽपि चास्मिन् ग्रहचारश्चैष एव निर्दिष्टः ।
चक्रच्युतस्य मन्दा ग्रहस्य भुक्तिः कुटिलसंज्ञा ॥ ८ ॥

---

Text of Ms. A :

[4] त्रिभनवगुणयुक्तो ज्यातरीयोत्र हारो विशिखरविखचंद्रैस्तोडितायास्तु मोर्व्याः
खखविशिखखवेदैराहतो वेष्टजीवा त्रिभगुणकृतिघातज्यासमासेन भक्ता ।
[5] फलहीना नवतिकृतिस्तन्मूलेन न च वर्जिता नवतिः
शेषधनुरधवा यत्त्रिज्पाखंडैर्विनैव फलं ।
[6] स्फुटमध्पमखेचरांतरं दलितं मध्यखगात्स्फुटोल्पके
स्वमृणं महति स्फुटानिते स्वदलेस्मिन् भवतेपु खेचरः ।
[7] अतिशीघ्रगतिः शीघ्रा रिसर्गतस्वदनु भावयोराद्ये ।
मंदो परेतिमंदो वक्री भे तदमु भेतिवक्रगाः ।
[8] चक्रच्पुतेपि चास्मिन्ग्रहचारैष मेव निर्दिष्टः
चक्रच्पुतस्प मंदा ग्रहस्य भुक्तिः कुटिलसंज्ञा ॥ ॥

[वक्रानुवक्रगत्योरारम्भे ग्रहाणां शीघ्रकेन्द्रभागाः]

रामाष्टिभिः [१६३] क्षितिसुतः चलकेन्द्रभागैः
वक्रीन्दुजोऽक्षमनुभिः [१४५] गुरुरङ्गसूर्यैः [१२६]।
शुक्रः शरर्तुशशिभिः [१६५] शनिरग्निरुद्रैः [११३]
चक्रच्युतैः कुटिलगाः कथितास्त्वमीभिः ॥ ९ ॥

[ग्रहाणां वक्रगति-ऋजुगतिदिनानि]

पञ्चर्तवः [६५] कुदस्रा [२१] बाहुशिवा [११२] द्वीषवो [५२] द्विगुणचंद्राः [१३२]।
वक्रदिनान्युर्वीजानि निरंशदिनशोधिताण्यृजूनि स्युः ॥ १० ॥

[ग्रहाणां निरंशदिनानि]

खाष्टनगा [७८०] रसरुद्रा [११६] नवनवरामाः [३९९] पयोधिधीपवनाः [५८४]।
वसुशैलगुणाः [३७८] क्रमशो भौमादीनां निरंशनिशाः ॥ ११ ॥

[ग्रहाणां पूर्वोदये पश्चिमास्ते वा शीघ्रकेन्द्रांशाः]

धीयमलै [२८] स्त्रिखपक्षै [२०३] र्विश्वै [१३] स्त्रिमतीन्दुभि [१८३] र्नगशशांकैः [१७]।
दृश्याः प्रागपरायां च्युतैर्भचक्रादिमेऽदृश्याः ॥ १२ ॥

---

Text of Ms. A :

[9] रामाष्टिभिः क्षितिसुतः चलकेन्द्रभार्गे वक्रेन्दुजोक्षमनुभिर्गुरुरंगसूर्यैः
शुक्रः शरर्तुशशिभिः शनिरग्निरुद्रैः चक्रच्युतैः कुटिलगाः कथितास्त्वमोभिः ॥ ॥

[10] पंचर्तवः कुदस्रा वाहुशिवा द्वीष्टवो द्विगुणचंद्राः
वक्रदिनान्पुर्वीजान्निरशदितशोधितानजूनि स्युः

[11] खाष्टनगा रसरुद्रा नवनवरागाः पयोधि‾धीयवनाः
वसुशैलगुणाः क्रमशो भोमादीनां तिरंशनिशाः

[12] धीयमलैस्त्रिखपक्षैर्विश्वैस्त्रिमतीदुभिर्नगशशांकै-
र्दृश्याः प्रागपराया च्युता भातो दृश्याः ॥ ॥

Ms. B : 9 a °भागै 9 b वंक्रेन्दु° 11 b °धीपवनाः

[बुधशुक्रयोः पश्चिमास्ते शीघ्रकेन्द्रांशाः]

विपरीतदिशोरेवं ज्ञसितौ तानै[४९]र्जिनै[२४]श्चलैर्भागैः ।
एष्यातीतकलाभ्यः स्वकेन्द्रभुक्त्या दिनानि स्युः ॥ १३ ॥

[ग्रहाणामस्तोदयदिनानि]

नखेन्दवो[१२०]ऽष्टिः[१६] खगुणा [३०] द्विजिह्वाः [८]
षट्पुष्करा[३६]व्यस्तदिनानि पश्चात् ।
प्राच्यां च चंद्रात्मजदैत्यगुर्वो-
र्दन्ताः [३२] शरव्योम्निचराः[७५] प्रदिष्टाः ॥ १४ ॥
खाङ्गर्तुभिः [६६०] कृतगुणैः [३४] नवाङ्गरामैः [३६९] महीविशिखपक्षैः [२५१] ।
द्विकृतगुणैः [३४२] भौमाद्याः [पश्चात्] पुनरस्तमायान्ति ॥ १५ ॥

ज्याभिर्विना स्पष्टीकरणविधिश्चतुर्थः ।

---

Text of Ms. A :

[13] विपरीतदिशोरेवं ज्ञसितौ तानैर्जिनैर्जगुर्भागैः
एष्पातीतकलाभ्पस्स्वकेन्दुभुक्त्या दिनानि स्पुः

[14] नखेन्दवोष्टिः खगुणा द्विजिह्वा ष्पद्यष्करार्कदिनानि पश्चात्
प्राच्पां च चंद्रात्मजदैत्यगुर्वो दंताः शरव्योम्निचराः प्रदिष्टाः ॥

[15] खांगतुभिः कृतगुणो न्नवांगरामैः महीत्रिशिखपक्षै-
द्विकृतगुणैर्भौमाद्याः पुनरस्तैभायांति ।

ज्याविधिना स्पष्टीकरणविधिश्चतुर्थः ॥

Ms. B : 14 b ष्पद्यष्ख०

## 5. फलज्यास्फुटीकरणविधिः

[उपोद्घातः]

भुजकोटिफलश्रवणैर्द्युसदां स्फुटताऽभिहिता हि मया विविधा ।
कथयाम्यधुनाऽतिविवेक[युतः] स्फुटतां भुजयाऽहमवाप्तवरः ॥ १ ॥

[ज्यान्तरसम्बन्धि-मन्दशीघ्रफलैः स्पष्टग्रहसाधनम्]

[प्रथमविधिः]

निजवृत्तगुणाः क्रमकेन्द्रगुणा भगणांश[३६०]हृताः फलचापकलाः ।
द्युचरस्य फलान्यनुपातफलं मृदुजं चलजं त्वसकृद्द्युचरे ॥ २ ॥

[द्वितीयविधिः]

महति केन्द्रपदे चलदोःकला विरहिताः खलु तेन फलेन यत् ।
भवति चापहृतादपि बाहुतो लघुनि सैव युताद्धनुषा हृतात् ॥ ३ ॥
फलं तत्स्याच्छेषं फलविवरनिघ्नं स्वफलयोर्विशेषेणैवाप्तं लघुनि च पदे चापमधिकम् ।
महत्येवं हारः फलमधिकमाप्त्या चलफलं विधेयं प्राग्वत्तत्स्वमृणमथवैवं दिविचरे ॥ ४ ॥

---

Text of Ms. A :

[1] भुजकोटिफलश्रवणैर्द्युसदां स्फुठत्ताभिहिता हि मया विविधा
कथयाम्पधुनातिविवेक स्फुटती भुजयाहमवाप्तवरः

[2] तिजवृत्तगुणाः क्रमशोवगुणा भगणांशहृताः फलचापफलाः
व्पुचरफलान्पनुपातफलं मृदुजं चलजं त्वसकृद्द्युचरे ।

[3] महति केन्द्रफले चलदोःकला विरहिताः खलु तेन फलेत यत्
भवति वापहृतादपि वाहुतो लघुनि दैवयुता धनुषा हृताः ।

[4] फलं तत्स्पाश्छेषं फलविवरनिघ्नं स्वफलयोर्विशेषोणैवोनं लघुनि च पदे चापमधिकं ।
महत्पेवं हारः फलमधिकमाप्त्पा चलफलं विधेयं प्राग्वत्तत्स्वमृणमथवैवं दिविचरे ।

Ms. B : 1 b स्फुटत्ता° 1 d स्फुटतां°

[प्रकारान्तरेण मन्दशीघ्रफलसाधनम्]

**फलखण्डकसंख्ययोर्हृतिः फलयुग्घीनमनल्पकाल्पयोः ।**
**पदयोर्धनमत्र केन्द्रकं फलमेतैरनुपाततोऽथवा ॥ ५ ॥**

[वक्रग्रहस्य केन्द्रगतिः]

**केन्द्रभुक्तिनिहतं कलान्तरं खेटहारभजितं यथोक्तवत् ।**
**वक्रजं मृदुफलं गताविह व्यत्ययेन गदिताद्धनक्षयात् ॥ ६ ॥**

**[वक्रानुवक्रकेन्द्रसाधनम्]**

[प्रथमविधिः]

**केन्द्रभुक्तिकलिकाहतं धनुः शीघ्रभुक्तिभजितं पदेऽल्पके ।**
**यस्य केन्द्रविवरस्य तत्समं षड्भयुक्तमनुवक्रकेन्द्रकम् ॥ ७ ॥**

[द्वितीयविधिः]

**त्रिज्याघ्ना केन्द्रभुक्तिश्चलगतिभजिता वक्रकर्णस्ततोऽपि**
**प्राग्वद्बाहुप्रजीवे भुजफलधनुषो भोग्यजीवाहतोऽसौ ।**
**आद्यज्याहृच्च कर्णः पुनरखिलमिदं कर्म यावत्स्थिरत्वं**
**कोटिज्याधन्वयुक्तं त्रिभमिह गदितं वक्रकेन्द्रं ग्रहस्य ॥ ८ ॥**

---

Text of Ms. A :

[5] फलखंडकसंख्यपा हृतं फलयुग्घीनमनल्पकाल्पयोः
पदयोर्धनमत्र केन्द्रंकं फलमैतेरनुपातत्तोथवा ॥

[6] केन्द्रमुक्तिनिहितं कलांतरं खेटहारमजितं यथोक्तवत् ।
वक्रजं मृदुफलं गत्ताविह व्यत्पयेन गदिताद्धतक्षयात् ।

[7] केन्द्रभुक्तिकलिकहतं धनुः शीघ्रभुक्तिभजितं पदेल्पके ।
यस्प केन्द्रविवरस्प तत्समं षड्भपुक्तमनुवक्रकेन्द्रकं ।

[8] त्रिज्पाघा केन्द्रभुक्तिश्चलगतिभजिता वक्रकर्णस्ततोपि ।
प्राग्वद्वाहुग्रजीवे भुजफलधनुषो भोग्पजीवाहतोसौ
आद्यज्पाहृच्च कर्णः पुनरखिलमिदं कर्म यावत्स्छस्त्वं
कोटिज्पाधन्वयुक्तं त्रिभमिह गदितं वक्रकेंद्रे ग्रहस्प ।

[वक्रगतेः प्रदर्शनम्]

[वक्राद्यन्तज्ञानम्]

शीघ्रोच्चनीचवृत्तान्मृगकर्क्यादिप्रवृत्तसूत्रस्य ।
भूमध्ययुतेर्यत्र च वृत्तस्पर्शोऽस्ति तत्रैव ॥ ९ ॥
अनुवक्रवक्रकेन्द्रे, केषांचिदथाल्पके पदेऽन्ते च ।
बहुशः कोटचा श्रुत्या वाऽत्र विधिवत् प्रवक्ष्येऽहम् ॥ १० ॥

[तत्र कोटिफलम्]

त्रिज्यान्त्यफलज्याकृतियोगेन विभाजयेत् त्रिज्या ।
द्विघ्नाऽन्त्य[फलज्या]कृतिनिघ्नाऽऽप्त[फलं] कुटिलकोटेः ॥ ११ ॥

[बाहुफलम्]

त्रिज्यान्त्यफलज्याहृतिवर्गात्संशोध्य वर्गवर्गमपि ।
परफलगुणस्य शेषं    त्य[न्त्य]फलकृतियोगसंगुणितम् ॥ १२ ॥
त्रिज्याकृतिपरमफलज्यावधवर्गाद्विशोध्य शेषपदम् ।
संशोध्य वधाल्लब्धं योगेन फलं कुटिलबाहोः ॥ १३ ॥

---

Text of Ms. A :

[9] शीघ्रोच्चनीचवृत्तान्मृगकवर्भादिप्रवृत्तसूत्रस्प ।
भूमध्पयुतेर्पत्र व वृत्तस्मशोत्र तत्रैव ॥
[10] अनुवक्रवक्रकेंद्रे केषांचिदथाल्पके पदेत्ते च ।
वहुशः कोद्या श्रुत्पा सात्र विधिवत्प्रवक्ष्पेहं ॥  ॥
[11] त्रिज्पांत्पफलज्पाकृतियोगेन विभाजयेत्त्रिज्पो ॥
द्विघ्नांत्पकृतिनिघ्नामाप्तकुटिलकोटिः ।
[12] त्रिज्पांत्पफलज्पाहृतिवर्गात्संशोध्य वर्गवर्गमपि ।
परफफलगुणशेषं त्पंशफलगुणकृतियोगसंगुणितं ।
[13] त्रिज्पाकृतिवपरमफलज्पावधवर्गाद्द्विशोध्प शेषपर्द ॥
संशोध्प वधाल्लब्दं योगेत फलं कुटिलवाहोः ॥

Ms. B : 9 b °कवर्मादि° 10 d सान्तर्विधि° 13 b °पदं 13 c °ल्लब्दं 13 d योगेन

[उपकोटि-उपभुज-उपकर्णाः कुटिलकर्णश्च]

**कोटिफलोना त्रिज्या ह्युपकोटिः, परमफलगुणो हीनः ।**
**बाहुफलेनोपभुजोऽग्राफलतत्कृतिसमासमूलं यत् ॥ १४ ॥**
**उपकर्णोऽसौ हीनस्तेन ह्यन्त्यफलगुणकृतियुतिपदम् ।**
**कुटिलश्रुतिरुपकोटिकबाहुफलद्विगतयोगपदम् ॥ १५ ॥**
**वाऽनृजुकर्णो दोःफलमुपक[र्ण]हतं समीपबाहुहृतम् ।**
**वाऽनृजुकर्णः कोटयोपकर्णकोटचोर्बधादाप्तम् ॥ १६ ॥**
**[वाऽ]नृजुक[र्ण]स्त्वन्त्यफलजीवयोः कृतियुतेर्मूलम् ।**
**दोःफलहतं विभक्तं परफलमौर्व्या कुटिलकर्णः ॥ १७ ॥**

[स्थितिविशेषाः]

**बाहुज्यासमकर्णे परफलेनान्वितं त्रिभं केन्द्रम् ।**
**त्रिज्यातुल्यश्रवणे परमफलगुणखण्डचापयुतम् ॥ १८ ॥**
**अन्त्यफल[ज्या]कृत्या द्विगुणितया संयुतात्त्रिगुणवर्गात् ।**
**मूलं परमफलज्यारहितं कोटिः श्रुतिश्च हीनपदे ॥ १९ ॥**

---

Text of Ms. A ;

[14] कोटिफलोना त्रिज्या ह्युपकोटिः परमफलगुणो हीन
वाहुफलेनोपभुजेग्राफलतक्षतिसमासमूलं तत् ।
[15] उपकर्णोसो हीनस्तेन ह्यंशफलगुणकृतियुतिपदं
कुटिलश्रुतिरुपकोटिकंवाहुफलद्विगतियोगफलं ॥ ॥
[16] वानृजुकर्णो दोःफलमुपकहत समोपबाहुहृतं
वांहूनृजूकर्णः कोद्योपकर्णकोद्योर्वधादाप्तं ।
[17] नृजुकस्त्वंत्पफलजीवयोः कृत्तिघुतिर्मूलं ।
दोःफलहतविभत्कं परफलमौर्व्पाः कुटिलकर्लः ॥
[18] वाहुज्पासमकर्णे परफलेनान्वितं त्रिभः कैंद्रं ।
त्रिज्यातुल्पश्रवणे परमफलगुणाखंडचापयुतं
[19] अंत्पफलकृत्पा द्विगुणितया संयुतात्त्रिगुणवर्गात् ।
मूलं परमफलज्पारहितं कोटिः श्रुतिश्च हीनपदे ।

राशिज्यासंगुणितात् त्रिगुणात् कोटिगुणोऽथ हीनपदे ।
अन्त्यफलजीवयाप्तात् परमफलज्यासमे कर्णे ॥ २० ॥
परमफलज्योनाच्चेद् व्यासार्धाच्छेषं नोनमप्यस्ति ।
परफलमौर्व्याः कर्णस्तत्तुल्यस्तदधिको वास्ति ॥ २१ ॥
त्रिज्यान्त्यफलज्यायुतितुल्यः कर्णो ग्रहे स्वोच्चसंस्थे ।
तद्वियुतिसमे कर्णे केन्द्रं परिपूर्णराशिषट्कगतम् ॥ २२ ॥

[वक्रगतिसाधनम्]

मृदुवृत्त-केन्द्रभुक्त्योर्वधाद्भभागा[३६०]प्तहीनयुग्भुक्तिः ।
तच्छीघ्रभुक्तिविवरत्रिज्याघातात् प्राप्तेन शीघ्रेण ॥ २३ ॥
कर्णनाप्तफलाभ्यां चलभुक्तेर्विवरात्स्वेतरे भुक्ती ।
वक्रे स्पष्टगतावपि वक्रारंभे गतिः शून्यम् ॥ २४ ॥

---

Text of Ms. A :

[20] राशिज्यासंगुणितात्त्रिगुणा कोटिर्गुणेथ हीनपदे
अत्पफलजीवयाप्तं परमफलज्पासमे कर्णे ।
[21] परमफलज्पोनाच्चेद्व्यासार्धाश्छेषशूनमप्पस्ति
परफलमौर्व्याः कर्णस्तत्तुल्पस्तदधिके तास्ति ।
[22] त्रिज्पांत्पफलज्पायुतितुल्पः कर्णो ग्रहो स्वयोस्सौम्पे ।
तद्वियुतिसमे कर्णे केंद्रं परिपूर्णराशिषट्कगतं ॥
[23] मृदुवृत्तकिद्रंभुक्त्योर्वधाद्भागाप्तहीनयुग्भुत्कः
तश्छीघ्रभुत्किविविरत्रिज्पाघातात्पाठेन दीर्घेण
[24] कर्णनाप्तफलाभ्पां चलभुत्कैर्विवराकेपरे भुत्की ॥
वक्रे स्पष्टगतावपि वक्रारंभे गतिः शून्पं ॥

Ms. B : 23 a त्तकिंद्र°

[भुजकोटिज्ययोर्योगे ज्ञाते तदानयनम्]

**भुजकोटियुतित्रिज्यावर्गान्तरभेद-[योग]दलकृत्योः ।**
**अन्तरमूलं युक्तं योगार्धेनैकजीवा सा ॥ २५ ॥**

[भुजकोटिज्ययोरन्तरे ज्ञाते तदानयम्]

**व्यासार्धकृतिर्द्विघ्ना ज्यान्तरवर्गोनिता ततो मूलम् ।**
**विवरयुतोनं दलितं भुजकोटिज्ये श्रुतिश्च ततः ॥ २६ ॥**

[भुजकोटिज्ययोर्योगान्तरयोः ज्ञाते तदानयनम्]

**द्विघ्नार्धराशि[योगः] जीवायोगः परस्तथा शून्यम् ।**
**विवरं च भवति कोटिः कर्णदोर्गुणयोस्स्वार्धराशिपदे ॥ २७ ॥**

[ग्रहोदये शीघ्रकेन्द्रम्]

**दृगदृश्यकाललिप्ताः खगुण[३०]घ्नास्स्वोदयासुभक्ताः प्राक् ।**
**स्वास्तविलग्नासुहृताः [प]श्चाद्भागान्विताः केन्द्रम् ॥ २८ ॥**
**फलगुणतो भुजभागा दृगदृश्यकलान्विता ज्ञभार्गवयोः ।**
**अतिचारिणोर्विहीना वक्रगयोः केन्द्रमुद्दिष्टम् ॥ २९ ॥**

---

**Text of Ms. A :**

[25] भुजकोटियुतत्रिज्पावर्गांतरभेदलकृत्पा :
अंत्समूलं घुत्कं योगाधेनैकजीवा सा ॥

[26] व्यासार्धकृतिडिघ्नाघांतरवर्गोनि । ता ततो मूकं ।
विविरयुतोनं दलितं भुजकोटिज्पे स्रुतिश्च तत ।

[27] द्विघ्नार्धराशेः------जीवायोग्गः परस्तथा शून्यं ।
विवरं च भवति कोटिकर्णदोर्गुणयोस्स्मार्धराशिपदे ।

[28] दृगदृश्यकलालिप्ताः खणगुघ्नास्स्वोदयासुभक्ताः प्राक्
स्वाप्तविलग्नासुहृताः श्चाद्भागान्विताः केन्द्रं ॥

[29] फलगुणितो भुजिघातादृगदृश्पकलान्विता ज्ञभार्गवयोः
अतिचारिणो विहीना वक्रगयोः केन्द्रमुद्दिष्ट ।

**Ms. B :** 27 b योगाः

[वक्रदिवसाः]

अस्तोदयकेन्द्रान्तरकलिकाः केन्द्रगतिभाजिता दिवसाः ।
वक्रानुवक्रकेन्द्रान्तरलिप्तास्वेवं वक्राहाः ॥ ३० ॥

[दृश्यादृश्यदिवसाः]

युगकेन्द्रभगणभक्ता युगभूदिवसा निरंशदिवसास्स्युः ।
अस्तदिनोना दृश्या दि[वसा मि]लिताश्च सितज्ञयोः ॥ ३१ ॥

[ग्रहस्फुटीकरणविधयः]

[ब्रह्मगुप्तसम्मतविधिः]

मध्येऽखिलं मंदफलं तदूनाच्चलाच्चलाख्यं च पुनश्च तस्मात् ।
मन्दोद्भवं मध्यखगे चलोत्थं तदूनशीघ्रादसकृत्स्फुटेऽस्मिन् ॥ ३२ ॥

[बुधशुक्रसाधनाय आर्यभटसम्मतविधिः]

व्यस्तं चलोत्थस्य दलं स्वमन्दे तदूनमध्यान्मृदुजं समस्तम् ।
मध्ये तदूनात्स्वचलाच्चलोत्थं तस्मिन् समस्तं भवति, स्फुटे स्तः ॥ ३३ ॥

---

Text of Ms. A :

[30] अस्तोदकेयन्द्रांतः कलिकाः केन्द्रगतिभाजिता दिवसाः
वक्रानुवक्रकेन्द्रांतरलिप्तास्वैव वक्राहाः ॥

[31] युगकेन्द्रभाणभत्का युगभूदिवसा निरंशदिवसास्पुः
अस्तादिनोनदृश्पा दिलिताश्च सितज्ञयोः ।

[32] मध्पखिलं मंदफलं तदूनांश्चलाच्चलाख्पं च पुनस्तस्मात्
मंदोद्भवं मध्यखगें चलोत्थं तदूनशीघ्रादसकृत्स्पुटेस्मिन् ।

[33] व्पस्तं चलोत्थस्प चलं स्वमंदं । तदूनमध्पान्मृदुजं समास्तं ।
मध्पे तदूनात्स्वचलाच्चलोत्थं तस्मिन्समस्तं भवति स्फुटे स्तः ॥

Ms. B : 31 a °द्रभगणभत्का　　31 c दृश्या दिलिताश्च

[सूर्यसिद्धान्तसम्मतविधिः]

**मध्यमश्चलदलार्धसंस्कृतो मं[द]जेन दलितेन सैव हि ।**
**मन्दजं सकलमेव [म]ध्यमे शीघ्रजं [च] निखिलं परिस्फुटः ॥ ३४ ॥**

[मन्दकर्णानयनविधिः]

**इष्टच्छेदहृते फले मृदुफलप्रोक्ते हृते त्रिगृहात्**
**रूपेणैकविवर्धितेन समता छेदेन यावत्स्फुटः ।**

[अन्यो ग्रहस्फुटीकरणविधिः]

**आद्यं मध्य[म]खेचरान्मृदुफलं शेषं तु शीघ्रस्फुटात्**
**मध्ये मन्दफलं तदूनितचलाच्छैघ्रं च मन्दस्फुटे ॥ ३५ ॥**

[कोटिं विना शीघ्रकर्णसाधनम्]

**परमफलकेन्द्रजीवाघातात् फलजीवया हृतात्कर्णः ।**
**कोटिं विनाऽथवा स्यात् त्रिज्या दोःफलसमभ्यासात् ॥ ३६ ॥**

**फलज्यास्फुटीकरणविधिः पञ्चमः ।**

---

Text of Ms. A :

[34] मध्पमश्चलदलार्धसंस्कृतो मंजेन दलितेन सैव हि
मंदजं सकलमेव ध्पमे शीघ्रजं निखिलं परिस्फुटः ॥ ॥

[35] इष्टश्छेदहृते फले मृदुफलं प्रोत्थेंहृते ते ग्रहे ।
रूपेणैकविवर्धितेन समताश्छेद्रेन यावत्स्फुटः
आद्यं मध्पखेचरान्मृदुफलं शेषाणि शीघ्रस्फुटात्
मध्पं मंदफलं तदूनितचलाश्छैघ्रं च मंदस्फुटे ।

[36] परमफलकेन्द्रजीवाघातात्फलजीवया हृतात्कर्णः
कोटिं विनाथवा स्पात्त्रिज्या दोःफलसमभ्पासात् ।

फलज्पास्फुटीकरणविधिः पंचमः ।

Ms. B : 34 c °मेव मध्पमे 35 b °श्छेदेन 35 d °स्फुठे

## 6. तिथ्याद्यानयनविधिः

[तिथिसाधनम्]

भानूनविधोर्भागा द्वादश[१२]भक्ताः फलं गतास्तिथयः ।
षष्टि[६०]घ्ने गतगम्ये गतिविवरांशोद्धृते नाड्यः ॥ १ ॥

[नक्षत्रसाधनम्]

त्रि[३]गुणा ग्रहस्य भागा खाब्धि[४०]हृता भानि येययाते च ।
नख[२०]निहते स्वगतिहृते दिनादि भोग्यभुक्तर्क्षभोगः स्यात् ॥ २ ॥

[अध्यर्धसमार्धभोगनक्षत्राणि]

स्थूलोऽयं स्पष्टोऽसावध्यर्धसमार्धभोगो यः ।
तं वच्म्यधुनाऽभिजितः स्फुटभोगोऽहं विशेषेण ॥ ३ ॥

ब्राह्मोत्तराविशाखादित्यान्यध्यर्धभोगसंज्ञानि ।
वारुणसार्पार्द्रानिलयाम्यैन्द्राण्यर्धभोगीनि ॥ ४ ॥

---

Text of Ms. A:

[1] भानूनविधोभगिा द्वादशभक्ताः फलं गतास्तिर्थंषः
षष्टिघ्ने गतिगम्ये गतिविवरांशोद्धृते नाड्यः ।

[2] त्रिगुणा ग्रहस्प भागाः खादिहृता भानि येययात च
नखनिहते स्वगतिहृते दिनादि भोग्पर्क्षभोगस्स्पात् ।

[3] स्थूलोयं स्पष्टोसावध्पर्धसमार्धभोगा यः
तं वच्म्पधुनाभिजितः स्फुटभोगोहं विशेषेण ।

[4] ब्राह्मोत्तराविशाखादित्पान्पध्पर्धभोगसंज्ञानि ॥ ॥
वारुणसायाद्रानिलयाम्पेन्द्रान्पर्धभोगीनि ॥ ॥

Ms. B: 4 c °सापाद्रा°

समभोगीन्यन्यानि समभोगो मध्यमा गतिः शशिनः ।
स्वदलयुतोऽध्यर्धाख्यो भोगो दलितो हि खण्डसंज्ञः ॥ ५ ॥

[अभिजिन्नक्षत्रस्य स्फुटभोगः]

भगणाश्चक्राच्छुद्धा भोगोऽभिजितोऽथवेन्दुभगणहृताः ।
क्ष्माहाः फलं भ[२७]हीनं घटिकाद्यो भ[२७]घ्नशशिभगणाः ॥ ६ ॥
वियुताः क्वहाद् गतिघ्ना भगणविभक्ता विधोः कलादिर्वा ।
भगणकलाः[२१६००] शशिभुक्त्या भजिताः शेषोऽथवा प्रोक्तः ॥ ७ ॥

[स्फुटनक्षत्रसाधनम्]

द्युचरो भभोगहीनो गतयेया लिप्तिकाः स्वभुक्तिहृताः ।
दिवसादिभोगो [भवति] द्युचराक्रान्तस्य धिष्ण्यस्य ॥ ८ ॥

[अभिजिन्नक्षत्रस्य संस्थितिः]

वैश्वान्त्यांघ्रावभिजिच्छ्रवणघटीचतुष्टये [४] प्रथमे ।
तत्रेष्टं भवति कृतं जातस्य मृत्युरचिरेण ॥ ९ ॥

---

Text of Ms. A :

[5] समभोगीन्पन्पानि समभोगो मध्पमा गतिः शशिनः
स्वदलयुताध्पर्धाख्यो भागो दलितादखंहमध्पः ॥

[6] भगणाच्चक्राश्छुद्वा भोगोभिजिताथवेद्रंभगणहृताः
क्ष्माहः फलं भहीनं घटिकाद्यो भघ्नशशिभगणः ।

[7] वियुत्काः क्वाहा गतिघ्ना भगणविभक्ता विधो कलादि वा
भगणकला शशिभुक्त्या भाजिताः शेषोथवा प्रोक्तः ।

[8] द्युचरो भभोगहीनो गतयेया लिप्तिकाः स्वभुक्तिहृताः
दिवसादिभोगो द्युचराक्रांतस्प धिष्ण्यस्प ।

[9] वैश्वांत्पांघ्रावभिजिश्छवणघटीचतुष्टये प्रथमे
तत्रेष्टं भवति कृतं जातस्प मृत्पुरचिरेण ।

[नक्षत्रशशियोगः]

**षड्भानि पौष्णसंज्ञाद्रौद्राद् द्वादश नवेन्द्रसंज्ञाच्च ।**
**प्राङ्मध्यान्त्यदलेषु व्रजन्ति योगं समं शशिना ॥ १० ॥**

[करणसाधनम्]

**वीनेन्द्वंशा भक्ता रसैः [६] फलं व्येकमश्व[७]हृतशेषम् ।**
**करणं गतागतकला गतिविवरांशोद्धृता नाड्यः ॥ ११ ॥**

[स्थिरकरणानि]

**कृष्णचतुर्दश्यन्ते शकुनिः कुह्वाश्चतुष्पदः प्रथमे ।**
**खण्डे च परे नागं प्रतिपत्पूर्वे च किंस्तुघ्नम् ॥ १२ ॥**

[योगसाधनम्]

**रविचन्द्रयोगलिप्ताः खखवसु[८००]भक्ताः फलं गता योगाः ।**
**खरस[६०]गुणे गतयेये गतियुतिभक्ते फलं नाड्यः ॥ १३ ॥**

[व्यतिपातवैधृतयोर्लक्षणम्]

**चक्रार्धे व्यतिपातो रविचन्द्रयुतौ समाज्यमधुयोगात् ।**
**विषवच्चायनभेदे क्रान्तिसमत्वे तयोः पतति ॥ १४ ॥**

---

Text of Ms. A :

[10] षड्भाभिपौष्णसज्ञाद्रौद्राद्द्वादश नवैन्द्रसंज्ञाश्च
प्रान्मध्यांत्पदलेषु व्रजंति योगं समं शशिना।

[11] वीनेन्द्वंशा भक्ता रसैः फलव्यैकमश्चिहृतशेषं
करणं गतागतकाला गतिविवरांशोद्धता

[12] कृष्णचतुर्दश्यंते शकुनिः कुह्वाश्चतुष्पद प्रथमे
खंड च परे भागं प्रतिपत्पूर्वे च किंतुघ्नं ।

[13] रविचंद्रयोगलिप्ताः खखवसुभक्ताः फलं गता योगाः
खरसगुणे गतयेये गतिघुतिभक्ते फलनाड्यः ॥

[14] चक्रार्धे व्यतिपातो रविचंद्रपुतौ समाज्पमधुयोगात्
विषुवच्चायने भेदे क्रांतिसमत्वे तयोः पत्तति

**चक्रे वैधृतमेवं क्रान्तिसमत्वे तथायनैकत्वे ।**

[क्रान्तिसाम्ये रवीन्दुपाताः]

**ऊनाधिकलिप्ताभ्यो गतियुतिलब्धा द्युगणनाड्यः ॥ १५ ॥**

**स्वफलेन युक्तहीना रवीन्दुपाता**

[पातस्य सम्भवासम्भवम्]

**विधावयनसन्धौ ।**

**विदिशोः क्षेपक्रान्त्योः क्रान्त्यूनोऽपक्रमः परमः ॥ १६ ॥**

**यदि विक्षेपादूनः पाताभावस्तदन्यथा भवति ।**

[अयनसन्धिः]

**अयनादेः प्रागूर्ध्वं पञ्चाग्नि[३५]भिरंशकैस्सन्धिः ॥ १७ ॥**

[चन्द्रक्रान्तिविषये विशेषः]

**एकदिशोर्व्यतिपातः क्रान्त्योर्विदिशोस्तु वैधृतं भवति ।**

**दिग्भेदेऽपक्रमणं महदप्यूनं विधोर्ज्ञेयम् ॥ १८ ॥**

[पातस्य गतागतत्वम्]

**विषमपदगे यदीन्दोः क्रान्तिर्महती सहस्रगुक्रान्तेः ।**

**भूतोऽन्यथा तु भावी समपदगे व्यत्ययात्पातः ॥ १९ ॥**

---

Text of Ms. A :

[15] त्वक्रे । वैधृतिमेवं क्रांतिसमत्वे तथाघनैकत्वे
ऊनाधिकलिप्ताम्पो गतियुतिलब्द द्युगणभत्कः ॥

[16] स्वफलेन युक्तहीना रवींदुपाता विधावयनसंधौ ।
विदिशो क्षेपक्रांत्पोः क्रांत्पूनोयक्रमः परमः ।

[17] यदि विक्षेपादूनः पात्तोभावस्तदान्पथा भवति
अयनादेः प्रागूर्ध्वं पंचाग्निभिरंशकैस्संधिः ।

[18] एकदिशोव्पतिपातः क्रांत्पोविदिशोस्तु वैधृतं भवति ।
दिग्भेदोपक्रमणा महदप्पूनं विधोर्ज्ञेयं ॥

[19] विषमपदगे यदीन्द्रौ क्रांतिर्महंती सहस्रगुक्रांतेः
भूतोन्पथा तु भावी समपदगो व्पत्पयात्पातः ।

Ms. B : 15 d °लब्द 19 d °त्पोत:

[पातकालसाधनम्]

विवरयुती व्यतिपाते युतिविवरे वैधृते समान्यदिशोः ।
क्रान्त्योः प्रथमो राशिः स्वेष्टघटीभिस्तथान्योऽपि ॥ २० ॥

[प्रथमविधिः]

जिन[२४]भागज्यागुणिता जीवास्सर्वास्त्रिभज्यया भक्ताः ।
क्रमजीवाः क्रमलिप्ताः तच्चापान्यन्तरे स्थाप्याः ॥ २१ ॥
गतमैष्यं वा पातं विज्ञाय प्रथमराशितश्चंद्रात् ।
धनुकलिका विज्ञेयाः खण्डक्रान्तिलिप्तिकास्ताश्च ॥ २२ ॥
शोध्याः प्रथमात् स्थाप्यं खण्डधनुःशेषचापकलिकाश्च ।
व्युत्क्रमखंडवशात्तत्खण्डधनुर्युतिं विभजेत् ॥ २३ ॥
भुक्त्यन्तरेण लब्धं दिनादि चैवं गते पाते ।
विषमपदस्थे चन्द्रे भाविनि पाते तु पूर्ववत्साध्या ॥ २४ ॥
खण्डधनुःक्रान्तिकलास्तद्धीनास्सकलखण्डकलाः ।
शोध्याः प्रथमात् स्थाप्यं खण्डधनुर्वर्जितं चापम् ॥ २५ ॥

---

Text of Ms. A :

[20] विवरघुति व्पतिपातो घुतिविवरवैधृते समान्पदिशोः
क्रांत्पोः प्रथमो राशि । स्तथेष्टरातीभिरन्पेपि ।
[21] जिवभागज्पागुणिती जीवास्सर्वास्त्रीभज्पया भत्काः
क्रमाजीवात्क्रमलिप्ता तच्चापान्पंतरे स्छाप्पाः ॥ ॥
[22] गतमैष्पं वा पातं विज्ञाय प्रथमराशितश्चंद्रात् ।
ध्रकलिकाद्विधेया । खंडःक्रांतित्विभिप्तिकास्ताश्च ।
[23] शोध्पाः प्रथमात्स्छप्पं खंडयनुशेषचापकलित
व्युत्क्रमखंडवशात्तत्खंडयनुर्युति विभजेत् ॥ ॥
[24] भुक्त्यंतरेण लब्दं दिनादि चैवं गते पाते ।
विषमे पदस्छे चंद्रभाविनि पाते तु पूर्ववत्साध्पा ।
[25] खंडधनुःक्रांतिकलास्तद्वीनास्सकलखंडकलाः
शोध्पाः प्रथमात्स्छाप्पं खंडधनुर्वर्जितं चापे ।

Ms. B : 22 d क्रांतित्विप्तिका° 23 c ह्यु्क्रम° 24 a लब्दं 25 b °स्तद्बीना°

शेषाः चापकलिकाः खण्डधनुर्वर्जिते चापे ।
योज्याः तस्माद्दिनादि पूर्वोक्तकर्मणा चन्द्रे ।। २६ ।।
समपदगे संशोध्योऽनेहसा तस्य पातसमयस्सः ।
खण्डधनुःक्रान्तिकला आद्यान्न पतन्ति चेत्तदा प्रथमात् ।। २७ ।।
तत्त्वयम[ २२५ ]ग्राद्बिम्बक्रान्तिखण्डाप्तकलिकाभिः ।
दिग्दर्शिता स्वबुद्ध्या स्पष्टः साध्यो विनेष्टघटिकाभिः ।। २८ ।।

[द्वितीयविधिः]

यदि भूतो भावी वा द्वयोर्विशेषोऽन्यथा युतिर्हारः ।
आद्येष्टहतेर्नाड्यः प्रथमवशान्मध्यमेताभिः ।। २९ ।।
तात्कालिकैर्ग्रहैस्तैरसकृत्त्ववशिष्टमध्यनाडीघ्नम् ।
मानैक्यार्धं भक्तं प्रथमेनाप्तघटिकाभिराद्यन्तौ ।। ३० ।।
निजबिम्बापक्रान्त्या रविमानापक्रमाज्जहातीन्दुः ।
यावत्सममार्गगतस्तावत्पातोक्तफलसिद्धिः ।। ३१ ।।

---

Text of Ms. A :

[26] शेषा चापकलिका खंडधनुर्वर्जिते चापे
यो - - - - ज्यादिना विपरीते कर्मणा चंद्रे ।
[27] समयदगे संशोध्योनेहासंनस्प पातसमयस्प ।
खंडधनुः क्रांतिकलम आद्यान्न पतंति चेत्तदा प्रथमात् ।
[28] तत्त्वमयग्राद्विचक्रांतिखंडाप्तघटिकाभिः
दिग्दर्शिता खवुद्ध्या स्पष्टस्साध्पो विनेष्टघटिकाभिः ।
[29] पदि भूति । भावी वा द्वयोर्विशेषोत्पथा युतिर्हारः
आद्येष्टहृतेर्नाड्यः प्रथमवशान्मध्पमेताभिः ।
[30] तात्कालिकैर्ग्रहैस्तैरसकृत्त्ववशिष्टमध्पनाडीघ्नं ।
मानिक्यार्धं भक्तं प्रथमेनाप्तघटिकाभिराद्यंतौ ।
[31] निजविंवापक्रांत्पा रविमानापक्रमाज्जहातीन्दुः
यावत्सममार्गगतस्तावत्पातोक्तफलसिद्धिः ।

Ms. B : 27 a समपदगे 27 c क्रान्तिकला 28 c स्वबुद्ध्या

[मध्यतिथेः स्पष्टतिथ्यानयनम्]

रविशशिफले विधेये मध्यतिथिकलासु रविफलं व्यस्तम् ।
तिथिविवरांशहृता सा स्पष्टा ग्रहवच्चरार्धेन ॥ ३२ ॥

[रविचन्द्रयोः समलिप्तीकरणम्]

तिथिगतयेयघटीघ्न्यौ रवीन्दुभुक्ती विभाजिते षष्ट्या ।
फललिप्तावियुतयुतौ तिथ्यन्ते समकलौ भवतः ॥ ३३ ॥

गतयेयविकलघ्ने गती रवीन्द्वोर्गमान्तरेण हृते ।
फललिप्ताभिः प्राग्वद्वियुतयुतौ [वा] समकलौ स्तः ॥ ३४ ॥

तिथियेययातघटिकातुल्यकलाभिर्युतोनितेन्दुरवी ।
तिथिलिप्ताभिश्चेन्दुः समलिप्तौ वा विधूणकरौ ॥ ३५ ॥

[करणान्ते तिथ्यन्ते पूर्णान्ते मासान्ते वा रविचन्द्रौ]

करणान्ते तिथ्यन्ते समौ कलाभिस्तथा च पूर्णान्ते ।
समभागौ मासान्ते समराशी भास्करेन्दू स्तः ॥ ३६ ॥

---

Text of Ms. A :

[32] रविशशिफले विधेये मध्यतिथिकलासु रविफलव्यस्तां
तिथिविवरांशहृता सस्पृष्टा ग्रहवच्चरार्धेन

[33] तिथिगतयेयघटोघ्नी रवीन्दुभुक्तिविभाजिते षष्टया ।
फललिप्तावियुतयुतौ तिथ्यंते समकलौ भवतः ।

[34] गतयेयविकलग्रे गती रवीन्द्वोर्ग्रमान्तरेण हृतेः
फललिप्ताभिः प्राग्वद्वियुतयुतौ समकलौ स्तः ॥

[35] तिथययात्तघटिकातुल्पकलाभिर्युतोनितौ चंद्रः
तिथिलिप्ताभिश्चैव समलिप्तौ वा विधूणकरौ ।

[36] करणाते तिथ्यंते समौ कलाभिर्जयार्धपूर्णाते ।
समभागा मासाति समराशी भास्करेन्दू स्तः ।

Ms. B : 32 b °व्यस्तं 35 a तिथयपपात्त°

[अवमपातकाल:]

पतितावमस्य दिवसा मध्यतिथिकलास्स्वतत्त्व[२५]भागोनाः ।
याता भुक्तिविशुद्धा येयास्स्युर्वसुकृतेः [६४] शुद्धा ॥ ३७ ॥

[सङ्क्रमकाल: पुण्यकालश्च]

गत्यंशहृतं बिम्बं सङ्क्रमकालो ग्रहस्य घटिकादिः ।
पुण्यतमोऽर्कस्यायं राश्यन्तं त्यजति रविबिम्बम् ॥ ३८ ॥
शशिबिम्बं षष्टिगुणं गतिविवरहृतं च करणतिथ्यन्तम् ।
गतियुतिहृद्योगान्तं मिश्रफलोऽत्र स्थितो द्युचरः ॥ ३९ ॥
अत एवानिष्टानामाद्यन्तौ तिथिकरणयोगानाम् ।
नेष्टो विष्टेर्वारस्तिथित्रयस्पृक्च यो भवति ॥ ४० ॥

[अधिमासावमयोः पतनकाल:]

अधिमासशेषकाद्यस्त्वधिमासैराप्यते दिनादिफलम् ।
तदतीतमधिकशेषहीनाद्रविवासरौघतो लब्धम् ॥ ४१ ॥

---

Text of Ms. A :

[37] पतितावमस्प दिवस्ममध्पतिथिकलास्स्वतत्त्वभागोनाः
याता भक्तिविशुद्धा येयास्स्पुर्वसुकृतः शुद्धाः ।

[38] गत्पंशहृतविवं सक्रमकालो ग्रहस्प घटिकादिः ।
पुण्पतयोर्कस्पायं शश्पंतं त्पजति रविविवो

[39] शशिवेम्रषष्टिगुणं गतिविवरहृतं च करणतिथ्यंतं ।
गतियुतिहृद्योगांतं मिश्रफलोत्र स्थितो द्युचरः ।

[40] अत पवानिष्टानामाद्यंतौ तिथिकरणयोगानां
निष्टो विष्टेर्वारस्तिथित्रयंस्पृक्वयो भवति ।

[41] अधिमासशेषकाद्यस्वदधिमासैराप्पते दिनादिफलं ।
तदतीतमधिकशेषहानाद्रविवासरौगतो लब्दं ।

पतति दिनैस्तावद्भिस्तद्द्युतिरधिमासके पतनकालः ।
स्वान्निर्गमाच्छशिदिनैरेवं प्रोक्तोऽवमस्य विधिः ।। ४२ ।।

तिथ्याद्यानयनविधिः षष्ठः ।

Text of Ms. A :

[42] पतति दिनैंस्तावद्भिस्तद्द्युतिरधिमासके पतनकालः ।
स्वान्निर्गमास्छशिदिनैरेवं प्रोक्तोवमस्य विधिः ।

तिथ्यानयनविधिष्षष्टः

# 7. प्रश्नविधिः

[उपोद्घातः]

स्पष्टगतावपि वच्मि प्रश्नाध्यायं वि[द्व]द्दैवविदाम् ।
मतिकुमुदिनीशशाङ्कं कुतन्त्रविन्नागसिंहं यत् ॥ १ ॥

[प्रश्नाः]

यः कोटिभागैः [कुरुते] भुजांशान् भुजांशकैर्वेत्ति च कोटिभागान् ।
भुजञ्च केन्द्राद् द्युच[रस्य] केन्द्रान्मध्यं स वेद स्फुटखेटचेष्टाम् ॥ २ ॥

कोटचंशकैर्यः कुरुते भुजज्यां बाह्वंशकैर्वेत्ति च कोटिजीवाम् ।
बाहुज्ययाऽग्रामनया च दोर्ज्यां जानात्यसौ स्पष्टगतिं ग्रहाणाम् ॥ ३ ॥

क्रमज्यया स्वोत्क्रममौर्विकां तया निजक्रमज्यां श्रवणं विनाग्रकम् ।
भुजज्यया च श्रवणाच्च कोटिकां तया च दोर्ज्यां कुरुतेऽस्तधीमलः ॥ ४ ॥

---

Text of Ms. A :

[1] स्पष्टगतावपि वच्मि प्रश्माध्पायं विद--दैवविदां ।
मतिकुमुदिनीशशांकं कुतंत्रविन्नागसिंहं यत् ।

[2] घः कोदिभागै --- भुजांशान् भुजांशकैर्वेत्ति च कोटिभागान् ।
भुजश्च केन्द्रं द्युचकेन्द्रात्मन्मध्पे च वेद स्पुटखेटचेष्टां ।

[3] कोद्यंशकैद्यः कुरुते भुजज्पां वाह्वंशकैर्वेत्ति च कोटिजीवं ।
वाहुज्पयाग्रामनया व दोर्ज्पां जानाम्पसौ स्पष्टगतिं ग्रहाणां ।

[4] क्रमज्पया स्वोत्क्रममौर्विकां तथा निजक्रमज्पां श्रवणं विना ग्रहाः
भुजज्पपा व श्रवणाच्च कोटिकां तया व दोर्ज्यं कुरुतेस्तधीमलः ।

Ms. B : 1 b प्रश्नाध्पायं 2 a कोटिभागैः

स्पष्टीकरोति बहुधा स्वफलैर्ग्रहान् यो भुक्तीश्च केन्द्रमपि मन्दचलोच्चसंज्ञम् ।
कुर्यात् स्फुटं दिविचरं स्वखगं च मध्यं वेत्ति स्फुटां ग्रहगतिं खलु [दैववि]त्सः ॥ ५ ॥

तुङ्गमेव कुरुते स्फुटग्रहं तद्गतिं च ख[लु] भुक्तिमैन्दवीम् ।
यातयेयदिनयोस्तथाद्यजां वेत्त्यसौ स्फुटगतिं दिवौकसाम् ॥ ६ ॥

मध्यभुक्तिसदृशी स्फुटा गतिः खेचरस्य मृदुकर्णसाधिता ।
मन्दकेन्द्रमथ तत्र कीदृशं ब्रूहि वेत्सि यदि तत्त्वमीदृशम् ॥ ७ ॥

यातकालमवमावशेषजं भूदिनौघखगपर्ययादिना ।
पातकालमवमस्य वेत्ति यः स्यादसाववमपातविद्बुधः ॥ ८ ॥

स्पष्टमेव ख[च]रं द्युराशितो वेत्ति वाऽभिहितखेचरोदये ।
अश्विनस्य खलु वा प्रसाधयेद्यस्स वेत्ति विमलां स्फुटां गतिम् ॥ ९ ॥

ज्याभिर्विनैव कुरुते भुजकोटिजीवे चापं च यः स्फुटखगं च करोति मध्यम् ।
तुङ्गात्तथोच्चगतिमध्यगती स्फुटे यश्चेष्टां करामलकवद्द्युसदां स वेत्ति ॥ १० ॥

---

Text of Ms. A :

[5] स्पष्टीकरोति वहुधा स्वफलैर्ग्रहान्पो भुक्तीश्च केन्द्रमपि मन्दफलोच्चसंज्ञं ।
कुर्यात्स्पुटं दिविचरं सखगं च मध्यं वेत्ति स्फुठां ग्रहगतिं क – – – खलु कत्सः

[6] तुंगमेव कुरुते स्फुटग्रहं तद्गतिं च खभुक्तिमैन्दवीं ।
पातपेयदिनयोस्तथाद्यजं वित्त्पसौ फुटगतिं दिवौकसां ।

[7] मध्पभुक्तिसदृशी स्फुटा गतिः खेचरस्प मृदुकर्णसाधिता ।
मंदकेन्द्रमथ तत्र कीदृशं व्रूहि वेत्सि घदि तत्वमीदृशं ।

[8] यातकालमवमावशेषकं । भूदिनार्धमभपर्ययान्दिना ।
पातकालमवमस्प वोत्तेयः स्पादसाववपातविद्वध्रः ।

[9] स्फष्टमेव खरं द्युराशितो वेत्ति वाभि । हेत्तखेचरोदये ।
अश्चितस्प खलु वा प्रसाधयेद्यस्स वेति विमलां स्फुटां गतिं ।

[10] ज्पाभिर्विनैव कुरुते भुजकोटिजीवा चापं च यस्फुटखगं च करोति मर्घ्यं ।
तुंगात्तथोच्चगतिमध्यगत्ती स्फुटे यो चेष्टां करामलकवघ्रुसदां सूवेत्ति ॥ ॥

Ms. B : 8 b °पर्ययाव्दिना

त्रिज्यासमः कीदृशि शीघ्रकेन्द्रे कर्णो भुजज्यासदृशश्च कस्मिन् ।
ब्रूहि स्फुटां वेत्सि यदि ग्रहाणां चेष्टां तथाऽग्रान्त्यफलज्यया च ॥ ११ ॥

केन्द्रमिष्टफलतस्ततोऽथवा तद्ग्रहस्य दृगदृश्यकेन्द्रके ।
वक्रकेन्द्रमनुवक्रकेन्द्रकं तद्दिनानि गणकः स उच्यते ॥ १२ ॥

स्फुटर्क्षभोगं बहुधाऽभिजिद्गतिं विनिघ्निनः स्पष्टगतिं च वेत्ति यः ।
दिवौकसः सङ्क्रमकालनाडिकाः स वेत्ति सम्यग्गणकः स्फुटां गतिम् ॥ १३ ॥

आद्यन्तौ व्यतिपातवैधृतिकयोः पर्वांतयोश्च स्फुटं
तिथ्यन्तं करणान्तमेव हि तथा योगान्तमार्क्षं तथा ।
यो जानाति समौ खरांशुशशिनौ लिप्तांशराश्यादिकौ
त्रिक्स्पृग् वा दिवसाधिपं स गणको नान्योऽस्ति तस्यापरः ॥ १४ ॥

---

Text of Ms. A :

[11] त्रिज्यासमः कीदृशि शीघ्रकेन्द्रे कर्णो भुजज्पासदृशश्च कस्मिन्
ब्रूहि स्फुटां वेत्सि यदि ग्रहाणां चेष्टंस्तथाग्रांत्पफलज्पया च ।

[12] केन्द्रमिष्टफलतस्ततोथवा तद्ग्रहस्प दृगदृश्पकेन्द्रके
वक्रकेन्द्रमनुवक्रकेन्द्रकं तद्दिनानि गणकस्स उच्पते ।

[13] स्फुटक्षभोगं बहुधाभिजिद्गतिः विनिन्हिनो स्पष्टगतिं च वेत्ति यः
दिवौकसस्संक्रमकालनाडिकास्स वेत्ति सम्पग्नणितस्स्फुटां गतिं ।

[14] आद्यंतौ व्पतिपातवैधृतिकयोर्मृ¯तयोश्च स्फुटां
तिथ्यंतं करणांतमेव हि तथा योगांतमार्क्षं तथा
यो जानाति समौ स्वरांशुशशिनौ लिप्ताशराश्पादिकौ
त्पहस्स्पृग्दिवसाधिपं स गणको नान्योस्ति तस्पापरः ।

Ms. B : 14 c खरांशुशशिनौ

अत्यन्तशीघ्रामथ शीघ्रसंज्ञां निसर्गजातां मृदुसंज्ञितां च ।
सुमन्दवेगां खलु वक्रनाम्नीमतीववक्रां कुटिलां तथैव ॥ १५ ॥
अष्टप्रकारां द्युचरस्य भुक्तिं यः केन्द्रभेदैर्गणकस्तु सम्यक् ॥ १६ ॥

प्रश्नविधिः सप्तमः ।

इति श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्वरविरचिते स्फुटसिद्धान्ते स्वनामसंज्ञिते स्फुटगत्यधिकारो द्वितीयः ॥ २ ॥

---

Text of Ms. A :

[15] अत्यंतशीघ्रामथ शीघ्रसंशां निसर्गजातां मृदुसंज्ञितां च ।
सुमंदवेगां खलु बक्रनाम्नीमतीतवक्रां कुटिलां त्तथैवां ।

[16] अष्टप्रकारां द्युचरस्प भुक्ति यः केन्द्रभेदर्गणकस्तु सम्पक् ।

प्रश्नविधिस्सप्तमः ।

श्रीमदानंदपुनायभट्टमहदत्तसुतवेश्वटेरविरचिते स्पुटसिद्धांते स्वनामसंज्ञिति ---
टगत्पधिकारो यः ॥ ॥

# III. त्रिप्रश्नाधिकारः

## 1. विषुवच्छायासाधनविधिः

[उपोद्घातः]

त्रिप्रश्नोक्त्या [ऽभिहितं] समस्तमष्टाधिकारजं यस्मात् ।
त्रिप्रश्नाह्वं तस्मादधिकारं स्पष्टमभिधास्ये ॥ १ ॥

[दिक्साधनविधयः]

समभुवि वृत्ते शङ्कोर्मध्यस्थस्य प्रभा क्रमाद्यत्र ।
प्रविशत्यपैति ककुभौ क्रान्तिवशात्स्तोऽपरैन्द्रचाख्ये ॥ २ ॥

तुल्यप्रभाग्रयोर्वा पूर्वापरयोः कपालयोर्बिन्दू ।
कार्यावपक्रमवशादपरैन्द्रचाख्ये दिशौ भवतः ॥ ३ ॥

वृत्तं रवौ प्रविष्टे सममण्डलसंज्ञितं प्रभा या स्यात् ।
समपूर्वापरगा सा सौम्या यत्र ध्रुवः सा स्यात् ॥ ४ ॥

---

**Text of Ms. A :**

[1] त्रिप्रश्नोक्त्या निखिलं समस्तमष्टाधिकारजं यस्मात्
त्रिप्रश्नाह्वं तस्मादाधकारं स्पष्टमभिधास्पे ।

[2] समभुवि वृत्ते शंकोर्मध्यस्पस्प प्रभा क्रमाद्यत्र
प्रविशत्पपैति ककुभौ क्रांतिवशात्स्तोयरैन्द्राघाख्ये ।

[3] नुल्पं प्रभाग्रयोर्वाः पूर्वापरयोः कलापयोर्विन्दू ।
कार्यावपक्रमवशादपरैन्द्राख्यो दिशौ भवतः

[4] वृत्तं रवौ प्रविष्टे सममंडलसंज्ञितं प्रभा या स्पात्
समपूर्वापरगा सा सौम्पा घत्र ध्रुवस्सा स्पात् ।

**Ms. B :** 3 a तुल्पं

इष्टाभाभुजकोटीरचितत्रिभुजस्य वा श्रवणतुल्या ।
यत्रेष्टाभा यावत् तावत्पूर्वापरा कोटिः ॥ ५ ॥

यत्रास्तमेति कश्चिद्द्युचरः क्रान्त्या विनोदयं याति ।
वरुणामरपत्योर्दिशौ [भवेते] क्रमादथवा ॥ ६ ॥

उदयति पौष्णं यत्र श्रवणो वा सा दिगिन्द्रस्य ।
स्थूलाऽथवा प्रदिष्टा चित्रास्वात्यन्तरं विबुधैः ॥ ७ ॥

छायात्रयाग्रजमीनद्व[य]मध्यगसूत्रयोर्युतिर्यत्र ।
याम्या सोत्तरगोले सौम्या याम्ये ककुब् नृतलात् ॥ ८ ॥

[छायाग्रभ्रमवृत्तम्]

छायात्रितयाग्रस्पृक्सूत्रयुतेर्वृत्तमालिखेत्तस्य ।
लेखां न जहात्याभा वनितेव कुलस्थितिं कुलोत्पन्ना ॥ ९ ॥

---

Text of Ms. A :

[5] इष्टाभाभुजकोटीरचितत्रिभुजस्प वा श्रवणतुल्पा ।
यत्रस्पोभा यावत्तावत्पूर्वापरा कोटिः ।

[6] यत्रास्तमोते कश्चिद्युचरः क्रांत्पा विनोदयं याति
वरुणापरायत्पोर्दिशौ पतेते क्रमादथवा ।

[7] उदयति पौष्ण पत्र श्रवणो वा सा दिगिंद्रस्प
स्छूलापवा प्रदिष्टा चित्रास्वात्पंतरं विवुधैः ।

[8] कायात्रयाग्रगामीनद्वमध्पगसूत्रयुतिर्यत्र
याम्पा सोत्तरगोले सौम्पा याम्पे ककुम्नतलात् ।

[9] छायात्रितयाग्रस्पृक्स्वूत्रपुतेर्वृत्तमालिखेत्तस्प ॥
लेखां न जहात्पामा वनितेव कुलस्छितिं कुलोत्पन्ना ।

Ms. B :　5 a °जकोटी　5 d °त्पूर्वीपरा

[ततः द्युदलाभाऽक्षाभाज्ञानम्]

याम्योत्तरलेखायां द्युदलाभा वृत्तशङ्कुविवरं यत् ।
याम्यमुदक्चाक्षाभाऽजतुलादिगते [च दिन]द्युतौ ॥ १० ॥

[छायाकर्णः छाया च]

शङ्कुप्रमाणवर्गाच्छायावर्गान्वितात्पदं कर्णः ।
कर्णकृतेः वाऽर्क[१२]कृतिं विशोध्य मूलं प्रभा भवति ॥ ११ ॥

[विषुवच्छायासाधनविधयः]

कार्यं स्थण्डिलमथवा वृत्तं जलसिद्धमस्तकं विपुलम् ।
भगणांशाङ्कितपरिधिं स्वस्कन्धसमुच्छ्रितं च सिद्धाशम् ॥ १२ ॥
तस्यापरभागस्थो दिग्योगन्यस्तदृष्टिरुद्यन्तम् ।
पश्यति यत्र खरांशुं तद्भागज्या रवेरग्रा ॥ १३ ॥
अग्रा द्वादशगुणिता क्रान्तिज्याभाजिता पलश्रवणः ।
श्रुतिशङ्क्वन्तरगुणितात्तद्योगान्मूलमक्षाभा ॥ १४ ॥

---

Text of Ms. A :

[10] याम्पोत्तरलेखायां द्युदलाभा वृत्तशंकुविवरं यत्
याम्पमुदघाक्षाभाजनुलादिगताघुते ।
[11] रंशंकुप्रमाणवर्गश्छायावर्गान्दितात्पदात्कर्णः
कर्णकृतेः वाकुकृतिं विशोध्प मूलं प्रभा भवति ।
[12] कार्यास्छंडिलमथवा वृत्तं जलसिद्धमस्तकविपुलं
भगाणाशांकितपरिधिस्वस्कंधवसमुश्छ्रितं च सिद्धांशं ।
[13] तस्पापरभागछादिग्पोगन्पस्तदृष्टिभाद्यत्तत् ।
पश्पति पत्र खरांशुं तद्भागज्पा रवेरग्रा ।
[14] अग्रा द्वादशगुणिता क्रांतिज्पाभांजिता पलश्रवणः
श्रुतिशंक्वांतरगुणितातद्योगान्म्रलमक्षाभा ॥

Ms B : 10 c घाम्पमुदद्याक्षा° 10 d °जतुलादिगताद्युते 12 b °स्तकं वि°

क्रान्तिज्याग्राकृत्योर्विशेषमूलं द्युमण्डले कुज्या ।
द्वादशगुणिता कुज्या क्रान्तिज्याहृत् पलाभा वा ॥ १५ ॥

सूर्याभिमुखी यष्टिर्धार्या तद्वत् त्रिभज्यया तुल्या ।
यद्वच्छायाभावः शङ्कुस्तल्लम्बकः प्रोक्तः ॥ १६ ॥
तत्पूर्वापरलेखाविवरं बाहुः नृयष्टि[भा]तुल्यम् ।
दृग्ज्या कर्णो यष्टिः द्युदलभुजो दृग्ज्यया तुल्यः ॥ १७ ॥
बाह्वग्रयोः समासो भिन्नदिशोरन्तरं तथैक[दिशोः ।
शङ्कुतलं शङ्कु(१२)गुणा] तज्ज्या लम्बकोद्धृताऽक्षाभा ॥ १८ ॥

सूर्य[१२]घ्ना वाऽक्षज्या लम्बज्याहृच्च पलभा वा ॥ १९ ॥

द्युदलच्छायाभ्यस्ता सूर्याग्रा च स्वदृग्ज्यया भक्ता ।
फलयुतहीना भुजवद्द्युदलाभा [वा] पलच्छाया ॥ २० ॥

---

Text of Ms. A :

[15] क्रांतिज्पाग्राक्रुत्पोर्विशेषमूलं घुमण्डले कुज्पा
द्वादशगुणिता कुज्पा क्रांतिज्पाहृत्पलाभा वा ।

[16] सूर्याभिमुखी यष्टिर्धार्या तद्वत्त्रिभज्पया तुल्या
घद्वश्छायाभावः शंकुस्तल्लम्वकः प्रोक्तः ।

[17] तत्पूर्वापरलोखाविचरं वाहु नृयष्टितुल्पं
दृग्ज्पा कर्णो यष्टिर्घुदलभुजो दृग्ज्पया तुल्यः ।

[18] वाह्वग्रयोस्समासो मित्नदिशोरंतरं तथैकं
तिज्पा लंवकोद्धृताक्षाभा

[19] सूर्यघ्ना वाक्षज्पा लंवज्पाहृच्च पलभा वा ।

[20] घुदलश्छायाभ्पस्ता सूर्याग्रा च स्वदृग्ज्पया भक्ता
फलयुतहीना भुजवद्द्युदलाभा पलश्छाया ।

Ms. B : 15 b °विशष°　　16 a °भिशुत्धीरवी°

इष्टद्वययोर्भुजयोस्समान्यककुभोर्वियोगसंयोगः ।
सूर्याहतो विभक्तः शङ्क्वोर्विवरेणा[क्षभा]ङ्गुलास्स्युः ॥ २१ ॥

अन्योन्यकर्णनिघ्नौ श्रुतिविवरहृतौ प्रभाद्वयोर्बाहू ।
इष्टे फलविवरयुतिः समान्यककुभोः पलच्छाया ॥ २२ ॥

द्वादशगुणिता वाऽग्रा सममण्डलशङ्कुभाजिताऽक्षाभा ।
स्वधृतिः समशङ्कुहृता रवि[१२]गुणिता वा पलश्रवणः ॥ २३ ॥

त्रिज्या द्वादशगुणिता भक्ता लम्बज्ययाऽथवा कर्णः ।
समकर्णगुणा कुज्या पलजीवाहृत् पलाभा वा ॥ २४ ॥

[स्वदेशाक्षः]

दिनदलदृग्ज्याचापं क्रान्त्या युतवर्जितं क्रियतुलादौ ।
अक्षोऽदक्षिणदृग्ज्याधनुषोना क्रान्तिरक्षः स्यात् ॥ २५ ॥

---

Text of Ms. A :

[21] इष्टायभुजयोस्सामान्पककुभोर्विशोषसंयोग:
सूर्याहतोर्विभत्कः शकोर्विवरेवाह्वगुलास्स्पुः ।

[22] अन्पोन्पकर्णनिघ्नौ शुतिविवरहृतौ प्रभाद्वर्पवह्व ॥
इष्टे फलविवरयुतिः सामात्पककुभोः पलश्छाया

[23] द्वादशगुणिता वाग्रा सममंडलशंकुभाजिताक्षाभा
स्ववृत्तिस्समंशंकुहृता रविगुणिता वा पलश्रवणः ॥

[24] त्रिज्या द्वादशगुणिता भक्ता लंवज्पयाथवा कर्णः
समकर्णगुणा कुज्पा पलजीवाहृत्पलाभा वा ।

[25] दिनदलदृग्ज्पाचाप क्रांत्पा युतवर्जिता क्रियतुलादौ
अक्षो दक्षणदृग्ज्पाधनुषोना क्रांतिरक्षस्स्पात् ।

**Ms. B :** 21 d शंको° 22 b °वाहू

शङ्कुं परिकल्प्य भुजं त्रिभुजेन विलोकयेत् ध्रुवमुदीच्याम् ।
यन्त्रेण दृष्टिभुजयोर्विवराग्रा वा पलच्छाया ॥ २६ ॥

उत्क्षिप्तैकाक्षिर्वा दक्षिणदिशि यस्य मस्तकासक्तम् ।
पश्यति पौष्णं शङ्कोस्तन्मूलदृगन्तरं वाऽक्षाभा ॥ २७ ॥

त्रिज्याग्राकृतिवियुतेः पदं द्विनिघ्नमुदयास्तसूत्रं स्यात् ।
उदयास्तसूत्रतस्याच्छङ्क्वग्रप्ररोपिणी स्वधृतिः ॥ २८ ॥
नृतलास्तोदयसूत्रान्तरं रवि[१२]गुणं नृहृत्पलाभा वा ।
स्वधृतिर्वा सूर्यगुणा शङ्कुविभक्ता पलश्रवणः ॥ २९ ॥

इष्टच्छायाभ्यस्तं नृतलं दृग्ज्योद्धृतं पलाभा वा ।
अथवेष्टकर्णगुणितं यष्टिविभक्तं [च] पलभा स्यात् ॥ ३० ॥

अग्रेष्टाभागुणिता दृग्ज्याभक्ता फलेष्टभाभुजयोः ।
एकान्यदिगुद्भवयोर्विव[रै]क्यं वा पलच्छाया ॥ ३१ ॥

---

Text of Ms. A:

[26] शंकुं परिकल्प्प भुजं त्रिभुजेन विलोकयेद्ध्रवमुदीच्पां
　　यंत्रेण दृष्टिभुजयोर्विवराग्रा वा पलश्छापा ।
[27] उक्षिप्तैकाक्षिर्वा दक्षिणदिकस्प सस्तकासक्तं ।
　　पश्यति पौष्णं शंकोस्तन्मूलदृगंतरं वाक्षाभा ।
[28] त्रिज्याग्राकृतिवियुतेः पदात्स्वनिघ्नमुदपास्तसूत्रं स्पात्
　　उदयास्तसूत्रतस्पाश्छंक्वग्रप्रारापेणी स्वधृतिः ।
[29] नृतलास्तोदयसूत्रान्तरं रविगुणं नहृत्पलाभा वा
　　स्वधृतिर्वा सूर्यगुणा शंकुविभक्ता पलशपणः ।
[30] इष्टश्छायाम्पस्तं नृतन्नं दृग्ज्पोद्धृतं पलाभा वा
　　अथवेष्टकर्णगुणितं यष्टिविभक्तं पलभा स्पात् ।
[31] अग्रेष्टभागुणिता दृग्ज्पाभक्ता फलेष्टभाभुजयोः
　　एकात्पदिगुद्भवयोर्विवक्यं वा पलश्छाया ।

Ms. B: 31 d °विवरैक्यं

इष्टश्रुतिगुणिताऽग्रा त्रिज्याहृते[ष्टाभावृत्तजाग्रा ।
इष्टश्रुतिगुणिता बाहुस्तथैव त्रिज्यया भक्ता] ॥ ३२ ॥
लब्धेष्टभाभुजान्या पलप्रभा प्रोक्तवद्वा स्यात् ॥ ३३ ॥

प्रोक्तफलाभाकृत्योर्विवरपदेनोदयास्तसूत्रं यत् ।
तच्छङ्कुभ्रमवृत्तान्तरं पलभेष्टभावृत्ते ॥ ३४ ॥

उज्जयिनीयाम्योत्तरयोजनविषया[५]हते[फलं यद्] वा ।
निजविषयादुत्त रेखाविषयनिरक्षान्तरं शरा[५]भ्यस्तम् ॥ ३५ ॥
रसकृत[४६]हृत्पलभागाः शर[५]गुणगगनाप[४०]हृदक्षाभा ॥ ३६ ॥

विषुवच्छायासाधनविधिः प्रथमः ।

---

Text of Ms. A :

[32] इष्टश्रुतिगुणिताग्रा त्रिज्याहृद्धे – – – – संगुणानृहृतो
[33] लब्देष्टभाभुजात्पा पलप्रभा प्रोक्तवद्वा स्पात् ।
[34] प्रोक्वफलाभाकृत्पोर्विवरपदेनोदयास्तसूत्रं यत्
तश्छंकुभ्रमवृत्तांतरं पलभेष्टभावृत्ते ।
[35] उज्जयिनीयाम्पोत्तरयोजभविषयाहते – – – वा
निजविषयादुत्तुरेखाविषयनिरक्षांतरं शराभ्पस्तं ।
[36] रसकृतहृत्पलभागाः शरगुणगगनापहृदक्षाभा ।

विषुवश्छायासाधनविधिः । प्रथमः ।

Ms. B : 33 a लब्दे०

## 2. लम्बाक्षज्यानयनविधिः

[अक्षज्यालम्बज्यानयनविधयः]

पलभार्क[१२]वर्गगुणितौ त्रिज्यावर्गौ पलश्रवणकृत्या ।
भक्तावनवाप्तमूले पलजीवालम्बजीवे स्तः ।। १ ।।

अथवा भार्क[१२]कृतिघ्ने त्रिज्ये भार्क[१२]हतश्रवणभक्ते ।
केवलया श्रुत्या [वा] लब्धी छायार्कसङ्गुणिते ।। २ ।।

त्रिज्याकृतिनिहतौ वा भाशङ्कू त्रिज्ययाहतश्रुत्या ।
भक्तौ वा भाश्रुत्या लब्धी त्रिज्याहते भवतः ।। ३ ।।

त्रिज्ये छायार्क[१२]घ्ने कर्णहृते वा पलावलम्बज्ये ।
नृच्छायानिहते वा छायाशङ्कूद्धृते वाऽन्ये ।। ४ ।।

लम्बज्याकृतिहीनात् त्रिज्यावर्गात्पदं पलज्या वा ।
पलजीवात्रिज्याकृति[वि]युतिपदं लम्बकज्या वा ।। ५ ।।

---

Text of Ms. A :

[1] पलभार्कवर्गगुणितौ त्रिज्पावर्गौ पलश्रवणकृत्पा
भक्तापवाप्तमूलि पलजीवालंवजीवे स्तः ।

[2] अथवा भार्ककृतिघ्ने त्रिज्पे भार्कहत्तश्रवणभक्ते
केवलया श्रुत्पा लव्दीश्छायार्कसंभक्ते ।

[3] त्रिज्पाकृतितिहतौ वा भाशंकुत्रिज्पपाहतः श्रुत्पा
भक्तौ वा नाहतया लव्दी त्रिज्पोद्धृते भवतः ।

[4] त्रिघ्नेश्छायार्कघ्ने कर्णहृते वा पलार्धलंवज्पे
भूश्छायानिहते वाश्छायाशंकूद्धृते वात्पे

[5] लंवज्पोकृतिहीनात्त्रिज्पावर्गात्पदं पलज्पा वा
पलजीवात्रिज्पाकृतियुतिपदं लवकज्पा वा ।

Ms. B : 2 d लव्दी° 3 d लव्दी

कुज्या भाकर्णघ्ना भावृत्ताग्रोद्धृताऽथवाऽक्षज्या ।
जिनभागज्याघ्नार्कज्याऽग्रज्याहृदवलम्बज्या ॥ ६ ॥
लम्बज्योनसमेतत्रिज्याघातात्पदं पलज्या वा ।
अक्षज्ययोनयुक्तत्रिगुणवधान्मूलमितरा वा ॥ ७ ॥

कुज्याक्रान्तिज्ये वा त्रिज्याघ्ने अग्रया हृते ते स्तः ।
अग्रासमशङ्कुज्ये त्रिगुणघ्ने तद्धृतिहृते वा ॥ ८ ॥

स्वधृति[हृते] वा त्रिज्ये नृतलनरघ्ने पलावलम्बज्ये ।
अक्षावलम्बकार्मुकहीनत्रिगेहाद् गुणौ वाऽन्ये ॥ ९ ॥

समशङ्कुक्रान्तिनरैरक्षज्यास्ताडिताः क्रमाद् विभजेत् ।
अग्राकुज्यानृतलैरवाप्तयो वाऽवलम्बज्याः ॥ १० ॥
लम्बज्याः क्रमशो वा कुज्याग्रानृतलताडितास्तु हरेत् ।
क्रान्तिज्यासमशङ्कुस्वेष्टनरैरक्षमौर्व्यः स्युः ॥ ११ ॥

---

Text of Ms. A :

[6] कुज्पा भाकर्णघ्ना भावृत्ताग्रोद्धृताथवाक्षज्पा
त्रिज्पाजिनभागज्पाघ्नार्कज्पाग्रज्पयाहृदवलंवज्पा ॥
[7] लंवज्पेनसमेतत्त्रिज्पाघातान्पदं पलज्पा वा
अक्षज्पयोनयुत्कत्रिगुणवधान्मूलमितरा वा ।
[8] कुज्पाक्रांतित्पे वा त्रिज्पाघ्ने अययाहृते ते स्तः
अग्रासमशंकुज्पे त्रिगुणघ्ने तद्वृत्तिहृते वा ।
[9] स्वधृति वा त्रिज्या नृतलनरघ्ने पलावलंवज्पे
अक्षावलंवकार्मुकहीनत्रिदेहांद्गुणो वात्ये ।
[10] समशंकुक्रांतिनरैरक्षज्पास्ताडिताः क्रमाद् विभजेत
अग्राकुज्पानृतलैरवाप्तयो वावलंवज्पा ॥
[11] लंवज्पाः क्रमशो वा कुज्याग्रानृतलताडितास्तु हरेत्
क्रांतिज्पासमश्रंकुस्वेष्टनरैक्षमौर्व्पास्स्पुः ।

**Ms. B :** 8 a °क्रांति° 8 d तद्धृतिहृते 9 d वान्ये

जिनभागगुणरविभुजगुणघातः समनरहृतोऽथवाऽक्षज्या ।
क्रान्तित्रिभगुणघातः समनरहृतोऽथवाऽक्षज्या ॥ १२ ॥

कुज्याग्रयोरप[क्र]मगुणाग्रयोरन्तरे त्रिभज्याघ्ने ।
अग्राहृते क्रमात्ते व्यस्तावलम्बज्याक्षज्ये ॥ १३ ॥

श्रुत्यर्कयोः श्रुतिभयोर्विवरे त्रिगुणाहते श्रुतिविभक्ते ।
उत्क्रमपललम्बज्ये क्रमाल्लम्बपलत्रिभगुणविवरे वा ॥ १४ ॥

अग्रातद्धृत्यन्तर-तद्धृतिसमनृविवरे त्रिभगुणघ्ने ।
तद्धृत्या प्रविभक्ते चोत्क्रमलम्बपलज्यके स्तः ॥ १५ ॥

नृतलस्वधृतिविशेष-स्वधृतिनृविवरे त्रिमौर्विकाभ्यस्ते ।
स्वधृतिविभक्ते वोत्क्रमलम्बकपलमौर्विके भवतः ॥ १६ ॥

उत्क्रमपललम्बज्याहृतौ पलगुणावलम्बगुणवर्गौ ।
लब्धे त्रिज्यारहिते लम्बाक्षज्ये [क्रमाद् भवतः ॥ १७ ॥

---

Text of Ms. A :

[12] जिनभागगुणरविभुजगुणघातस्समनरहृतोथवाक्षज्या
क्रांतित्रिभगुणघातस्समनरहृतोथवाक्षज्या ।

[13] कुज्याग्रयोरवमगुणाग्रयोरंतरे त्रिभज्याघ्ने
अग्राहृते क्रमाघ्ने व्यस्ताक्षज्यावलंवज्ये ॥

[14] श्रुत्यंकयोः श्रुतिभयोर्विवरे त्रिगुणांहते श्रुतिविभक्ते ।
तत्क्रमलंवाक्षज्ये क्रमपललवत्रिभगुणविवूरे वा ।

[15] अग्रातद्धृत्यंतरतद्धृतसमवृवरे त्रिभगुणघ्नो ।
तुद्धृत्पा प्रविभत्क चोत्क्रमपललंवज्ये स्तः ।

[16] नृपलस्वधृतिविशेषनृविर्वरे त्रिमौर्विकाभ्पस्ते
स्वधृतिविभत्के वोत्क्रमपललंवकमौर्विके भवतः ।

[17] उत्क्रमपललंवज्याहृतौ पलगुणावलंवगुणवर्गो
लंवत्रिज्यारहिते लम्वाक्षज्ये

Ms. B : 15 c उद्धृत्पा° 15 d °पललंवकज्ये

उत्क्रमपललम्बज्ये] व्यासघ्ने स्वकृतिवर्जिते च पदे ।
पललम्बज्ये व्यासौ तदूनगुणौ ते पदे वा स्तः ॥ १८ ॥

उत्क्रमजीवान्तरकृतिहीनत्रिज्याकृतेर्दलं यत्तत् ।
पलगुणहृल्लम्बज्या लम्बज्याहृत्पलज्या वा ॥ १९ ॥

त्रिज्यावर्गाद् द्विगुणाद् व्यस्तगुणान्तरकृतिं विशोध्य पदम् ।
उक्तान्तरोनयुक्तं दलितं पललम्बकज्ये वा ॥ २० ॥

तद्वाऽक्षज्योनं लम्बज्याऽक्षज्याऽवलम्बगुणहीनम् ।
त्रिज्योत्क्रमाक्षलम्बकगुणान्तरे लम्बकाक्षज्ये ॥ २१ ॥

चरदलजीवाद्युज्यावधोऽग्रया भाजितोऽथवाऽक्षज्या ।
समकर्णापमजीवाघातोऽर्कहृतोऽथवाऽक्षज्या ॥ २२ ॥

पलभाहृल्लम्बज्या नृतलाप्तात् नृभाक्षगुणघातात् ।
श्रुतिगुणिता क्रान्तिज्या भावृत्ताग्रोद्धृता वा स्यात् ॥ २३ ॥

---

Text of Ms. A :

[18] व्यासघ्नस्वकृतिवर्जिते च पदे
पदलंवज्पे व्यासौ तदूनगुणे तौ पदे वा स्तः

[19] उत्क्रमजीवांतरकृतिहीनत्रिज्पाकृतिर्दलं यत्तत् ।
पदगुणहृल्लंवज्पा लंचज्पाहृत्पलज्पा व ।

[20] त्रिज्पावर्गाद्द्विगुणाद्व्यद्व्यस्वगुणांतरकृतिं विशोध्प पदं ।
उक्तांतरोनयुक्तं दलितं पदलंवकज्पे वा ।

[21] तद्वाक्षज्पोनं दललवज्पाक्षज्पावलंवगुणहीनं ।
त्रिज्पोत्क्रमाक्षलंवकगुणांतरे लंवकाक्षज्पे ।

[22] चरदलजीवाद्युज्पावधोग्रया भाजितोथवाक्षज्पा ।
समकर्णापमजीवाघातोंकहृतोथवाक्षज्पा ।

[23] पलभाहृल्लंवज्पानृतलाप्ते वा त्रिभाक्षगुणघातात् ।
श्रुतिगुणिता क्रांतिज्पा भावृत्पाग्रोद्धृता वा स्पात्

Ms. B : 19 a तुत्क्रम° 20 a-b °गुणाद्व्यस्व°

तद्धनुषी लम्बाक्षावुत्क्रमधनुषी तथोत्क्रमाह्वाभ्याम् ।

[अक्ष-अक्षच्छाययोर्दिक्]

याम्योऽक्षोऽक्षच्छाया याम्या

[अयनचलनम्]

अजतुलाक्षविवरज्या ॥ २४ ॥

त्रिज्यागुणिता भक्ता परमापक्रान्तिजीवयाऽऽप्तधनुः ।
देयं ग्रहे यदा भा दक्षिणगोलादिगम्यभानुमतः ॥ २५ ॥
महती मेषादिगतच्छायातस्त्वन्यथा शोध्यम् ।
पातेऽन्यथा विधेयं चायं त्रिप्रश्नकर्मविधौ ॥ २६ ॥
षड्राश्यन्तरिताद् वा भानुमतोऽभीष्टकालिकात्साध्यम् ।
अयनचलनं स्वबुद्ध्या गणकेन हि चापचतुरेण ॥ २७ ॥

लम्बाक्षज्यानयनविधिर्द्वितीयः ।

---

Text of Ms. A :

[24] तद्धनुषी लंवाक्षावुत्क्रमधनुषी तथोत्क्रमाह्वाभ्पां ।
याम्पोक्षोक्षश्छायायाम्पाजतुलाक्षविवरज्पा

[25] त्रिज्पागुणिता भत्का परमापक्रांतिजीवयाप्तधनुः ।
देयं ग्रहे यदा भा दक्षिणगोलादिगम्पभानुमतः

[26] महती मेषादिगतश्छायात्तस्त्वन्पथा शोध्पं ।
पातोन्पथा विधेपे चापत्रिप्रश्नकर्मविधौ

[27] षड्राश्पंतरिताद्वा भानुमतोभाष्टकलिकात्साध्पं ।
अयतचलनं स्वबुद्धया गणकेन हि चापचतुरेण ।

लंवाक्षज्पानयनविधिर्द्वितीयः ।

Ms. B : 25 b °धतुः 26 c विधेयं 27 b °भीष्ट°

## 3. क्रान्तिज्यानयनविधिः

क्रान्तिः परा जिनांशाः [२४°] पराऽपमज्या जिनांशक[२४°]ज्योक्ता ।
तद्गुणिताऽर्कभुजज्या त्रिगुणहृदिष्टापमज्या स्यात् ॥ १ ॥

अष्टकृतिर्द्विगुणिता[२०८ × २] रविभुजजीवा त्रिबाहुखकु[१०२३]भक्ता ।
स्वेष्टापक्रमजीवा तच्चापं क्रान्तिरिष्टा स्यात् ॥ २ ॥

अथवा क्रमजीवाभिः प्रागुक्ताभिर्गुणोऽपमज्या स्यात् ।
क्रान्तिकलाभिर्मौर्वी क्रान्तिकलाः पूर्ववत्साध्याः ॥ ३ ॥

लम्बज्येष्टनृसमनरसूर्यै[१२]र्गुणिता क्रमादिलामौर्वी ।
अक्षज्यानृतलाग्राक्षाभाहृद्वाऽपमज्याः स्युः ॥ ४ ॥

द्वादशलम्बज्येष्टनृसमनरनिहता क्रमेण वाऽग्रज्या ।
अक्षश्रुतित्रिभज्यानिजधृतितद्धृतिहृदपमज्याः ॥ ५ ॥

---

Text of Ms. A :

[1] क्रांतिः परा जिनांशाः परा क्रमज्य जिनांशकज्पोक्ता ।
तद्गुणितार्कभुजज्पा त्रिगुणहृदिष्टावमज्पा स्पात्

[2] अष्टकृतिवर्गुणिता रविभुजजीव्पा त्रिवाहुखकुभक्ता ।
स्वेष्टोपक्वमजीवा तच्चापक्रांतिरिष्टा स्पात् ।

[3] अथवा क्रमजोवाभिः प्रागुक्ताभिर्गुणोपमज्पा स्पात् ।
क्रांतिकलाभिर्मौर्वी क्रान्तिकलाः पूर्ववसाध्पाः ।

[4] लंवज्पेष्टं नृसमनरसूर्यैर्गुणिता क्रमादिलामौर्वी
अक्षज्पा नृत्तलाग्राक्षाभाहृद्वापमज्पास्स्पुः ।

[5] द्वादशलंवज्पेष्टनृसमनरनिहता क्रमेण वाग्रज्पा ।
अक्षश्रुतित्रिभज्पानिजवृतितद्वृतिहृदपमज्पाः ।

अग्राक्षश्रुतिनिजधृतिविष्कम्भदलैर्हृतः समनरो वा ।
कुज्याक्षाभास्वेष्टनृ[तल]पलगुणनिघ्नोऽपमज्याः स्युः ।। ६ ।।

अक्षावलम्बजीवाघ्ना त्रिकृतिहृता तु तद्धृतिस्सा स्यात् ।
नृतलघ्नशङ्कुगुणिता तद्धृतिरथवा स्वधृति[कृति]विभक्ता ।। ७ ।।

द्वादशपलभागुणिते पललम्बज्ये समश्रवणभक्ते ।
क्रान्तिज्ये वा कुज्याग्राकृतिविश्लेषमूलं वा ।। ८ ।।

पलकर्णहतो दिनदलनरोऽर्कहृत् फलकुगुणयुतिविशेषः ।
याम्योत्तरयोस्तत्त्रिगुणकृतिवियुतिमूलमपमज्या ।। ९ ।।

पलभाधृतिघातोऽर्क[१२]विहृतश्छेदोऽग्राहतस्य नृतलस्य ।
प्राप्ता क्रान्तिज्याऽग्राकृतेः समच्छेदाल्लब्धं वा ।। १० ।।

---

Text of Ms. A :

[6] अक्षाग्रश्रुतिनिजधृतिर्विष्कंभदलैर्हृतस्समनरो वा
कुज्पाक्षाभास्वेष्टनृपलगुणनिघ्नोपमृज्पाः स्पुः ।

[7] अक्षावलंवघ्नजीवाघात्तेन हृता तु तद्वृत्तिस्सा स्पात् ।
नृतलघ्नशंकुगुणिता तद्वृत्तिरथवा स्वधृतिभक्ता ।

[8] द्वादशपलभागुणिते पललंवज्पे समश्रवणभत्के ।
क्रांतिज्पो वा कुज्पाग्राकृत्तिविश्लेषमूलं वा

[9] पलकर्णहृत्तो दिनदलभरोर्कहृत्फलकुगुणपुतिविशेषः
पाम्पोत्तरयोस्तत्त्रिगुणकुतियुतिभूलमयमज्पा

[10] थलभावृतिवात्तोर्कविहृत्श्छोदोग्राहतस्प नृतलस्पा
वाप्तक्रांतिज्पाग्राकृतेस्समश्छेदलव्दं वा

Ms. B : 6 d ॰पमज्याः　　9 c याम्यो॰　　10 b नृतलस्य ।

कुज्याहता धृतिर्वा छेदविभक्ताऽपमस्य जीवा स्यात् ।
पलभाग्रावधगुणितो नरोऽर्क[१२]गुणहारहृद्वा स्यात् ॥ ११ ॥

द्युज्यात्रिज्याकृत्योर्विशेषमूलं त्वपक्रमज्या वा ।
त्रिज्याद्युज्यायोगात् निजान्तरघ्नात्पदं वा स्यात् ॥ १२ ॥

द्युज्यार्क[१२]घातगुणिता चरार्धजीवाऽक्षभात्रिशिञ्जिन्योः ।
घातेन हृता लब्धं स्वेष्टापक्रान्तिजीवा वा ॥ १३ ॥[1]

क्रान्तिज्यानयनविधिस्तृतीयः ।

Text of Ms. A :

[11] कुज्याहता वृत्तिर्वाश्छेदविभक्ता अपमस्य जीवा
पलभाग्रावधागुणितो नरोर्कगुणहारहृद्वा स्यात्

[12] द्युज्यात्रिज्याकृत्योर्विशेषमूलं त्वयक्रमज्या वा
त्रिज्याद्युज्यायोगान्निजांतरघ्रात्पदं वा स्यात् ।

[13] त्रिज्यार्कघातगुणिता वरार्धजीवाक्षसाद्युशिजित्यो
घतिन हृता लव्दं स्वेष्टापक्रांतिजीवा वा ।

क्रातिज्यानयतविधिस्तृतीयः ।

Ms. B: 11 c °ग्रावधगुणितो 12 a द्युज्या° 12 d °न्निजांतर°
13 b चरार्धजीवाक्षमाद्युशिजित्यो ।

1. The first half of this verse occurs in the original text as
त्रिज्यार्कघातगुणिता चरार्धजीवाऽक्षभाद्युशिञ्जिन्योः
which is mathematically incorrect. The error has been rectified by interchanging त्रिज्या and द्युशिञ्जिनी in the edited text.

## 4. द्युज्यानयनविधिः

क्रान्तिज्यावर्गोनात् त्रिज्यावर्गात्पदं द्युजीवा स्यात् ।
त्रिज्याक्रान्तिज्यान्तरसमासघातस्य मूलं वा ॥ १ ॥

व्यस्तक्रान्तिज्याहृत्क्रान्तिगुणकृतेः फलं त्रिभज्योनम् ।
द्युज्या वा व्यस्तापमजीवात्रिज्यान्तरं वा स्यात् ॥ २ ॥

क्रान्तित्रिभान्तरज्या द्युज्या वा चरदलजीवया हृता ।
त्रिज्या क्षितिजीवाघ्ना स्वाहोरात्रार्धजीवा वा ॥ ३ ॥

धृतिगुणिता त्रिभजीवा हृताऽन्त्यया वा द्युमौर्विका भवति ।
शङ्कुत्रिज्याक्षश्रुतिवधादिन[१२]गुणान्त्ययाऽऽप्तं वा ॥ ४ ॥
त्रिज्यानृतलाक्षश्रुतिघातात् पलभाहृतान्त्ययाऽऽप्तं वा ।
अक्षज्याग्राघाते चरगुणभक्तेऽथवा द्युज्या ॥ ५ ॥

---

Text of Ms. A :

[1] क्रांतिज्पावर्गोनात्त्रिज्पावर्गात्पदं द्युजीवा स्पात्
त्रिज्पाक्रांतिज्पांतरसमासघातस्प मूलं वा

[2] व्पस्तक्रांतिज्पाहृत्क्रांतिगुणहृतिः फलं त्रिभज्पोनं ।
द्युज्पा वा व्पस्तापमजीवात्रिज्पांत्तरं वा स्पात्

[3] क्रांत्तितिभांतरज्पा द्युज्प वा चरदरजीवया विहृता
त्रिज्पा क्षतिजीवाघ्राहोरार्धजीवा चा ।

[4] धृतिगुणिता त्रिभजीवा हृतांत्पया वा द्युमौर्विका भवति
शंकुत्रिज्पाक्षश्रुतिवध्पाद्दिनगुणात्पयाप्तं वा

[5] त्रिज्पानृत्तलाख्पश्रुतिघातात्पलभाहृतांत्पयाप्तं वा
अक्षज्पाग्राघाते चरगुणभक्त थवा भुज्पा

Ms. B : 3 d °जीवां वा ।

क्रमगुणपलभात्रिज्याघातोऽर्क[१२]गुण[चर]जीवयाऽऽप्तो वा ।
पलभाक्षसमनरवधोऽर्क[१२]गुणचर[दलगुण]भक्तो वा ॥ ६ ॥

पलभाक्षतद्धृतिवधोऽक्षकर्णचरगुणहृत् [च दिवसजीवा] ।
द्युदलधृतिः कुज्योना सौम्ये याम्ये युता द्युज्ये ॥ ७ ॥

द्युज्या वोदग्याम्ये चाग्रगुणं दिनदलनृतलाभ्यस्तम् ।
दिनदलधृत्या भक्तं फलेन रहितान्विता [धृतिः] सैव ॥ ८ ॥

द्युज्यानयनविधिश्चतुर्थः ।

---

Text of Ms. A :

[6] क्रमगुणपलभात्रिज्पाघातोर्कगुणजीवयाप्तो वा
यलभाख्पगुणसमनरववोर्कगुणचरभक्तो वा

[7] पलभाख्पत्तद्वृतिवयोक्षकर्णचरगुणहृत्
द्युदलहृतिः कुज्पोना सौम्पपाम्पे युत्ता द्युज्पे ।

[8] कुज्पा वोदक्त्रिज्पाग्रैयन्निजांतराभ्पस्तं
द्विनदलधृत्पा भत्कं फलयुतरहित्तान्दिता चैव ।

द्युत्यानयनविधिश्चतुर्थः ।

## 5. कुज्यानयनविधिः

क्रान्तिज्याऽक्षज्याघ्ना लम्बकजीवाविभाजिता कुज्या ।
विषुवच्छायागुणिता क्रान्तिज्याऽर्को[१२]द्धृता वा स्यात् ॥ १ ॥

क्रान्तिज्याग्राघाते समनरभक्तेऽथवा महीजीवा ।
वाऽग्रा विषुवद्भाघ्ना पलकर्णविभाजिता कुज्या ॥ २ ॥

अग्राकृतिर्विभक्ता समधृत्या वा फलं कुजीवा स्यात् ।
नृतलाभ्यस्ता वाऽग्रा स्वधृतिविभक्ता महीजीवा ॥ ३ ॥

लम्बत्रिभगुणवधहृतसमनुर्वाऽक्षगुणवर्गलब्धं यत् ।
त्रिज्यार्कसमनृघातात्पलभाघ्नाक्षज्ययाऽवाप्तं वा ॥ ४ ॥[1]

---

Text of Ms. A :

[1] क्रांतिज्पाक्षज्पाघ्ना लंवकजीवाविभाजिता कुज्पा
विषुवच्छाघागुणिता क्रांतिज्पार्कोद्धृता वा स्पात् ।

[2] क्रांतिज्पाग्राघाते समनरभक्तेथवा महीजीवा ।
वाग्रा विषुवद्भाघ्ना पलकर्णविभाजिता कुज्पा ।

[3] अग्राकृतिर्विभक्ता समधृत्पा वा फलं कुजीवा स्पात्
नृतलाभ्पस्ता चाग्रा स्ववृतिविभक्ता महीजीवा ।

[4] लंवत्रिभगुणवधहृतसमनुर्वाक्षगुणवर्गलब्दं यत् ।
त्रिज्पार्कसमनृघातात्पलभाघ्नाक्षज्पयावाप्तं वा ।

Ms. B : 3 b समधृत्या 4 b °वर्गलब्दं

---

1. In verses 4-10(a-b), multipliers and divisors have been wrongly stated as divisors and multipliers. The error has been rectified in the English translation.

वाऽक्षश्रुतिशङ्कु[१२]गुणस्समनरो वाऽक्षप्रभाकृतिहृत् ।
समनृकृतितद्धृतिवधादग्राकृत्याहृतात् क्षितिज्या वा ॥ ५ ॥

शङ्कुस्वधृतिवधघ्नो नृतलकृतिहृतः समनरो वा ।
तद्धृतिलम्बगुणसमनृघातोऽग्राघ्नाक्षमौर्विकाहृद् वा ॥ ६ ॥

वाऽग्राघ्नाक्षज्याहृत्समनरवर्गस्त्रिभज्याघ्नः ।
तद्धृत्यर्कहृतिघ्नोऽग्राक्षाभाघातहृच्च समना वा ॥ ७ ॥

वाऽक्षाभाग्राहृतिहृत्समनरवर्गोऽक्षकर्णघ्नः ।
समनरलम्बगुणस्वधृतिवधोऽक्षगुणनृतलहृतिहृतो वा ॥ ८ ॥

त्रिज्याशङ्कुहृतिघ्नः समना नृतलाक्षगुणवधहृत् ।
स्वधृतिरवि[१२]समनरवधः पलभानृतलाभ्यासहृद् वा ॥ ९ ॥

---

Text of Ms. A :

[5] वाक्षश्रुतिलंवगुणस्समनरा वाक्षप्रभाकृतिहृत् ।
समनृकृतितद्वृतिवधादग्रकृत्पाहृता क्षितित्पा वा ।

[6] शंकुस्वधृतिवधघ्ना वृवलकृतिहृतस्समनरो वा ।
तद्धृतिलंवयुणसमनृघातोग्राघ्नाक्षमौर्विकाहृद्वा

[7] याग्राघ्नाक्षज्पाहृत्समनरवर्गस्त्रिभज्पघ्नः ।
तद्वृत्पर्कहृतिघ्नोग्राक्षाभाघातहृसमना वा ।

[8] वाक्षाभाग्राहृतिहृत्समनरवर्गोक्षकर्णघ्नः ।
समनरलंवगुणस्वधृतिवधोक्षगुणनृतलाहृतिहृतो वा

[9] षिज्पाशंकुहृत्तिघ्नस्समना नृतलार्क्षगुण्पवधहृत् ।
स्वधृतिरविसमनरवधः पलभाभृतलाभ्पासहृक्षितिज्पा

Ms. B : 6 a °वधघ्नां 7 a वाग्राघ्ना° 7 d °हृच्च समना वा ॥ 9 a त्रिज्याशंकु°

वाऽग्रानृतलवधहृतः समनरवर्गः स्वधृतिगुणितः ।

वाऽक्षज्यावर्गहता त्रिगुणकृतिहृता च तद्धृतिः कुज्या ॥ १० ॥

वाऽक्षाभावर्गहता तद्धृतिरक्षश्रवणकृतिहृत् ।

वा नृतलवर्गनिहता स्वधृतिकृतिहृता च तद्धृतिः ॥ ११ ॥

कुज्या वाऽग्रेष्टशङ्कुघातोऽक्षाभाघ्नः स्वधृतिरवि[१२]हृत् ।

घातो वाऽक्षगुणघ्नो लम्बज्यास्वधृतिघातहृत्कुज्या ॥ १२ ॥

वाऽग्राभिहतो घातः कुज्या स्वधृतिसमनरहृतिहृत् ।

द्युदलधृतिद्युज्यान्तरमथवा कुज्या

[द्यु]जीवया गुणितः ॥ १३ ॥

उन्नतगुणस्त्रिगुणहृतस्तद्धृतिविवरं महीजीवा ।

द्युज्याहता चरज्या त्रिज्याभक्ता [क्षितिज्या वा] ॥ १४ ॥

---

Text of Ms. A :

[10] चाग्रावृतलवधहृत्तस्समनरवर्गस्समधृतिगुणितः
वाक्षज्पावर्गहतत्रिगुणकृतिहृताश्च तद्वृतिः कुज्पा

[11] वाक्षाभावर्गहता तद्वृतिरक्षश्रवणकृत्तिहृत् ।
चानृतलवर्गनिहत्ता स्वर्ध्पतकृतिहृत्ता च तद्वृत्तिः

[12] कुज्पा वाग्रेष्टशंकुघातोक्षाभाघ्नस्स्वधृतिरविहृत् ।
घातो वाक्षगुणघ्नो लंबज्पास्वधृत्तिघातहृत्कुज्पा

[13] वाग्राभिहतो घात्तः कुज्पस्वधृतिसमनरहृत्तिहृत् ।
द्युदलहृद्युज्पातरमथवा कुज्पा जीवया गुणितः

[14] उन्नगुतणस्त्रिगुणहृत्तस्तद्वृत्तिविवरं महीजीवा ।
द्युज्पाहता चरज्पा त्रिज्पाभज्पा

Ms. B :　10 a वाग्रावृतल°　11 c वानृतल°

पलगुणभावृत्ताग्रावधो निजश्रवणहृत् क्षितिज्या वा ।
क्रान्तिज्याग्राकृत्योर्विवरपदं वा महीजीवा ॥ १५ ॥

कुज्यानयनविधिः पञ्चमः ।

---

Text of Ms. A :

[15] पलगुणभावृत्ताग्रावधो निजश्रवणहृत्क्षितिक्ष्पा वा
क्रांतिज्पाग्राकृत्पोर्विवरपदं वा मद्दीजीवा ।

कुज्पानपनविधिः पंचमः ।

## 6. अग्रानयनविधिः

परमापक्रमजीवाघ्ना रविभुजजीवा लम्बगुणभक्ता ।
अग्रा क्रान्तिज्या वा [त्रिज्याघ्ना] लम्बजीवाहृत् ॥ १ ॥

अक्षश्रवणाभ्यस्ता क्रान्तिज्याऽर्को[१२]द्धृताऽथवाऽग्रज्या ।
तद्धृतिहृताऽपमज्या समनरभक्ताऽथवाऽग्रज्या ॥ २ ॥

स्वधृतिघ्नापमजीवा स्वेष्टनरेणोद्धृताऽथवाऽग्रज्या ।
कुज्याक्रान्तिज्याकृतिसमाससूलमथवाऽग्राज्या ॥ ३ ॥

कुज्या त्रिज्यागुणिता पलजीवाभाजिताऽथवाऽग्रज्या ।
विषुवत्कर्णाभ्यस्ता कुज्या वाऽक्षद्युतिहृताऽग्रा ॥ ४ ॥

तद्धृतिकुज्याघातान्मूलं पूर्वापरे कुजे वाऽग्रा ।
स्वधृतिघ्ना वा कुज्या नृतलविभक्ताऽथवाऽग्रज्या ॥ ५ ॥

---

Text of Ms. A :

[1] परमापक्रमजीवाघ्ना रविबुधजीवा लंवगुणभक्ता ।
अग्राक्रांतिज्पा वा [unindicated gap]लंवजीवाहृत् ।

[2] अक्षश्रवणाम्पस्ता क्रांतिज्पार्कोद्धृताथवाग्रज्प्प
तद्वृत्तिहृतापमज्पा समनरभक्ताथवाग्रज्पा

[3] स्वधृतिघ्नापलजीवा स्वेष्टनरेणोद्धृताथवाग्रज्पा ।
कुज्पाक्रांतिज्पाकृतिसमासमूलमथवाग्राज्पा

[4] कुज्पा त्रिज्पागुणिता पलजोवाभा । जेत्ताथवाग्रज्पा
विषुवत्कर्णाम्पस्ता कुज्पा वाक्षधुतिहृताग्रा ।

[5] तद्धृतिकुज्पाघातान्मूलं पूर्वापरे कुजे वाग्रां
स्ववृत्तिघावा कुज्पा नृतलविभक्ताथवाग्रज्पा

Ms. B : 5 a तद्वृति°

समनाऽक्षज्यागुणितो लम्बज्याभाजितोऽथवाऽग्रज्या ।
विषुवच्छायागुणितः समना वाऽर्को[१२]द्धृतोऽग्रज्या ॥ ६ ॥

कुज्यागुणितस्समना क्रान्तिज्याभाजितोऽथवाऽग्रज्या ।
समना नृतलाभ्यस्तः शङ्कुविभक्तोऽथवाऽग्रज्या ॥ ७ ॥

तद्धृतिरक्षज्याघ्ना व्यासार्धविभाजिताऽथवाऽग्रज्या ।
अथवाऽक्षच्छायाघ्ना तद्धृतिरक्षश्रुतिहृताऽग्रा ॥ ८ ॥

तद्धृतिरथ नृतलघ्ना स्वधृतिविभक्ताऽथवाऽग्रा स्यात् ।
तद्धृतिशङ्क्वोर्घातोऽक्षज्याघ्नः स्वधृतिलम्बगुणवधहृत् ॥ ९ ॥

घातः कुज्यागुणितः क्रान्तिज्यास्वधृतिघातहृद्वाऽग्रा ।
वाऽक्षाभाघ्नो घातः सूर्य[१२]घ्नस्वधृतिभक्तोऽग्रा ॥ १० ॥

[कुज्याशङ्क्वोर्घातस्त्रिज्याघ्नो लम्बनृतलवधहृद्वाऽग्रा ।
पलश्रुतिगुणितो घातो नृतलार्क[१२]गुणहृतोऽथवाऽग्रा ॥ १०* ॥]

---

Text of Ms. A :

[6] समनाक्षज्यागुणितो लंवज्याभाजितोथवाग्रज्या
विषुवश्छायागुणितस्समना वार्कोद्धृतोग्रज्या

[7] कुज्यागुणितस्समना क्रांतिज्याभाजितोथववाग्रज्या
समना नृतलाम्यस्तः शंकुविभक्तौथवाग्रज्या ।

[8] तद्वृतिरक्षज्याघ्रा व्यासार्यविभाजिताथवाग्रज्या
अथवाक्षश्छायांघ्रा तद्वृतिरक्षश्रुतिहृताग्रा

[9] त्तद्वृतिरथ नृतलघ्ना स्वधृतिविभक्ताथवाग्रा स्या
कुज्याशंक्वोर्घातोक्षज्याघ्नस्खधृत्तिलंवगुणवधहृत्

[10] घातः कुज्यागुणितः क्रांतिज्यास्वधृत्तिघातहृद्वाग्रा ।
वाक्षाभाघ्नो घातस्सूर्यघ्नः स्वधृतिभक्ताग्रा ।

Ms. B : 9 d °स्स्वधृत्ति°

स्वधृतिहृतो वा घातो नानृतलाभ्यासभाजितो वाऽग्रा ।
द्युज्याचर[गु]ण[घा]तोऽक्षज्याभक्तोऽथवाऽग्रज्या ॥ ११ ॥

तद्धृतिसमनरकृत्योर्विशेषमूलं कुजे वाऽग्रा ।
भुजशङ्कुतलवियुतियुतिः समानभिन्नाशयोर्वाऽग्रा ॥ १२ ॥

त्रिज्याऽक्षाभागुणिता सममण्डलकर्णभाजिता वाऽग्रा ।
नृतलं समशङ्कोर्यद् रवावुदक्स्थे भवेत्साऽग्रा ॥ १३ ॥

त्रिज्याभावृत्ताग्राघाते भाकर्ण[भा]जिते वाऽग्रा ।
भावृत्ताग्रादृग्ज्यावधे प्रभाभाजिते वाऽग्रा ॥ १४ ॥

अग्रानयनविधिः षष्ठः ।

---

Text of Ms. A :

[11] स्वधृतिहृतो वा घातोंत्पावृतलाभ्यासभाजितो वाग्रा ।
द्युज्पाचरणतः अक्षज्पाभक्ताथवाग्रज्पा ।

[12] तद्धृत्तिसमनरकृत्पोर्विशेषमूलं कुजे वाग्रा ।
भुजगुणशंकुतलवियुतिघुतिस्सचमात्पानयोर्वाग्रा ।

[13] त्रिज्पाक्षाभागुणिता समनंरडलकर्णभाजिताग्रा ।
नृतलं समशंकोद्रवानुदक्स्छे भवेत्साग्रा

[14] त्रिज्पाभावृत्ताग्रघातै भाकर्णजिते वाग्रा ॥
भावृत्ताग्रादृग्ज्पावधे प्रभाभाजिते वाग्रा ।

अग्रानयनविधिः पष्टः ।

## 7. स्वचरार्धज्याप्राणसाधनविधिः

[चरार्धज्यासाधनम्]

कुज्या त्रिज्यागुणिता द्युज्याभक्ता चरार्धजीवा स्यात् ।
अन्त्याहता कुजीवा धृतिभक्ता वा चरार्धज्या ॥ १ ॥

अन्त्योन्नतज्ययोर्वा विशेषशेषं चरार्धजीवा स्यात् ।
यन्त्रगृहीतद्युदलतिथिघटीविवरनाडिकाज्या वा ॥ २ ॥

पलजीवागुणिताऽग्रा द्युज्याभक्ताऽथवा चरार्धज्या ।
क्रान्तित्रिभगुणघातोऽक्षाभाघ्नोऽर्का[१२]हतद्युजीवाहृत् ॥ ३ ॥

[अन्त्याक्रान्त्योर्घातोऽग्राघ्नो धृतिसमनृहृच्चरार्धज्या ।]
वाऽक्षज्याघ्नो घातो लम्बज्याधृतिवधोद्धृतो वा स्यात् ॥ ४ ॥

[अन्त्याग्राघातः पलगुणगुणितस्त्रिगुणधृतिवधहृतो वा ।]
कुज्याघ्नो वा घातोऽग्राधृतिघातोद्धृतो वा स्यात् ॥ ५ ॥

---

Text of Ms. A :

[1] कुज्या त्रिज्यागुणिता घुज्याभक्त्रा चरार्धजीवा स्यात्
अंत्याहता कुजीवा धृतिमक्ता वा चरधिज्या ।

[2] अंग्प्रोन्नतज्पयोर्वा विशेषशेषं चरार्धजांवा वा ।
यंत्रपृहीतद्युदलतिथिघटीविवरनाडिकाज्पा वा

[3] पलजीवागुणिताग्रा घुज्पाभक्ताथवा चरार्धज्पा ।
क्रांतित्रिभगुणघातोक्षाभाघ्नोकहितघुजीवाहृत् ।

[4] वाक्षज्पाघ्नो घातो लवज्पाधृतिवधोद्वृतो वा स्पात्।

[5] कुज्पाघ्नो वा घातोग्राधृतिघातोद्धता वा स्पात् ।

Ms. B : 3 b द्युज्पा° 3 d °र्काहृत°

वाऽग्राघाताभ्यासस्तद्धृतिधृतिघातहृच्चरार्धज्या ।। ६ ।।

[वाऽग्रात्रिभगुणघातोऽक्षज्याघ्नो द्युज्यात्रिगुणवधहृच्च । ]
वाऽग्राभ्यस्तो घातो द्युज्यातद्धृतिवधेन हृतः ।। ७ ।।

घातो वा नतलघ्नो द्युज्या[स्व]धृतिघातहृच्चरार्धज्या ।
क्रान्त्यक्षज्याक्षश्रुतिघातो द्युज्यार्क[१२]वधहृद्वा ।। ८ ।।

त्रिज्यासमनरघातो [ऽक्षज्यावर्गेण संगुणितः ।
लम्बत्रिभगुणवधघ्न]द्युज्याभक्तः फलं चर्धराज्या ।। ९ ।।

साध्यं यद्वत् कुज्या समनुस्तद्वच्च षोडशधा ।
अथवैवं षोडशधाऽन्त्यासमनरघाततो धृतिविभक्तात् ।। १० ।।

क्रान्तिपलत्रिगुणवधो [लम्बकद्युज्याघातहृद्वा] ।। ११ ।।

क्रान्त्यक्षज्यासमधृतिघातो द्युज्यासमनृवधहृत्तत् ।
स्वधृतिकुजीवाक्षज्याघातो द्युज्यानृतलवधहृत्[1] ।। १२ ।।

---

Text of Ms. A :

[6] वाग्राघाताभ्यासस्तद्वृत्तिवृतिघात्तहृच्चराधृंज्पा ।।

[7] वाग्राभ्पस्तो घातो घुज्पातद्वृतिवधेरहृतः ।

[8] घातो वा वृतलघो घुज्पाधृतिवातहृच्चरधिज्पा
क्रांत्पक्षंज्पाक्षश्रुतिघातो घुज्पोर्कवधहृद्वा ।

[9] त्रिज्पासमनरघातो[unindicated gap]घुज्पाभक्तः कलं चरार्धज्पा

[10] साध्पं यद्वत्कुज्पा समनुस्तद्वच्च शोधोडशधा ।
अथवैवं षोडशधांत्पागमनरघातत्तो धृतिविभक्तात्

[11] क्रांतिफलत्रिगुणवधाप्तं वा

[12] क्रांत्पक्षज्पासमधृतिघातो द्युज्पासमवृवधहृदत् ।
चरार्धज्पास्वधृतिक्रान्पक्षज्पाघातो द्युज्पानृतलवधहत्

Ms. B : 12 b °समनृवध° 12 d वधहृत् ।

---

1. The reading स्वधृतिक्रान्त्यक्षज्याघातो द्युज्यानृवधहृद्वा is also possible.

समनरपलगुणकृतिहृतिरवलम्बद्युगुणघातभक्ता वा ।
तद्धृतिपलगुणघातोऽक्षाभाघ्नोऽक्षश्रुतिद्युगुणवधहृत् ॥ १३ ॥
कुज्याघ्नो वा घातोऽग्राद्युगुणवधोद्धृतश्चरार्धज्या ।
नृतलहृतो वा घातः स्वधृतिद्युज्यावधविभक्तः ॥ १४ ॥

समनरपलगुणघातोऽक्षज्याकुज्याक्षभानृतलगुणितः ।
द्युगुणगुणो लम्बापमगुणरवि[१२]नृभिराप्तयो वा स्युः ॥ १५ ॥

पलगुणकृतितद्धृतिघातस्त्रिज्याद्युगुणघातभक्तो वा ।
तद्धृत्यन्त्याश्रगुणकृति[हृतिस्त्रिज्याकृति]धृतिवधाप्ता वा ॥ १६ ॥

त्रिज्यातद्धृतिघातोऽक्षाभाकुज्यानृतलकृतिहृतो वा ।
द्युज्याघ्नाक्षश्रवणाग्रास्वधृति[कृति]विभक्तो वा ॥ १७ ॥

वान्त्याकुज्यानृवधात्पलभाक्षाग्रभूगुणगुणैर्गुणितात् ।
[द्वादशलम्बज्यासमशङ्कुक्रान्तिगुणहरैर्हृते ॥ १८ ॥

---

Text of Ms. A :

[13] उद्वृतिपलगुणाकृतिहृतिरवलंबद्युगणघातभक्ता वा
उद्धृत्तिपलगुणाघातोक्षाभाघ्नोक्षश्रुतिद्युगुणवधहृत् ।

[14] कुज्याघ्नो वा घातोग्राद्युगणवधोद्धृतश्चरार्धज्या
नृतलहृतो वा घानस्स्वधृतिघुज्यावधविभक्त

[15] स्समनरपलगुणघातोक्षज्याकुजाक्षभानृतलगुणितः
द्युगणगुणो लंवापमगुणरविनृमिराप्तयो वा स्युः ।

[16] पलगुणकृतितद्वृत्तिघातस्त्रिज्याद्युगणघातभक्तो वा
उद्वृत्यांत्याक्षगुणकृतिधृतिवधाप्तोर्ध्वा

[17] त्रिज्या । उत्कृतिघातोक्षाभाकुज्यानृत्तलकृतिहृतो वा
घुज्याघ्नैरक्षश्रवणाग्रास्ववृत्तिविभक्तः

[18] वांत्याकुज्यानृवधात्पलभाक्षाग्रगुणभुग्जुणैर्गुणिता

Ms. B : 14 b °वधोद्वृत° 14 c वा घातस्स्व°

अग्रा ]धृतिहृतिगुणितैस्त्रिज्याकुज्यानृघात[ गुणगुणितात् ] ।
हारैस्तैर्भक्तेऽग्राद्युज्यागुणितैश्चरार्धज्याः ॥ १९ ॥

समनृ[ नृ ]तलपलगुणहृतिरिष्टनरद्युगुणघातभक्ता वा ।
त्रिज्या[ ग्रा ]नृतलवधाद् द्युज्याधृतिघातलब्धं वा ॥ २० ॥

अन्त्याग्रानृतलवधो धृतिवर्गहृतोऽथवा चरार्धज्या ।
नृतलापमत्रिगुणहृतिरिष्टनृदिनगुणवधाप्तं वा ॥ २१ ॥

नृतलान्त्यापमगुणहृतिरिष्टनृधृतिघातहृच्चरार्धज्या ।
धृतिकुगुणपलगुणवधान्नृतलद्युज्यावधाप्तं वा ॥ २२ ॥

क्रान्तिपलगुणधृतिवधाद्द्युज्यानरघातहृच्चरार्धज्या ।
त्रिगुणधृतिवधो द्युज्याहृत्प्रोन्नतगुणान्तरं वा स्यात् ॥ २३ ॥

---

Text of Ms. A :

[19] धृतिकृतिगुणैर्हृतात्त्रिज्याकुज्यानृघाततोहारैः
उक्ते ते वावाप्तुं द्युज्यागुणितैश्चार्धज्याः

[20] समनृतलपलगुणहृतिनिष्टनरघुगणघातभक्ता वा
त्रिज्यानृतलवधाद् द्युज्याधृतिघातलब्दं वा ।

[21] अंत्याग्रानृतलवधोद्धृतिवर्गहृतोथवा चरार्धज्या ।
नृतलापमत्रिगुणहृतिविष्टनृदिनगुणवधाप्तं धा

[22] नृतलांत्यापमगुणहृतिरिष्टनृधृतिघातहृच्चरार्धज्या ।
घ्र्पतेकुगुणपलगुणवधान्नृतलघुज्यावधाप्तं वा ।

[23] क्रांतिपलगुणाधृतिवधाद्द्युज्यानरघातहृच्चरार्धज्य
षिगुणधृतिवधो युज्याहृतत्प्रोन्नतगुणांतरं वा स्यात् ।

Ms. B :　20 d °लब्दं वा

[द्युनिशादले]

**तद्घनुश्चरप्राणास्तैः खखवेदेषवो [५४००] युतविहीनाः ।**
**सौम्ये विहीनयुक्ता याम्ये द्युनिशादले भवतः ॥ २४ ॥**

[चरार्धास्वानयने सामान्यनिर्देशः]

**प्रत्येकं मौर्व्या वाऽर्धाश्चरासवः प्रोक्तवत्साध्याः ।**
**भेषु रवेर्दोर्ज्यातः साध्या वा चरदलप्राणाः ॥ २५ ॥**

[अजगोमिथुनाद्यानां चरार्धासवः]

**अजगोजितुमाद्यानां चरासवो वोक्तवत्साध्याः ।**
**तेषु राशिकलाचापेन प्राग्वच्चरखण्डकप्राणाः ॥ २६ ॥**

**वेन्द्रागा [७१४] कृतगोऽर्काः [१२९४] खगुणेषुभुवो [१५३०]ऽक्षभाहृता भक्ताः ।**
**सूर्यै [१२]राप्तधनूंषि प्रोक्तवच्चरखण्डकप्राणाः ॥ २७ ॥**

---

Text of Ms. A :

[24] तद्धनुचरप्राणास्तैः खखापदेथुवा युतविहीनाः
सौम्प विहीतयुक्तां घाम्पघुनिश्रादले भवतः

[25] प्रत्पेकं मौर्व्या वाधाश्चरासवः प्रोक्तवत्साध्पाः ।
तेषु रवेर्दोत्पावित्साध्पा वा चरदलप्राणाः

[26] अजगोजित्मनुद्यानां चरासवो वोक्तवद्राव
स्तेषु राशिकलाचापेन प्राग्वच्चरखंडकप्राणाः

[27] वेंद्रागाः कृतगोर्काः खगुणेषुभुवोक्षभाहृत्ता उक्ताः
सूर्येराप्तधनूंषि प्रोक्तभचरखंडकप्राणाः

Ms. B : 24 c सौम्यविहीन° 26 a अजगोजित्तम° 27 b क्षमाहृत्ता उक्ताः

[उपसंहारः]

**दिक्पलभाजीवानां दिङ्मात्रं साधनानि कथितानि ।**
**निखलानि न शक्यन्ते पर्जन्यस्येव जलधाराः ।। २८ ।।**

**स्वचरार्धज्याप्राणसाधनविधिस्सप्तमः ।**

---

Text of Ms. A :

[28] दिक्पालभाजीवानां दिमात्रं साधनानि कथितानि
निखिलानि न शक्यंते पर्जन्पस्पेव जलधाराः ।

**स्वचरार्धज्पाप्राणसाधनविधिस्सप्तमः ।**

# 8. लग्नादिविधिः

[ राशीनां लङ्कोदयासुसाधनम् ]

अजवृषमिथुनान्तज्या मिथुनान्तद्युज्यया हता भक्ताः ।
स्वद्युज्ययाऽऽप्त[ ध ]नुरन्तराणि लङ्कोदयप्राणाः ॥ १ ॥

त्रिगृहद्युज्योना वाऽजादिद्युज्याः स्वजीवयाऽभ्यस्ताः ।
स्वद्युज्यया विभक्ताः फलोनजीवाः स्वचापानाम् ॥ २ ॥

स्वपरमापक्रमोत्क्रमगुणविवरस्वचापगुणसंहतिभ्यो वा ।
ज्याखण्डस्वद्युज्यावधाप्तिर्हीना स्वद्युज्याप्ता ॥ ३ ॥

क्रान्तिज्याऽ[ जा ]दिज्याकृतिविवरपदैर्हता त्रिभज्याऽऽप्ता ।
स्वद्युज्ययाऽऽप्तधनुषोर्विवराण्यथवा निरक्षराश्युदयाः ॥ ४ ॥

---

Text of Ms. A :

[1] अजवृषमिथुनातज्पा मिथुनातद्युज्पया हृता भक्ताः
सघुत्पयाप्तनुरंतराणि लंकोदयप्राणाः ।

[2] त्रिगृहाघुज्पोना वाजाघुज्पास्खजीवयाभ्पस्ताः
स्वघुज्पणविभक्ताः फलोनजीवोत्पचापानां ।

[3] खपरापमोत्क्रमगुणविवरस्वगुणचापसंहृतिभ्पो वा
ज्पाखंडखद्युज्पावधाप्तहीनखलिप्तानां

[4] क्रांतिज्पादिज्पाकृतिविवरपदैर्हृता त्रिभज्पाप्ता
खद्युज्पयाप्तधनुषोविवराण्यथवा निरक्षनाश्पुदया

Ms. B : 3 c °स्वद्युज्या° 3 d °स्वलिप्तानां 4 c स्वद्युज्पया°

त्रिज्या[बा]हुज्यान्तरयुतिघातेभ्यो द्युज्याप्तरहितेभ्यः ।
[त्रिज्याद्विगतहतेभ्यो द्युज्याभक्ताप्तलब्धानाम् ।।]
मूलेभ्यो धनुषां वा विवराणि निरक्षराश्युदयाः ।। ५ ।।

मेषादिक्रान्तिज्याज्यायोगहतात्तदन्तरान्मूलम् ।
त्रिज्यागुणं द्युजीवावाप्तचापान्तराण्यथवा ।। ६ ।।

वाऽजादिक्रान्तिज्याज्यायोगहतात्तदन्तरान्निघ्नात् ।
त्रिज्याकृत्या द्युज्याकृत्याप्तपदधनुरन्तराण्यथवा ।। ७ ।।

[राशीनां स्वदेशोदयासुसाधनम्]

ते चाङ्काङ्गाङ्गभुवो[१६६९]ऽङ्गगोऽगशशिनः[१७९६] शराग्निगोचन्द्राः[१९३५] ।
व्यस्तास्तथा चरदलोनयुता निजधाम्नि षट्सु चोत्क्रमतः ।। ८ ।।

[राशीनामस्तमयकाल-याम्योत्तरसङ्क्रमकालसाधनम्]

निजसप्तमोदयासुभिरस्तं राशिः समेति नियमेन ।
लङ्कोदयासुभिः स्वैर्याम्योत्तरवृत्तमायाति ।। ९ ।।

---

Text of Ms. A :

[5] त्रिज्याहुज्यांतरपदघातेभ्यो द्युज्ययाप्तसहितेभ्यो
मूलेभ्यो धनुर्षावा विवराणि निरक्षराश्युदयाः

[6] मेषादिक्रांतिज्यागुणज्यायोगहतातुदतरान्मूल
त्रिज्यागुणं द्युजीवाप्राप्तेचापान्तराण्यथवा ।

[7] वाजादिक्रांतिज्याज्यायोगहतात्तदंतरान्निघ्ना
त्रिज्याकृत्या द्युज्याकृत्याप्तपदधनुरंत्तराण्यथवा ।

[8] त्ते चांकांगांगभुवोंगगोगशशिनः शराग्निगोवंद्राः
व्यस्तास्तथा चरदलोनयुतानिजधास्ति षट्गष्वोत्क्रमतः

[9] निजसप्तमोदयासुभिरस्त्वं राशिस्समेति नियमेन
लंकोदयासुभिस्वैर्याम्योत्तरवृत्तमायात्ति

Ms. B : 5 c धनुर्षावा 7 d °रंन्तरा° 8 b शराग्निगोचंद्राः 8 d °धाम्नि

[लग्नसाधने सामान्यनिर्देशः]

द्युगताद्दिवा विलग्नं निशि षड्भयुतं च रात्रिदिनशेषात् ।

[लग्नसाधनविधिः]

वा सौक्ष्म्यात् तात्कालिकरविभवनागतकलागुणितः ॥ १० ॥

स्वोदयकालो भक्तो राशिकलाभिः फलासवोऽसुभ्यः ।

प्रोह्येष्टेभ्यो भोग्यं क्षिपेद्रवौ तदनु यावन्तः ॥ ११ ॥

शुद्धयन्त्युदया राशीन् क्षिपेद्रवौ तावतोऽवशेषं च ।

खगुणघ्नमशुद्धोदयहृद्भागादौ क्षिपेद्विलग्नं प्राक् ॥ १२ ॥

राश्युदयैरेवं तात्कालिकमर्कं प्रसाधयेत्तस्मात् ।

इष्टद्युगताच्छेत्रमनुपाततः प्राग्विलग्नं वा ॥ १३ ॥

इनशङ्कोस्त्रिज्याघ्नात् मध्यलग्नशङ्कुसम्भक्तात् ।

फलचापयुतं सूर्यं प्राग्लग्नं वा भवत्येवम् ॥ १४ ॥

---

Text of Ms. A :

[10] द्युगताद्दिवा विलग्नं निशि षड्भयुतं च रात्रिदिनशेषा
द्वं सौम्पात्तात्कालिकरविभवनागतकलाकुणितः

[11] स्वोदपकालो भक्तो राशिकलाः फलासवोसुभ्पः
प्राग्ज्पेष्टेम्पो भोग्पं क्षिपेद्रवौ तदनु यावंतः

[12] शुद्धचत्पुदयाः रारराशीन्क्षिपेद्रवौ तावतोवशेषं च ।
खगुणघ्नमशुद्धोदयहृद्भागादौ विलग्नं प्राक्

[13] राश्पुदपैरपातात्कालागमर्कं प्रसाधयेत्तस्मात्
इष्टास्छद्युताछेत्रमनुपाततः प्रग्विलग्नं वा

[14] इनशंकोस्त्रिज्पाघ्नान्मध्पन्पालंवघातसंभक्तात्
फलचापघुतं सूर्यं प्राग्र्ग्रं च भवत्पेवं ।

Ms. B : 12 a शुद्धचन्त्पुदयाः 13 c °द्युतात्क्षेत्र° 14 b °मध्यछन्यालंव°

उत्क्रमतो मेषादीन् क्रमेण जूकादिकान् प्रकल्प्य ततः ।
रात्रिद्युव्यत्ययतः षड्भयुतं प्राग्विलग्नं वा ॥ १५ ॥

[लग्नात् कालसाधनम्]

लग्नार्कयोर्गतैष्या अंशा निजभोदयाहता भक्ताः ।
खगुणैस्तदंतरुदयात् मिश्राल्लग्नासवो ह्यसकृत् ॥ १६ ॥

कालात्मकाद्विलग्नाद् विशोध्य कालात्मकं सहस्रांशुम् ।
शेषो विलग्नकालो गत्यविशेषाद् भवत्यथवा ॥ १७ ॥

[अस्तविलग्नम्]

षड्भयुगुदयविलग्नं ह्य[स्तविलग्नं निगद्यते सद्भिः] ॥ १८ ॥

[लग्नसूर्यौ यदा एकराशौ तदा लग्नसाधनम्]

भोग्यात्कालादूनः कालः खगुणाहतो निजोदयहृत् ।
भा[गा]दिफलं सूर्ये संयोज्यं प्राग्विलग्नं स्यात् ॥ १९ ॥

---

Text of Ms. A :

[15] उत्क्रमतो मेषादीन्क्रमेण जूकादिकान्प्रकल्प्प ततः
रात्रिद्युव्पत्पयतः षृड्भयुतं प्राम्विलग्नो वा ।

[16] लग्नार्कयोर्गतैष्पा वंशा निजनोदयाहता भत्काः
खगुणैस्तंदतरुपाद मिश्रालग्नासवो ह्यसकृत्

[17] कालात्मकाद्विलग्नाद्विशोध्प कालात्मकां त्सहस्रांशुं ।
शेषा विलग्नकालो गत्पविशेषाद्भवत्पथवा ।

[18] षड्भघुगदयविलग्नं ह्य

[19] गात्कालादूनः कालः खगुणाहतो निजोदयहृत्
भादिफलं सूर्षे संयोज्पं प्राग्विलग्नं स्पात्

[लग्नात् कालसाधनम्]

**एकस्मिन् यदि भवने विलग्नसूर्यौ तदा तयोर्विवरे ।**
**भागाः स्वोदयगुणिता वियदग्नि[३०]विभाजिताः कालः ॥ २० ॥**

[मध्यलग्नं कालश्च]

**मध्यविलग्नं रविगतगतोदयफलोनितो रविर्द्युदलात् ।**
**पूर्वनतासुभिरुपरि च प्रोक्तवल्लग्नसमरवौ कालः ॥ २१ ॥**

[रात्रौ लग्न-लग्नकालसाधनम्]

**रजनीशेषाल्लग्नं प्राग्वत् विशोधयेद्द्युपाच्च ।**
**भोदययुक्तात् सूर्ये लग्नसमे शेषकालः स्यात् ॥ २२ ॥**

[स्वदेशोदयं विना लग्नकालानयनम्]

**भानोः लङ्कोदयवत्प्राणास्साध्याश्चरासवश्चापि ।**
**तद्वियुतिर्मकरादौ कर्कटकादौ युतिः प्राणाः ॥ २३ ॥**[1]

---

Text of Ms. A :

[20] पृकस्मिन्पदि भवने विलग्नसूर्यौ तदा तयोर्विवरे
भागास्खोदयगुणिता वियदग्निविभाजिताः कालः

[21] मध्यविलग्नं रविगतगतोदयफलोनितो रविद्युदालात्
पूर्वनतासुभिरुपरि च घोक्तवल्लग्नसमरवौ कालः

[22] रजनीशेषाल्लग्न प्रांक्त विशोधयेद्युषाच्च ।
षड्भधुतं तत्सूर्ये लग्नसेमे शेषकालस्पात्

[23] मानं लंकोदयात्प्राणास्साध्पाश्चरासवश्चापि
तद्वियुतिर्मजरादौ कर्कटादौ पुतिः प्राणाः

---

1. The reading भानां लङ्कोदयात् is possible but it is not intended here. See *BrSpSi*, xv. 29 and *SiŚe*, iv. 30.

**स्पष्टाः स्युर्मेषादौ कर्कटकादौ तु भार्धतः शुद्धाः ।**
**जूकादौ भार्धयुताः मकरादौ शोधिताश्चक्रात् ॥ २४ ॥**
**लग्नाच्चैवं प्राणाः सूर्यकलाभिरूनितास्तथाऽल्पाश्चेत् ।**
**खखषड्घनेन[ २१६०० ] युक्ता विशोधयेल्लग्नकालः स्यात् ॥ २५ ॥**

[ कालांशज्ञानम् ]

**उदयाः षष्टिविभक्ताः कालांशा नाडिकाः षडभ्यस्ताः ।**
**दशभिर्वा विघटीभिः कालांशो वाऽसुभिः षष्टया ॥ २६ ॥**

**लग्नादिविधिरष्टमः ।**

---

Text of Ms. A :

[24] स्पष्टाः स्युर्मेषादौ कर्कयदौ तु मूर्धतः शुद्धाः
जूकादौ भावयुताः मकरादौ शोधिताश्चक्राल्
[25] लग्नाश्चैवं प्राणास्सूर्यभागे ऊनितास्त्वथाल्पाश्चेत्
खखषड्वनेन युक्ता विनोदयेल्लग्नकालस्स्पात्
[26] उदयाष्पष्टिविभल्का: कलपंशनाडिकाष्पडभ्पस्ताः
दशभिर्वा विघटीभिः कालांशो वासुभिष्पष्टया ॥

**लग्नादिविधिरष्टमः ।**

## 9. द्युदलभादिविधिः

[दिनार्धकाले दृग्ज्या–शङ्कु-त्रिज्या-क्षेत्रम्]

क्रान्त्यक्षान्तरयोगस्समान्यककुभोर्नतांशकाः खाक्षः ।
तज्ज्या दृग्ज्या दोर्ज्या नतांशकोनास्त्रिगृहभागाः ॥ १ ॥
उन्नतभागाः कोटिस्तज्ज्या उज्ज्या नरस्तथा शङ्कुः ।
उन्नतजीवा, त्रिज्या कर्णो यष्टिस्तथा नलकः ॥ २ ॥

[दिनार्धच्छायादिग्ज्ञानम्]

सौम्यक्रान्तेः स्वपलेऽल्पे याम्या द्युदलभाऽन्यथा सौम्या ।
द्युज्यातो लम्बज्या यदि महती स्यात्तदाऽप्येवम् ॥ ३ ॥

[दिनार्धनतांशज्ञानम्]

द्युज्याधनुः समेतं पलेन स्वकेन यदा त्रिभादूनम् ।
याम्याऽन्यथेतरा भा तत्त्रिभविवरं नतांशाः स्युः ॥ ४ ॥

---

Text of Ms. A ;

[1] क्रांत्पक्षांतरयोगस्समान्पककुभोन्नतांशकाः खाक्षाः
तज्ज्पा दृग्ज्पा दोर्ज्पा नतांशकोनास्त्रिगृहभागाः

[2] उग्नतभागः कोटिस्तज्ज्पा वज्पां नरस्तथा शंकुः
उन्नतजीवा त्रिज्पा कर्णो याष्टिस्तथा नलकः ।

[3] सौम्पक्रांतेस्खलेपे । याम्पा द्युदलभान्पथा सौन्पा
द्युज्पातो लंवज्पा यदि महती स्पात्तदाप्पेवं

[4] द्युज्पाधनुस्समेतं पलेन समेत यदा त्रिमादूनं
याम्पेन्पथेतरा भा तत्त्रिभविवरं नतांशाः स्पुः

Ms. B : 4 c मा in place of भा

**लम्बक्रान्त्योर्योगस्त्रिभाधिकश्चेद् द्युखण्डभा याम्या ।**
**सौम्याऽन्यथा त्रिभोनं तन्नतभागास्स्युरथवैवम् ।। ५ ।।**

[दिनार्धच्छायाछायाकर्णौ]

**दृग्ज्या द्वादशगुणिता शङ्कुविभक्ता प्रभा द्यु[द]लगेऽर्के ।**
**त्रिगृहज्या सूर्य[१२]गुणा शङ्कुविभक्ता द्युदलकर्णः ।। ६ ।।**

[दिनार्धकालिके धृत्यन्त्ये]

**द्युज्या कुज्योनयुता याम्योत्तरगोलयोर्दिना[र्ध]धृतिः ।**
**त्रिज्या चरज्ययैवं वियुतयुता स्याद्दिनार्धान्त्या ।। ७ ।।**

[दिनार्धशङ्कुः]

**लम्बज्यापमजीवासमनरसूर्यै[१२]र्धृतिः पृथ[ग्गु]णिता ।**
**त्रिज्याप्ताद्धृतिपलकर्णैर्भक्ता नराः क्रमशः ।। ८ ।।**

**द्युज्यान्त्ययोश्च घातो गदितैर्गुणकारकैः पृथग्गुणितः ।**
**त्रिज्यागुणितैर्हारैर्विभाजयेच्छङ्कवो वा स्युः ।। ९ ।।**

---

Text of Ms. A :

[5] लग्नं क्रांत्पोर्योगस्त्रिभाधिकश्चेद् द्युखंडभा याम्पा
सौम्पान्पथा त्रिमोनं तन्नतभागास्पुरथवैषां ।।

[6] दृग्ज्पा द्वादशगुणिता शंकुविभक्ता प्रभा घुलगेर्के
त्रिगृहज्पा सूर्यगुणा शंकुविभक्ता घुदलकर्णः

[7] द्युज्पा कुज्पेनयुता याम्पोत्तरगोजयोर्दिनाधृतिः
त्रिज्पा चरज्पयैवं वियुतयुता स्पाद्दिनार्धात्पा

[8] लंवज्पापमजीवासमनरसूर्यैः धृतिः पृथ ‾ णिता
त्रिज्पणात्तद्वृतिपलकर्णर्भत्का मराः क्रमशः ।

[9] द्युज्पांतयोश्च घातो गटितैर्गुणकारको पृथगुणित
त्रिज्पागुणितैर्हतः विभाजयेश्छकवो वा स्पुः

Ms. B : 5 a °त्रिमा° 5 d °भागास्युरथवैषम् ।

गुणहारान्तरगुणितौ धृतिघातौ केवलैस्त्रिभज्याघ्नैः ।
हारैः हृतौ फलोना धृतिरथवा शङ्कवः क्रमशः ।। १० ।।

घातस्त्रिज्याहृतहरगुणकान्तरसङ्गुणस्त्रिगुणनिघ्नैः ।
छेदैर्भक्ते फलवियुते घाते शङ्कवो वा स्युः ।। ११ ।।

द्युज्याघ्नगुणकनिहतान्त्यानन्तरहारहृन्नरा वा स्युः ।

वैतद्गुणहारान्तरनिहताऽन्त्या तैर्हृता हारैः ।। १२ ।।
फलरहिताऽन्त्या [द्युज्यागुणिता त्रिज्याहृता] नरा [वा स्युः] ।

वाऽन्त्यागुणितैर्गुणकैर्हृता द्युजीवा पृथक् क्रमशः ।। १३ ।।
भक्तानन्तरहारैर्नरा द्युजीवाः पृथग्गुणिताः ।
वोक्तगुणहारविवरैर्गुणिताश्छेदैर्हृताः फलसमेताः ।। १४ ।।
द्युज्या गुणके हारान्महति विहीनाऽल्पके तु[ततः ।
अन्त्यागुणिता भक्ता त्रिभजीवया] नराः [क्रमशः] ।। १५ ।।

---

Text of Ms. A :

[10] गुणहारांतरगुणितौ घृतिघातौ केवलंस्त्रिभज्याप्तैः
हारैः हृतौ फलोनघृतिरथवा शंकवः क्रमशः

[11] घातस्त्रिज्याहतहरगुणकांतरसंगुणास्त्रिगुणनिघ्नैः
छेदैर्दर्भक्तैः फलवियुते घाते शंकवो वा स्पुः

[12] घुज्याघ्नगुणकनिहतांत्पानंतरहारहृन्नरा वा स्पुः
वैतद्गुणहारांतरनिहतांत्पैतैर्हृता हारैः

[13] फलरहितांत्पेव [unindicated gap] नरा
वांत्पागुणितैर्गुणैर्हृता घुज्पा[unindicated gap]

[14] भत्कानंतरहारैर्नरा धुजीवा पृथग्गुणिता
वोक्तगुणहारविवरैर्भक्ताश्छेदैर्हृता फलसमेत्ता

[15] द्युज्पा गुणके हारान्महति विहीनाल्पके तु
[unindicated gap] नराः

अपमोत्क्रमगुणनिहताः पूर्वगुणाश्छेदगुणकविवरेण ।
त्रिगुणाहतेन युक्ता विवराण्येतैर्हृता वाऽन्त्या ॥ १६ ॥
भक्ताऽनन्तरहारैः फलरहितान्त्यैव शङ्कवः क्रमशः ।

वाऽनन्तरहारहृता तदन्तरविवरहता[1] वाऽन्त्या ॥ १७ ॥

चरदलगुणगुणकहतेर्गुणहारान्तरहतत्रिभगुणेन ।
सह विवरं भेदाः स्युस्तदनन्तरहारविवरैक्यम् ॥ १८ ॥
सौम्येतरयोर्घाताः सौम्येप्यैक्यं यदा चरगुणघ्नात् ।
गुणकाद् गुणहारान्तरहतत्रिभज्या भवेदूना ॥ १९ ॥
भेदगुणाऽनन्तरहारहृताऽथ वियुग्युता भवेद्द्युज्या ।
द्युज्या वा घातगुणाऽनन्तरहारोद्धृता नराः प्राग्वत् ॥ २० ॥

प्राग्घातत्रिज्याकृतिविवरं त्रिभगुणकृतेर्वियोज्य नरैः [१२] ।
[संगुणिते च फलं यत्तदनन्तरहार]हृन्नराः प्राग्वत् ॥ २१ ॥

---

Text of Ms. A :

[16] अपमोत्क्रमगुणानिहताः पूर्वगुणश्छेदगुणकविवरेण
त्रिगुणाहतेन घुत्का विवराण्येतैर्हृतां धान्त्या ।

[17] भत्कानंतरहारैः फलरहित्तांत्पेव शंकवः क्रमशः
वानंतरहारहृता तदंत्तरविवरहृत्ता वांत्पा

[18] सदलगुणकहतेर्गुणहारांतरह । तत्त्रिभगुणेन
सृह विवरं भेदास्स्पुस्तदनंतरहृताविवरैकचं ।

[19] सौम्पेतरयोर्धातास्सौम्पेप्पेकचं पदा चरगुणघ्नात्
गुणिकाद् घुणहारांतरहत्तत्रिभज्पा भवेदूना

[20] भेदगुणानंतरहारहृतास्सौप्त वियुग्पुतो भवेद्युज्पा
घुज्पा ~ र्धाघातगुणानंतरहारहृता ~ नताः

[21] प्राग्घातत्रिज्पाकृतिविवरं त्रिभगुणकृते तज्जनरैर्वीक्तनरौः प्राग्वल्

Ms. B :　21 d वीक्तनरौः प्राग्व

---

1. A better reading would be तद्विवरविवरहता

[लम्बज्योना त्रिज्या त्रिज्याघ्ना त्रिभगुणकृतेरूना ।
तदनन्तरहारहृता तद्गुणिता च धृतिर्दिनदले शङ्कुः] ॥ २२ ॥
एवं योगवि[योगैर्बहुशः साध्या नरा द्युदले] ।

[दृग्ज्याशङ्क्वोः मिथः प्रसाधनम्]

दृग्ज्याशङ्कू प्राग्वन् मिथः प्रसाध्यौ भुजाग्रावत् ॥ २३ ॥

[इष्टशङ्कुः]

पलगुणपलभाकुज्याग्रज्याभिधृतिः पृथग्गुणिता ।
त्रिज्याक्षश्रवणाग्रातद्धृतिभक्ता च नृतलानि ॥ २४ ॥
अथवा धृत्यन्त्याद्यैः कथितगुणैः प्रोक्तहारकैः प्राग्वत् ।
नृतलानि तत्कृतिवियुग्धृतिवर्गान्मूलमथवा ना ॥ २५ ॥
वोक्तगुणैर्गुणितो ना लम्बज्यार्का[१२]पमगुणसमनरहृत् ।
नृतलानि तानि हारैर्गुणितानि नरा गुणहृतानि ॥ २६ ॥

---

Text of Ms. A :

[22] लंवज्पाकोनयुती[unindicated gap]त्रिगुणकृतेर्पदि वा
वस्ति ‾ णाश्च धृतिः [unindicated gap]

[23] पतेद्युतौदगवि[unindicated gap]
दृग्ज्पाशंकु प्राग्वन्मिथः प्रसाध्पौ भुजाग्रावत् ।

[24] पलगुणपलभाकुज्याभूजाभिवृतिः पृथगुणिता
त्रिज्पाक्षश्रवणाग्राउद्धृतिभत्का च नृतलानि

[25] अथवा धृत्पांत्पाद्याः कथितगुणैः प्रोक्तहारकेः प्राग्वत्
नृतलानि तक्कृतिवियुग्वृतिवर्गान्मूलमथवा ना

[26] वोक्तगुणैर्गुणितो ना लंवज्पार्कापमयुणसमनरहृत्
नृतलानि तानि हारैर्गुणितानि नरा गुणहृतानि

Ms. B : 24 d °उद्वृति°

[दृग्ज्यानृतलयोः साधनम्]

त्रिज्याधृतिकृतिवियुतेरग्राप्तं चाग्रयोनयुग्दलितम् ।
नरतलदृग्ज्ये याम्ये दृग्ज्यानृतले तथा सौम्ये ।। २७ ।।

त्रिज्याधृत्योर्योगस्तदन्तरेणाहतोऽग्रया भक्तः ।
लब्धफलाग्राभ्यां वा प्राग्वन्नृतलं तथा दृग्ज्या ।। २८ ।।

[दिनार्धच्छाया-छायाकर्णौ]

द्युज्यान्त्याघाताप्तत्रिगुणकृतिगुणपलकर्णो भकर्णः ।
त्रिज्याऽक्षकर्णगुणिता [स्वधृ]तिभक्ता वा द्युदलकर्णः ।। २९ ।।

अग्रा[त्रिगुण]हृतिरक्षश्रुतिहता द्युगुणान्त्ययोर्वधविभक्ता ।
भावृत्ते स्वाग्राऽग्राक्षश्रवणहृता धृतिविभक्ता वा ।। ३० ।।
तत्पलभाविवरैक्यं द्युदलाभा सौम्ययाम्ययोर्वा स्यात् ।
दृग्ज्याऽक्षश्रुतिगुणिता तद्धृतिभक्ता द्युदलभा वा ।। ३१ ।।

---

Text of Ms. A :

[27] त्रिज्पाधृत्तिकृतिवियुतेरग्राप्तं चाग्रयोनयोनयुग्दलितं ।
नरतलदृग्ज्पे पाम्पे दृग्ज्पानृतले तथा सौम्पे
घाम्पे युतिर्दृग्ज्पा

[28] त्रिज्पाधृत्पोर्योगस्तदंतरेणाहृतोग्रया भक्तः ।
लव्दफलाग्राभ्पां वा प्राग्वन्नृतलं तथा दृग्ज्पा

[29] द्युज्पांत्पाघाताप्तं त्रिगुणकृतगुणयलकर्ण तकर्णः
त्रिज्पाक्षकर्णगुणिता ⁻ तिभक्ता वा घुदलकर्णः

[30] आग्राकृतिरकश्रुतिहताम्पुगणांत्पयोर्वधविमक्ता
भावृत्ते स्वावाग्राक्षश्रवणहृता धृति । वेभक्ता

[31] तत्पलभाविवरैक्यं घुदलाभा सौम्पयाम्पयोर्वा स्पात्
दृग्ज्पाक्षश्रुतिगुणिता तद्धृतिभक्ता घुदलभा वा

Ms. B :　31 d तद्वृति°

द्युदलाक्षकर्णयोगस्तद्विवरघ्नश्छायान्तरभक्तः ।
फलमक्षभया रहितं द्युदलच्छा[या] भवत्यथवा ॥ ३२ ॥

वा भावृत्ताग्रोनयुते विपरीते दिनार्धपलभे स्तः ।
सौम्ये याम्ये पलभादिनार्धभे स्तोऽथवा गोले ॥ ३३ ॥

भावृत्ताग्रोनयुत[घ्ना] द्विगुणाक्षाभा पलश्रवणवर्गे ।
देया याम्ये शोध्या सौम्ये मूलं द्युदलकर्णः ॥ ३४ ॥

त्रिज्याधृतिविश्लेषोऽक्षश्रुतिनिहतो विभाजितो धृत्या ।
फलवियुगुत च समेतोऽक्षश्रुतिरितरद् द्युदलकर्णः ॥ ३५ ॥

द्युज्यान्त्याघातत्रिगुणकृतिविशेषोऽक्षकर्णसङ्गुणितः ।
द्युज्यान्त्याहृल्लब्ध्याऽक्षश्रुतिरूनयुतोऽपि द्युदलकर्णः ॥ ३६ ॥[1]

---

Text of Ms. A :

[32] घुदलाक्षकर्णयोगस्तद्विवरघ्नांगुलया भक्तः
फलमक्षभया रहितं घुदलश्छा भवत्पथवा ।

[33] वा भावृत्ताग्रोनयुक्तं दलितं दिनार्धपलभे स्तः
सौम्पे याम्पे पलभादिनार्धभे स्तोथवा गोलो

[34] भादृताग्रोनयुता द्विगुणाक्षाभा पलश्रवणवर्गे
देया याम्पे शोध्पा सौम्पे मूलं घुदलकर्णः

[35] त्रिज्पावृत्तिविशोवोक्षश्रु । तिनिहतो विभाजितो वृत्पा
फलवियुगुदत्क्समेतोक्षश्रुतिरितरद्युदलकर्णः

[36] घुज्पांत्पाघातत्रिगुणकृतिविशेषोक्षकर्णसंगुणितः
घुज्पायुतिहृद्वा श्रुतिहृद्वाक्षश्रुतिराप्पोकुर्घुदलकर्णः

---

1. The manuscript text of 36(c-d) may be reconstructed also as
द्युज्यान्त्याहृतिहृद्वाक्षश्रुतिराभ्यामुक्तवद्द्युदलकर्णः ॥

**कुज्यान्त्याघातहृतोऽक्षश्रवणचरत्रिभगुणघातो वा ।**
**द्युदलश्रुतिः**

**कुजीवान्त्याघातश्चरदलत्रिगुणयोश्च ॥ ३७ ॥**
**तद्विवरमक्षकर्णप्रताडितं प्रथमघातहृल्लब्ध्या ।**
**वियुगन्वितोऽक्षकर्णः प्राग्वद्द्युदले भवेत्कर्णः ॥ ३८ ॥**

**त्रिज्याधृतिविश्लेषस्तद्योगहृतोऽक्षकर्णसङ्गुणितः ।**
**अग्राधृतिहृतिहृत्फलपलभाविवरं द्युदलभा वा ॥ ३९ ॥**

[धृत्यन्त्याद्युज्यानयनम्]

**सार्धरसाष्टभुज[२८६½]घ्नी पलश्रुतिस्तद्धता त्रि[भ]ज्या च ।**
**धृत्या द्युज्यागुणयाऽन्त्यया हृते वा श्रुती फलगुणार्काः[१२] ॥ ४० ॥**

**पलकर्णहतात्त्रिज्यावर्गाद्वा धृतिर्द्युखण्डकर्णेन ।**
**त्रिज्याहतेन, स्वधृतिर्घाताद्वा त्रिज्यया लब्धम् ॥ ४१ ॥**

---

Text of Ms. A :

[37] कुज्पांत्पाघ्नहृदक्षश्रवणाग्रात्रिगुणघातो वा
घुदलश्रुतिः कुजीवांत्पाघातोग्रात्रिगुणयोश्च
[38] तद्विवरमक्षकर्णप्रभाताडिततत्प्रथमघातहृल्लव्पा
वियुगन्वितः कर्णः प्राग्वद्युदले भवेत्कर्णः
[39] त्रिज्पाधृतिविश्लेषस्तद्योगहृतोक्षकर्णसंगुणितः
अग्राधृतिहृत्तिहृत्फलपलभोविवरं घुदलभा वा
[40] सावरसाष्टभुजघ्ना पलश्रुतितद्धत्ता त्रिज्पा च
धृत्पा युज्पागुणयांत्पया हृते वा श्रुत्ती फलयुजोर्काः
[41] पलकर्णहतात्रिज्पाववर्गाद्घातो घुखंडकर्णेन
त्रिज्पाहृतेन वधृतिर्घाताद्वा त्रिज्पया लंब्द ।

Ms. B : 38 c वियुगन्नितः 41 d लंब्द

घातो द्युज्याभक्तो वाऽन्त्याऽन्त्याहृद्द्युमौर्विका वा स्यात् ।
द्युज्यागुणिता वाऽन्त्या त्रिज्याभक्ता धृतिर्भवति ।। ४२ ।।

पलकर्णहता त्रिगुणकृतिः कर्णघ्नद्युजीवयाप्ताऽन्त्या ।
कर्णान्त्याघातहृता लब्धा द्युज्या ततो भवति ।। ४३ ।।

द्युगुणत्रि [गु]णान्तरघ्नाऽन्त्या त्रिज्याहृत्फलोनिता स्वधृतिः ।
कुगुणोनचरगुणगुणाऽन्त्या चरगुणहृत्फलोनिता [स्व]धृतिः ।। ४४ ।।

[द्युदला]द्विलोमजीवाऽधिकक्रमज्याधिकाऽथवाऽन्त्या स्यात् ।
धृतिरथवा चरजीवागुणिता कुज्योद्धृता वाऽन्त्या ।। ४५ ।।

[स्थितिविशेषाः]

सौम्या [यत्राक्ष]समा क्रान्तिस्तत्र द्युखण्डदृग्ज्या ना[स्ति] ।
[ना] त्रिज्या च, कुजस्थे दृग्ज्या त्रिज्यैव, नरो [नास्ति] ।। ४६ ।।

---

Text of Ms. A:

[42] घातो द्युज्याभक्तो वांत्याहृद्युमौर्विका वा स्यात्
कुज्यागुणिता वात्या ग्रज्याभत्का धृति – – ति

[43] पलकर्णहतत्रिगुणकृतेर्कर्णघ्नद्युजीवयाप्त्यात्या
कर्णान्त्याघातहृता लव्द घुज्या ततो भवति ।

[44] घुगुणत्रि – णांतरजीवाघांत्या त्रिज्याहृत्फलोनिता वधृतिः
वा कुगुणचरणगुणगुणांत्या चरगुणहृत्फलोनिता धृतिः ।।

[45] – – – द्विलोर्मजीवाधिकाक्रमज्याधिकाथवांत्या स्यात् ।
धृतिरथवा वरजीवागुणिता कुज्योद्धृता वांत्या

[46] सौम्या – – – समः क्रांतिस्तत्र घुखंडदृग्ज्योना
त्रिज्या च कुजस्छे दृग्ज्या त्रिज्यैव नरो

Ms. B: 42 c °वांत्या° 45 c चरजीवागुणिता

अक्षविलोमज्याऽग्रं [०] त्रिज्या लम्बज्यकैव सम्प्रोक्ता ।
त्रिज्यैव भवेद्द्युदले नष्टच्छाये धृतिः स्पष्टा ॥ ४७ ॥

[आनन्दपुरदशपुरयोः धृतिः]

अक्षश्रवणाभ्यस्ता त्रिज्या वा द्वादशोद्धृता भवति ।
[अथ]नान्तगे रवाविह दिनदलभानौ दशपुरे च ॥ ४८ ॥

द्युदलभादिविधिर्नवमः ।

---

Text of Ms. A :

[47] क्षविलोमज्पोग्रा त्रिज्पा लंवज्पयो -- प्तयुता
त्रिज्पैव भवेभवेद्यदले नष्टश्छाये धृतिस्पष्ट ।

[48] अक्षश्रवणाभ्पस्ता त्रिज्पा वा द्वादशाद्धृता भवति
--- नातरगे रवाविह दिनदलभानो दशपुरे व ॥

घुदलभादिबिधिर्नवमः ।

Ms. B : 47 d धृतिस्पष्टा

## 10. इष्टच्छायाविधिः

[नतोन्नतकालौ]

द्युदलार्कान्तःका[लो] नतोऽर्ककुजान्तरुन्नतो ज्ञेयः ।
[उन्नतवियु]ग्दिनार्धं [नत]न्नतोनं समुन्नतकम् ॥ १ ॥

[उन्नतज्या]

चरदलवियुतसमेतात्समुन्नतात् सौम्ययाम्ययोर्जीवा ।
उन्नतजीवा [जीवा] यथा कलाभ्यस्तथासुभ्यः ॥ २ ॥

[स्वान्त्या]

सा चरदलगुणयुक्ता सौम्ये याम्ये विवर्जिता स्वान्त्या ।
अन्त्या नतोत्क्रमज्याविवर्जिता [वा] भवेत्स्वान्त्या ॥ ३ ॥

[स्वधृतिः ततश्शङ्कुः]

द्युज्याधृतिकुज्याभिर्निहता स्वान्त्या पृथक्पृथग्भक्ता ।
त्रिज्यान्त्याचरजीवाभिराप्तयस्स्वधृतिसंज्ञास्स्युः ॥ ४ ॥

---

Text of Ms. A :

[1] घुदलाकांतःका ~ ततोर्कभुजांतरुततो ज्ञेय
~ ~ ~ ~ ~ ~ ग्घिनाव न्नतोनं समुन्नतकं

[2] चरदलविघुतसमेत्तात्समुन्नतात्सौम्ययाम्पयो जीवा
उन्नतजीवा यथा कलाभ्पस्तथासुम्पः

[3] सा चरदलगुणयुक्ता सौम्पे याम्पे विवजिता स्वाद्या
अंत्पेनत्तोत्क्रमज्पाविवर्जिता भवेत्स्वांत्पा

[4] द्युज्पाधृत्तिकुज्पाभिनिर्हता स्वोत्पा पृथक्पृथग्रक्वा ।
त्रिन्पांत्पाचरजोवाभिराप्तयस्स्वधृतिसंज्ञास्स्पुः

Ms. B : 1 b °न्नतो 2 a °समेत्नान्समुन्नता° 2 b °न्सोम्पयो 2 c पथा
3 d °विवजिता

उन्नतजीवा वा गुणितहृताऽऽप्तं कुजीवया युतविहीनम् ।
सौम्येतरयोः स्वधृतिः तस्याः शङ्क्वादिकं प्राग्वत् ॥ ५ ॥

[शङ्क्वानयने विविधा विधयः]

स्वधृतिस्वान्त्ये गुणिते द्युदलनरेण क्रमाद्विभक्ते च ।
धृत्यन्त्याभ्यां लब्धावभीष्टकालोद्भवौ शङ्कू ॥ ६ ॥

स्वधृतिविवर्जितधृत्या नतोज्ज्यया[1] वा हतो द्युदलशङ्कुः ।
धृत्याऽन्त्यया विभक्तः फलोनितस्सैव वेष्टनरः ॥ ७ ॥

मध्यज्यालम्बगुणा विरविलग्नांशमौर्विका भक्ता ।
त्रिगृह्ज्ययाऽथ शङ्कुं जगुरेवं गोल[त]त्त्वज्ञाः ॥ ८ ॥

[छाया-छायाकर्णौ]

अन्त्याधृतिमध्यनरा द्युदलश्रवणाहताः पृथग्भक्ताः ।
स्वान्त्यास्वधृतीष्टनरैरिष्टश्रवणाः क्रमेण स्युः ॥ ९ ॥

---

Text of Ms. A :

[5] उन्नतजीवैवा गुणितहृत्ताप्तं कुजीवया युतविहीनं ।
सौम्पेतरयोस्स्वधृतिः तस्पाः शंक्वादिकं प्राग्वत्

[6] स्वधृते स्वांते गुणिते द्युदलनरेण क्रमाद्विभक्ते च
धृत्पोंत्पान्पां लव्दावभीष्टकालोसवौ शंकू

[7] स्वधृतिविवर्जिताधृत्पा नतज्पया वा हतो घुदलशंकुः
धृत्पांत्पाधीविभक्तः पलोनितस्सैव चेष्टनरः ।

[8] मध्पज्पालंवगुणा विरविलग्नांशमौर्विका भत्का ।
त्रिगृहज्पयाथ शंकुं जगुरेवं गोलत्वज्ञाः

[9] अंप्त्पत्पधृतिमध्पनरा घुदलश्रवणाहताः पृथग्भक्ता
स्वांभ्पास्वधृतीधृनरेरिष्टश्रवणाः क्रमेण स्फुः ।

---

1. नतोज्ज्यया = नत + उज्ज्यया।

वाऽन्त्याधृतिमध्यनरास्स्वान्त्यास्वधृतीष्टशङ्कुभिर्हीनाः ।
भक्ताः फलं [च] सैकं द्युदलश्रवणघ्नमिष्टाः स्युः ॥ १० ॥

द्युदलश्रवणघ्नान्त्यादिकृतिभ्योऽर्काहतस्वहारकृतीन् ।
त्यक्त्वा पदानि विभजेद्यथोक्तहारैरभीष्टाभाः ॥ ११ ॥

[दृग्ज्या]

अथवा पदानि गुणयेद्रविहृतेष्टशङ्कुना हारैः ।
स्वान्त्यादिभिः प्रविभजेदभीष्टदृग्ज्याः क्रमेण स्युः ॥ १२ ॥

[दिनार्धशङ्कुरिष्टशङ्कुश्च]

क्रान्त्युत्क्रमगुणरवि[१२]हृतिरक्षश्रुतिहृत्पलोत्क्रमज्यायुक् ।
विवरं तत्स्वान्त्याघ्नं त्रिज्याहृत्फलवियुक्तु स्वेष्टनरः ॥ १३ ॥

---

Text of Ms. A :

[10] वांत्याधृतिमधृनरास्स्वांत्याखधृत्तीष्टशंकुभिर्हीवाः
भक्ताः फले सैकचं घुदलश्रवणघ्नमिष्टास्स्पु

[11] र्युदलंश्रवघ्नांत्पादिकृतिभ्पोर्काहृतोकुहाराकृती
त्पत्क्वा पदादि विभजेद्यथोक्तहारैरभीष्टार्थाः

[12] अश्रवा पदानि गुणयेद्रविनिहृतेनेष्टकुशंना हारैः
स्वात्पादिभिः प्रविभाक्षयेदभीष्टदृग्ज्पाः क्रमेण स्पुः

[13] क्रांत्पुत्क्रमगुणरविहृरिरक्षश्रुतिहृत्पलोत्क्रमज्पाघुग्
विवरं तत्स्वांत्पघ्नं त्रिज्पाहृत्पलविघुक्त सेष्टनरः

Ms. B : 10 a °मधृनरा° 10 d श्रवघ्नमिष्टास्स्पुः 11 b °भ्योर्का°
11 d Between °द्यथोक्त and हारैरभीष्टार्थाः the mss. have हाराकृतीप्त्पक्वा पदादि विभनेद्यथोक्त which is repetition by oversight of the matter preceding it. 12 b °कुंशं° 12 c °भाजयेद°
13 b °ज्याघुग्

अन्त्ये च द्युदलेतरे विवरोनत्रिज्यया हृते ते वा ।
व्यासार्धहृते लब्धी द्युदलनराभीष्टशङ्कू स्तः ॥ १४ ॥

विवरोनत्रिज्याघ्ना स्वान्त्योनान्त्या त्रिभज्यया भक्ता ।
फलवियुतो मध्यनरोऽभीष्ट[नरः फल]युतो मध्यः ॥ १५ ॥

[दिनार्धेष्टछायाकर्णौ]

त्रिज्योन्नतगुणविवरं स्वान्त्याहृद्द्युदलकर्णसङ्गुणितम् ।
तद्युग्द्युदलश्रवणोऽभीष्टोऽभीष्टो वियुग्द्युदलजो वा ॥ १६ ॥

तिथि[१५]गुणिता द्युद[ल]हृता समुन्नतज्याऽनुपातजीवा स्यात् ।
स्थूलाऽन्त्याहृत् स्वान्त्या त्रिज्यागुणिता फलं स्पष्टा ॥ १७ ॥
अनुपातज्यागुणितो द्युदलनरस्त्रिज्यया हृतोऽभीष्टः ।
त्रिज्याघ्नः खश्रवणोऽनुपातहृत्त्वभीष्टकर्णः स्यात् ॥ १८ ॥

---

Text of Ms. A :

[14] अंत्येवं द्युदलनरो विवरोनत्रिज्यया हृते ते वा
व्यासार्धहृते लब्दी द्युदलनंराभीष्टशंकू स्तः

[15] विवरोनत्रिज्या । घ्नास्वांत्योनांत्या त्रिभज्यया भक्ता
फलवियुतो मध्यनरोभीष्टो युतो मध्यः ।

[16] त्रिज्यानतगुणविवरं स्वांत्याहृद्युदलकर्णसंगुणितं ।
तघुश्छदलश्रवणौभीष्टाभीष्टां वियुग्पुदलजौ वा

[17] तिथिगुणिता घुदहृता ससुन्नतज्यानुपातजीवाभ्यां
स्छूलांत्याहृत्स्वांत्या त्रिज्यागुणित्ता फलं स्पष्टरः

[18] अनुपातज्यागुणितौ घुदलनरस्त्रिज्यया हृतोभीष्टः
त्रिज्यघ्नः खश्रवणोनुपात्तहृत्त्वतीष्टस्स्यात्

[स्वान्त्या ततश्शङ्कुश्च]

सौम्ये यदोन्नतरहितचरार्धतः ज्या तया चरज्योना ।
स्वान्त्या स्याच्छङ्क्वाद्यं यथोक्तविधिनैव संसाध्यम् ॥ १९ ॥

[स्वधृतिः ततश्शङ्कुश्च]

धृतिकुज्याद्युज्याभिर्गुणिता ज्या[ऽन्त्या]चरत्रिगुणभक्ता ।
लब्धोनिता क्षितिज्या स्वधृतिः प्राग्वन्नरस्तस्याः ॥ २० ॥

[छाया-छायाकर्णौ]

भावृत्ताग्राक्षज्याघाते कुज्योद्धृते द्युतिश्रवणः ।
भावृत्ताग्रालम्बकघाते क्रान्तिज्ययाऽऽप्ते वा ॥ २१ ॥
भावृत्ताग्रात्रिज्यावधेऽथवा भाजितेऽग्रया भवति ।
त्रिज्याभुजाङ्गुलिवधे भुजज्यया [भाजिते] वा स्यात् ॥ २२ ॥

भावृत्ताग्रादृग्ज्यावधेऽग्रया भाजिते भवेच्छाया ॥ २३ ॥

---

Text of Ms. A :

[19] सौम्पे दान्नतसहिता चराद्वृतज्पा तया वरज्पोना
त्स्वांत्पा स्पाश्छंक्वाद्यं यथोक्तविधिनैव संसाध्यं ।

[20] घृतिकुज्पा ‒ घुज्पाभिर्गुणिता ज्या ‒ चरत्रिगुणभक्ता
लव्दोनिता क्षितिज्पा स्वधृतिः प्राग्वं नरस्तस्पाः ।

[21] भावृत्ताग्राक्षन्पाघातो कुज्पाद्वृते द्युतिश्रवणः
भावृत्ताग्रालंवज्याकघाते क्रांतिज्पयाप्ते वा ।

[22] भावृत्तावधोयवा भाजितेग्रया भवति
त्रिज्पाभुजांगुलिवधे भुजज्पया वा स्पात्

[23] भावृत्ताग्रादृग्ज्पावधेग्रया भाजित्ते भवेश्छाया

Ms. B : 20 c लब्दो°

[तत. शङ्कुदृग्ज्ये]

त्रिज्याऽर्का[१२]भाभ्यस्ते कर्णहृते शङ्कुमौर्विकादृग्ज्ये ।
दृग्ज्या सूर्या[१२]भ्यस्ता प्रभाहृता वा भवेच्छङ्कुः ॥ २४ ॥

[धृतिः, उन्नतं, उन्नतकालश्च]

तद्धृत्यग्रात्रिज्याक्षश्रुतिभिस्ताडितः पृथक् शङ्कुः ।
समनृक्रान्त्यवलम्बज्यासूर्ये[१२]र्भाजितो धृतयः ॥ २५ ॥

प्रोक्तगुणघ्नैर्नृतलैर्वाऽग्राकुज्याक्षगुणपलभाहृत् ।

स्वधृतिः कुज्योनयुता सौम्येतरयोर्भवेद् गुण्यः ॥ २६ ॥
त्रिज्याचरजीवाभ्यां गुणितो गुण्यो द्युगुणकुगुणभक्तः ।
तद्धनुरूनसमेतं चरासुभिः स्यादुन्नतकम् ॥ २७ ॥

द्युदलश्रवणहताऽन्त्या स्वेष्टश्रवणोद्धृता फलस्य धनुः ।
चरदलहीनयुतं वा समुन्नतं सौम्यदक्षिणयोः ॥ २८ ॥

---

Text of Ms. A :

[24] त्रिज्यार्काभाम्पस्ते वार्णहृते शंकुमौर्विकादिग्फे
दिग्न्पा सूर्याभ्पस्ता प्रभाहृता वा भवेश्छंकुः

[25] उद्धृत्पाग्रात्रिज्पाक्षश्रुतिभिस्ताडितत्पृथक् शंकुः ।
समनृक्रांत्पवलंवज्पासूर्यैर्भाजित धृतयः

[26] प्रोक्तगुणघ्नैर्नृतलवाग्राकुज्पाक्षगुणपलेभाहृत्
धृतिकुज्पौनसमेता सौम्पेतरयोर्भवेद् गुण्पः

[27] त्रिज्पावरजीवाम्पोर्गुणितो गुण्पो घुगुणकुगुणभक्तः ।
तद्वनुऊनसमेत चरासुमिः प्रागुन्नतकं ।

[28] द्युदलश्रवणहतांत्पा स्वेष्टश्रवणोद्धृता फलस्प धनुः
चरणमयुतहानं वा समुन्नतं सौम्पदक्षिणयोः

Ms. B : 25 b ताडितः पृथक् शंकुः ।  26 d सोम्येतर  27 a त्रिज्याचर°
27 c °समेतं चरा°  28 c °युतहीनं

फलवियुगन्त्योत्क्रमगुणधनुर्नतं दिनदलात्त्रिभज्यायाः ।
अधिकात्क्रमेण चापत्रिगृहकलायुङ्नताः प्राणाः ।। २९ ।।

द्युदलेष्ट[कर्ण]विवरहृतान्त्येष्टश्रुतिहृता फलोनस्य ।
अन्त्यस्य धनुः प्राग्वच्चरदलयुक्तोनमुन्नतकम् ।। ३० ।।

त्रिज्यागुणितः शङ्कुः मध्यज्यालम्बहृत्फलस्य धनुः ।
द्युदलघटीघ्नं तिथि[१५]भिर्विभाजितं वोन्नतः कालः ।। ३१ ।।

त्रिगुणचरार्धगुणाभ्यां हृता धृतिर्द्युगुणकुजगुणहृदन्त्या ।
चरदल[गुण]वियुक्समेता धनुः स्यात्प्राग्वदुन्नतकम् ।। ३२ ।।

कुज्या धृतेर्न शुद्ध्यति चेत्तद्विवरं समुक्तगुणनिघ्नम् ।
हारहृते फलधनुषा चरार्धहीनं समुन्नतकम् ।। ३३ ।।

---

Text of Ms. A :

[29] फलवियुगंत्योक्रमगुणधनुर्ततं दिनदलास्त्रिभज्पायाः
अधिकात्क्रमेण चापत्रिगृहकलाघुंनीतीः प्राणाः

[30] द्युदलेष्टविवरहृतांत्पेष्टश्रुतिह्लता फलोनस्प
त्रिगुणस्प धनुः प्राग्वच्चरदलयुत्क्रोनमुन्नतकं ।

[31] त्रिज्पागुणिताः शंकु मंध्पज्पालंवहृत्फलस्प धनुः
------------गोलविदां लग्नमतः प्रोक्तवत्कालः
द्युदल-------------प्तधनुः
द्युदलघटीघ्नं तिथितिर्विभाजितं वोन्नतः कालः

[32] त्रिगुणतरामगुणाभ्पां हृता धृतिर्घुगणभूतगुणहृदत्पा
चरदलविघुक्समेता धनुः----प्राग्वदुन्नतकं ।

[33] कुज्पा धृतेर्न शुद्ध्यति चेत्तद्विवर समुत्कगुणामिघ्नां
हारहते फलयुक्वरार्धहीनं समुन्नतकं

Ms. B ; 29 b °र्नतं 29 d °कलीघुंनीतीः 30 b °हृता

**अन्त्या[या]श्चरार्धजीवा न विशुद्धयति चेद्विशेषचापेन ।**
**हीनं चरार्धमथवा दिनगतशेषोन्नतः कालः ।। ३४ ।।**

[गुणहारगणितम्]

**गुणहारान्तरनिहते गुण्ये हारोद्धृते फलं देयम् ।**
**महति गुणके स्वहाराद्गुणके शोध्यं तथा लघुनि ।। ३५ ।।**

**हारगुणयोगनिघ्ने गुण्ये हारेण भाजिते शोध्यः ।**
**[गुण्यस्तदाऽऽप्तमथवा]ऽन्त्यफलं भवेत्सुस्फुटं नित्यम् ।। ३६ ।।**

**द्वित्र्यादिगुणघ्नोऽन्त्यो गुणको हारस्तथैव हारहृतिः ।**
**गुणगुण्यवर्गघाते हारकृतिहृते फलस्य पदम् ।। ३७ ।।**

**गुणगुण्यवधः फलहृद्धारो हारहृदवाप्तिराप्तिहतः ।**
**हारो वधो [वधो] गुणहृतो गुण्यो गुण्योद्धृतो गुणकः ।। ३८ ।।**

---

Text of Ms. A :

[34] अंत्याश्चरार्धजीवा न विशुद्धयति चेद्विशेषचापेन
हीनं चरार्धमथवा दिनगतशेषोन्नंतः कालः ।
[35] गुणहारांन्तरनिहते गुण्पे हारोद्धृते फलं देयं ।
महति गुणके खहाराद्गुणके शोध्पं तथा लग्ननि
[36] हारगुणयोगनिघ्ने गुणो हारेण भाजिते शोध्पः
अंत्पफले भवेत्सुस्फुटं नित्पं ।
[37] द्वित्रांत्पगुणांत्पो गुणको हारस्तथैव हारहृतिः
गुणगुण्पवर्गघातैर्हारवतिहृते फलस्प पदं
[38] गुणगुण्पवधः पलहृद्धारो हारहृदवाप्तिराप्तिहतः
हारो वधो गुणहृते गुण्पो गुण्पोद्धृतो गुणकः ।

इष्टश्छायाविधिर्दंप्त्पमः ।। ।।

**Ms. B :** 35 c स्वहाराद्गुणके 36 d अंत्यफलं

[व्यस्तविधिः]

**गुणको हारो [हारो] गुणकः क्षेपः क्षयः [क्षयः] क्षेपः ।**
**मूलो कृतिः कृतिः पदमन्ततो व्यत्ययाद्विलोमविधौ ।। ३९ ।।**

[उपसंहारः]

**गुणकारगुण्यराशी गुण्यगुणाख्यौ यथा भवत ज्ञेयौ ।**
**एवं छायानयनं बहुधा कालो विलोमेन ।। ४० ।।**

**इष्टच्छायाविधिर्दशमः ।**

---

Text of Ms. A :

[39] गुणको हारो गुणकः क्षेपः क्षपः क्षेपः
मूले कृतिः कृतौ पदमाद्यतो व्पत्पयाद्विलोमविधौ

[40] गुणकारगुण्पराशी गुण्पगुणाख्पौ घथा भवेज्ज्ञेयौ
एवं श्छायानयनं दहुधा कालौ विलोमेनु

इष्टश्छायाविधिर्दप्त्पमः ।।   ।।

Note : The order of the last four verses (vss. 37-40) has been changed. Their order in the original mss. is : 40, 39, 37 and then 38.

## 11. सममण्डलप्रवेशविधिः

[रविदिग्ज्या रव्यग्रातोऽधिका चेत्तदा रविशङ्कुः]

**समदृङ्मण्डलविवरात् क्षितिजे जीवा निगद्यते दिग्ज्या ।**
**तत्कृतिरग्राकृत्या हीना कृतशक्र[१४४]ताडिता निहता ।। १ ।।**
**त्रिज्याकृत्या प्रथमोऽग्रारव्य[१२]क्षभाहतिर्निहता ।**
**त्रिज्यावर्गेण तथाऽपरो विभक्तौ स्फुटौ तौ च ।। २ ।।**
**दिग्ज्यार्क[१२]घातकृत्यक्षाभात्रिज्यावधवर्गयोः ।**
**योगेनाद्यादन्यवर्गयुतान्मूलं युतोनितम् ।। ३ ।।**
**अन्येन सौम्येतरयोर्गोलयोर्याम्यदिग्यदि नरः ।**

[रविदिग्ज्या रव्यग्रातो हीना चेत्तदा रविशङ्कुः]

**सूर्ये उत्तरगोलस्थे समवृत्तादुदग् रवौ ।। ४ ।।**
**पदे न युक्तः स्यादन्यः समदक्षिणगे रवौ ।**
**अग्रया यत्र दिग्ज्योना दिग्ज्यावर्गोनिता कृतिः ।। ५ ।।**

---

Text of Ms. A :

[1] समदृंमंडलविवरोत्क्षितिजे जीवा निगद्यते दिग्ज्पा
श्रुतिरग्राकृत्पा हीना कृतिशक्रताडिता निहत्ता
[2] विज्पाकृत्पा प्रथमोग्रारव्पक्षभाहतं विधृता
त्रिज्पावाहतेनूपापरो विभक्तो स्फुटौ तौ चा
[3] दिग्ज्पार्कघातकृत्पक्षाभात्रिज्पावधवर्गयोः
योगानाघनन्पवर्गयुतान्मूलं घुतोनित
[4] अन्पेन सौम्पेनतरयोगोलयोर्दिग्विदिनरः
सूर्य उत्तरयाम्पस्छे समवृत्तादुदग्रवौ
[5] पदेन युक्तश्वीदिभ्रा समदक्षिणगे रवौ
अग्रया यत्र दिग्ज्पोभा दिग्ज्पावर्गोनिता कृतिः

Ms. B : 3 d घुतोनितं 4 a सोम्पेततरयो°

अग्रायाः प्राग्वदाद्यान्यौ आद्योनादन्यवर्गतः ।
यत्पदं तेन हीनाढ्योऽपरः शङ्कुः यथाक्रमम् ॥ ६ ॥

[दिवौकसां स्फुटशङ्कुः]

स्फुटमानार्धयुक्शङ्कुधनुषोर्ज्या दिवौकसाम् ।
मध्यभुक्तेर्वासरांश[ $\frac{1}{15}$ ]कलिकोना स्फुटो नरः ॥ ७ ॥

[रवेः समशङ्कुः]

रविभुजजिनमौर्व्योर्वधात्पलज्याहृतात् समः शङ्कुः ।
उत्तरगोले स्वाक्षादल्पक्रान्त्यामयं [ग्राह्यः] ॥ ८ ॥

क्रान्तिज्या त्रिगुणघ्ना पलज्यया भाजिता समना ।
पलकर्णहृता चापमजीवाऽक्षभाहृता समना ॥ ९ ॥

वाऽग्राक्रान्तिज्याहतिरुर्वीजीवोद्धृता समः शङ्कुः ।
स्वधृतिघ्नापमजीवा नृतलहृता समनरो भवति ॥ १० ॥

---

Text of Ms. A :

[6] अग्रायाः प्रापदाद्यात्पावाद्योनादन्पवर्गतः
यत्पदं तेन हीनास्तोपनः शंकुः यथाक्रमम

[7] स्फुटमानार्धयुश्छंकुधनुषोज्या दिवौकासां ।
मध्यभुक्तेर्वासरांशे कालकोटेः स्फुटो नरः

[8] रविभुजाजेनमौव्योर्वधात्पलज्पाहृतात्समः शंकुः
उत्तरगोले खाक्षादल्पक्रांत्पामयं

[9] क्रांतिज्पा दिगुणघ्ना यलज्पया भाजिते समोना ।
पलकर्णहता चापमजीवाक्षिभाहृता समता

[10] वाग्राक्रांत्रिज्पाहतिरुर्वीजीवोद्दृता समः शंकुः
स्वधृतिघ्रापमजीवा नृतलहृता समनरो भवति

Ms. B : 6 a द्यान्या 6 d यथाक्रमम् 8 c स्वाक्षा°

लम्ब[ज्या]ग्राघातात्पलज्यया भाजितात्समनरो वा ।
द्वादशगुणिता वाऽग्रा विषुवच्छायोद्धृता समना ॥ ११ ॥

इष्टनराभ्यस्ताऽग्रा नृतलविभक्ताऽथवा समः शङ्कुः ।
तद्धृत्यग्राकृत्योर्विशेषमूलं समनरो वा ॥ १२ ॥

[समच्छायाकर्णः]

द्वादशगुणिताऽक्षज्या क्रान्तिज्याभाजिता समश्रवणः ।
लम्बज्याऽक्षाभाघ्ना क्रान्तिज्याहृत्समः कर्णः ॥ १३ ॥

त्रिज्याऽक्षाभाभ्यस्ता वाऽग्राभक्ता समश्रुतिर्भवति ।
त्रिज्याऽक्षश्रुतिघातात्तद्धृत्याऽऽप्तात् समः श्रवणः ॥ १४ ॥

त्रिगुणपलाभाकृतिहृतिरक्षश्रुतिकुगुणघातहृत्कर्णः ।
वाऽक्षाभाघ्नाऽक्षज्या कुज्याभक्ता समः श्रवणः ॥ १५ ॥

---

Text of Ms. A :

[11] लंबाग्राघातात्पलज्यया भाजितात्समनरो वा
द्वादशगुणितावाग्रा विषुवश्छायोद्धृता समना

[12] इष्टनराभ्यस्ताग्रा नृतलविभक्ताथवा खसमः शंकुः
उद्धृत्यग्राकृत्योर्विशेषमूलं समनरो वा

[13] द्वादशगुणिताक्षज्या क्रांतिज्याभाजिता समश्रवणः
लंवज्याक्षाभाघ्ना क्रांतिज्याहृत्समः कर्णः

[14] त्रिज्याक्षाभाभ्यस्त्रा वाग्राभक्ता समश्रुतिर्भवति
त्रिज्याक्षश्रुतिघातात्तद्वृत्याप्तं समः श्रवणः

[15] त्रिगुणपलभाकृतिहृतिरक्षश्रुतिकुगुणघातहृत्कर्णः
वाक्षाभाघ्नाक्षज्या कुज्याभक्तास्समाः श्रवणः

Ms. B : 12 b स्वसमः

[रवेः समशङ्कुः]

पलकर्णार्ककुगुणहतिरक्षाभाकृतिहृता समो ना वा ।
लम्बत्रिगुणकुगुणहतिरक्षज्याकृतिहृता समना ॥ १६ ॥
भक्ते तयैव [श्रुत्या] वा स्याल्लम्बकगुणाक्षकर्णबधः ॥ १७ ॥

त्रिज्येष्टक्रमगुणवधोऽक्षज्याहृतः समो ना वा ।
प[ल]कर्णेष्टनरकुगुणवधोऽक्षभाघ्ननृतल[हृ]तो वा ॥ १८ ॥

नरधृतिकुगुणाभ्यासो नृतलकृतिहृतोऽथवा समः शङ्कुः ।
धृतिकुगुणार्क[१२]वधो वाऽक्षाभानृतल[घात]हृत्समना ॥ १९ ॥

लम्बगुणकुगुणधृतिहतिरक्षज्यानृतलघातहृत्समना ।
तद्धृत्यग्रायोगात्तद्विवरघ्नात्पदं समना ॥ २० ॥

द्युगुणचरज्याघातो लम्बगुणघ्नो[ऽक्षगु]णकृतिहृत् [समना] ।
[घातोऽ]र्क[१२]गुणोऽक्षाभाहताक्षगुणहृत्समो ना वा ॥ २१ ॥

---

Text of Ms. A :-

[16] पलकर्णार्किकुगुणहातरक्षाभात्कृतिहृतास्तथोना वा
लंवत्रिगुणकुगुणहत्तिरक्षऽषाकृतिहृता समना ।

[17] भक्तो तयेव वा स्पाल्लंवकगुणाक्षकर्णयधः

[18] त्रिज्पष्टत्रिगुणवधोक्षज्पाहृंत ‾ ‾ मां ता वा
यकर्णष्टनरक्तगुणवधोक्षभाघ्ननृतल ‾ तो वा ।

[19] नरधृतिकुगुणाभ्पासा नृतलंकृतिहृतोथवा समः शंकुः
धृतिकुगुणाकवधो वाक्षाभावृतलहृत्समना ।

[20] लम्वगुणकुगुणधृतिहतिरक्षज्पानृतलद्यातहृत्समना
तद्धृत्पग्रायौरधातुद्विवरघ्नात्पदं समना ।

[21] द्युगुणवरज्पाद्यातो लम्वगुणघ्न ‾ ‾ ‾ ‾ णकृतिहृतो
र्कगुणोक्षाभाहताक्षगुणहृत्समो ना वा

Ms. B : 16 b °रक्षाभान्कृति° 19 c °कुगुणार्क° 20 a लम्ब° 21 b लम्बगुणघ्न

क्रान्तिज्याघ्नो घातः कुज्याक्षज्यावधोद्धृतः समना ।
[अथवा क्रान्तिज्याघ्नात् त्रिगुण]तद्धृतिचरगुणहृतेः साध्यः ॥ २२ ॥
किन्त्वत्र भागहरणं हारैरन्त्याहतैर्भवति ॥ २३ ॥

[शङ्कुभ्रमवृत्तस्य विष्कम्भः]

त्रिज्याग्रा[युति]वियुतिहृतिर्दिनदलनृतलाप्तमन्वितमनेन ।
नृतलेनाभाशङ्कोस्स्याद् भ्रमवृत्तस्य विष्कम्भः ॥ २४ ॥

[छायाभ्रमवृत्तस्य विष्कम्भः]

तत्कालभुजादिनार्धच्छायायोगान्तरं समान्यदिशोः ।
भुजवर्गोनच्छायावर्गात्तद्वर्गसंयुताल्लब्धम् ॥ २५ ॥
द्विगुणेन तेन विवरेणाप्तं रविभाभ्रमच्छेदः ।
सोऽपि द्विगुणोऽङ्गुलभाभ्रमवृत्ते भवति विष्कम्भः ॥ २६ ॥

---

Text of Ms. A :

[22] क्रान्तिज्याघ्नो जातः कुज्याक्षज्यावधाद्धृतः समना
दुद्धृतिचरगुणहृतेस्साद्यः ।
[23] केन्त्वत्र भागहारणं हारैरंत्याहतैर्भवति ।
[24] त्रिज्याग्राहृतिवियुतिदिनदलनृतलाप्तमन्वितमनेन
नृतलेताभाशङ्कोस्स्यात्क्रमवृत्तस्प विष्कम्भः ।
[25] तत्कालभुजादिनावम्वायायोगान्तरं सामान्पादिशोः ।
भुजवर्गातस्छायावर्गात्तद्वर्गसंपुताल्लब्धम् ।
[26] द्विगुणेन येण विवरेणायं रविभाभ्रमछेदः
सोपि द्विगुणोङ्गुलगाभ्रमवृत्त भवति । विष्कम्भः ।

Ms. B : 24 a °वियुतिर्दिन° 24 c नृतलेना° 25 a °दिनावम्बा°
25 b सामान्या दिशोः 26 b °भ्रमच्छेदः 26 d भ्रमवृत्ते

[समदृग्ज्या-समच्छाये]

**दिनदलदृग्ज्योनहतात्तस्मान्मूलं वदन्ति समदृग्ज्याम् ।**
**अङ्गुलग[णि]तादेवं सममण्डलभाङ्गुलानि स्युः ॥ २७ ॥**

[उन्नतकालसंज्ञकं द्युगतशेषम्]

**त्रिगुणापमगुणरवि[१२]हतिरक्षाभाद्युगुणघातहृदवाप्तेः ।**
**चापं चरार्धयुगिने स[म]वलयगते द्युगतशेषम् ॥ २८ ॥**

**त्रिगुणाग्रार्ककृति[१४४]वधोऽक्षाभाद्युगुणाक्ष[कर्ण]हृतः ।**
**तच्चापं चरदलयुग्वोन्नतमर्के समवलयगे ॥ २९ ॥**

**[अ]र्ककृति[१४४]त्रिगुणकुगुणघातोऽक्षाभाकृतिद्युगुणवधहृत् ।**
**तद्धन्व[युक्]चरार्धं सममण्डलगस्य उन्नतकम् ॥ ३० ॥**

---

Text of Ms. A :

[27] दिनदलदृग्ज्योजनहतात्तस्मान्मूलं वदन्ति समदृग्ज्यात् ।
अङ्गुलगताथेवं सममण्डलभाङ्गुलानि स्फुः ।

[28] त्रिगुणायमगुणरविहृतिरक्षाभाद्युगुणद्यातहृदवाप्तेः ।
चापं चरार्धयुगिनस – वलपगते द्युगतशेषम् ।

[29] त्रिगुणाग्रार्ककृतिविधोक्वाभाधुगुणाक्ष – – – हृतः
तच्चायं चरदलघुग्पोन्नतमर्छे समवलयगे वा

[30] र्छकृतित्रिगुणकुगुणद्यातोक्षाभाकृतिघुगणवधहृत्
तद्दन्वचराधं सममण्डलगस्पुरुन्नतकम्

[समवृत्तगे रवौ नतोन्नतकालौ]

समदृग्ज्या त्रिगुणहता द्युज्याभक्ता फलस्य यद्धन्वम् ।
तत्समवृत्ते संक्षेपान्नतोन्नतौ वोक्तवद् बहुधा ॥ ३१ ॥

समसण्डलप्रवेशविधिरेकादशः ।

---

Text of Ms. A :

[31] समदृग्ज्या त्रिगुणहता द्युज्याभक्ता फलस्य ¯न्वनम् ।
तत्समवृत्ते संक्षेयान्नतोन्नतौ वोक्तवद्वहुधा ।

[Vss. 28-31 above have been transposed to this place from the end of section 12 where they were irrelevant.]

समसण्डलप्रवशविधिरेकादशः ।

## 12. कोणशङ्कुविधिः

[कोणशङ्कुसाधनाय प्रथमविधिः]

त्रिज्याकृतिदलमग्राकृतिवियुगिनकृतिहृतं भवेदाद्यः ।
अन्त्योऽर्कपलाभाग्रावधोऽक्षभाकृतियुतैर्द्विनगैः [७२] ॥ १ ॥
भक्तावाद्यान्यकृतियुतस्य पदं युतमुदग्वियुग्याम्ये ।
अन्येन कोणना स्याद्वियुगुदगपि लघु पदान्नाऽन्यः ॥ २ ॥

[द्वितीयविधिः]

इष्टाग्रान्तरकृत्या द्विगुणितयोदग्वियुक्त्रिगुणवर्गात् ।
मूलं कोणनरो वा पलभाघ्नोऽर्कविहृदिष्टमसकृदेवम् ॥ ३ ॥
दक्षिणगोले चेष्टयुताग्रयोक्तविधिना विदिङ्ना स्यात् ।
तस्माद्दृग्ज्याकर्णच्छायाः संसाधयेत् प्राग्वत् ॥ ४ ॥

[आद्यान्यहाराणां रूपान्तराणि]

अग्राकृत्या हीना त्रिगुणकृतिः द्विगुणया द्विभक्ता वा ।
गुण्यो वाऽग्राकृत्या हीनं त्रिगुणस्य वर्गार्धम् ॥ ५ ॥

---

Text of Ms. A :

[1] त्रिज्पाकृतिदलमग्राकृतिवियुगिनकृतिहृतभ्मवदाद्याः ।
अन्पोर्कपलाभाग्रावधोक्षभाकृतिपुतैर्द्विनगैः

[2] भक्तावाघोन्पकृतिःपुतस्प पदं पुतमुदग्पिपुग्पायो
अन्पेन कोणना स्पाद्विथुगुदगपि लघु यदनात्पः ।

[3] इष्टाक्रान्तरकृत्पा द्विगुणितयोदग्पियुक्तिगुणवर्गात् ।
मूलं कोणनरो वा । यलभाघ्पोर्कविहृदिष्टमसकृदेवम् ।

[4] दक्षिणगोले चेष्टपुजागाद्युक्तविधिना विदिङ्ना ग्पात्
तस्मादृग्पाकर्णछाया संसाधयेत्प्राग्वत् ।

[5] अग्राकृत्पा हीना त्रिगुणकृतिः द्विगुण्पया विभागोन्पः
गुण्पो वाग्राकृत्पा हीनं द्विहीनं त्रिगुणस्प वर्गार्धम् ।

लम्बगुणकृतिगुणोऽसावाद्योऽन्योऽग्राक्षलम्बगुणघातः ।
त्रिगुणापमपलगुणहृतिरन्यो वा त्रिगुणलम्ब[कु]गुणवधः ॥ ६ ॥
अक्षगुणकृतिघ्नस्समना वाऽक्षत्रिगुणकृतियुतिदलं हारः ।
तयोः पलज्याकृतियुग्वा लम्बगुणकृतिदलं चैव ॥ ७ ॥
ताभ्यां प्रा[ग्वत्साध्यो] वि[दिङ्न]रो

वाऽन्यसाधने हारः ।
आद्यान्ययोस्तु राश्योः पलभाक्षश्रुतिकृतियुतिदलम् ॥ ८ ॥
अन्यो वाऽपमजीवाक्षश्रुतिपलभावधोऽथवा कुज्या ।
पलकर्णार्कहृता वा समनरगुणितोऽक्ष[भा]वर्गः ॥ ९ ॥

[पलश्रुतिं त्रिज्यां प्रकल्प्य कोणशङ्कुः]
अक्षश्रुत्याऽभ्यस्तास्समनृक्रान्तिकुगुणाग्रशिञ्जिन्यः ।
त्रिगुणहृताः कोणनरस्ताभ्यः प्राग्वत्पलश्रुतौ त्रिगुणे ॥ १० ॥
त्रिज्याह्वाक्षश्रुत्याऽनयाग्रयेष्टोनयुक्तया प्राग्वत् ।
साध्यो विदिङ्नरो वा सौम्येतरगोलयोरसकृत् ॥ ११ ॥

---

Text of Ms. A :

[6] लम्छगुणकृतिगुणोंसावाद्याद्योग्राक्षलम्वगुणघातः
त्रिगुणायमयलगुणहृतिरन्पो वा त्रिगुणलम्छगुणवधः
[7] वान्योक्षगुणकृतिघ्नस्समना वा त्रिगुणकृतियुतिदलं हारः
तयोत्पलज्पाकृतियुग्पा लम्छगुणकृतिश्चैव
[8] ताभ्पां प्र ----यो वि -------रे ------- गवाद्यसाधन हारः
आद्यन्तयोः तु राश्पोः यलभाक्षश्रुतिकृतियूतिदलम्
[9] अन्पो वायमजीवाक्षइतियलभावधौथवा कुद्या
पलभग्नार्कहृता वा समनरगुणितोक्षवर्गः
[10] अक्षश्रुत्काभ्पस्तास्सनृक्रान्तिकुगुणाग्रशिञ्जिन्पः
त्रिगुणकृताः कोणनरस्ताभ्पः प्राग्वत्पलश्रुतौ त्रिगुणे
[11] त्रिज्पाह्याक्षश्रुत्पानपाष्टयौष्टयोनयुक्तया प्राग्वत् ।
सख्पो विदिङ्नरौ वा सौम्पेतरगौलपौरसकृत्

[आद्यान्यहाराणां रूपान्तराणि]

गुण्यापमगुणकृतिहृतिराद्योऽन्योऽग्रापमक्षितिगुणहृतिः ।
समनाकुज्याकृत्योर्वधोऽथवाऽभ्यस्तयोर्हारः ॥ १२ ॥
कुगुणकृतियुतापमगुणकृतिदलं [वाऽग्राकुगुणकृतियुतिदलम्] ।

[अग्रां त्रिज्यां प्रकल्प्य कोणशङ्कुः]

वाऽग्रा[पम]कुगुणसमनरा अग्राघ्नास्त्रिभज्यया भक्ताः ॥ १३ ॥
लघुकास्तैः कोणनरः प्राग्वत्त्रिज्यां प्रकल्प्याग्राम् ॥ १४ ॥
लघ्वग्रयेष्टयुतया याम्ये सौम्ये तथेष्टवियुजा वा ।
त्रिज्यामग्रां कृत्वा विदिङ्नरः प्राग्वदसकृत्स्यात् ॥ १५ ॥

[आद्यान्यहाराणां रूपान्तराणि]

[स]मनरकृति[गुण्यवधः] प्रथमोऽन्योऽग्राकृतिसमनृवधो वा ।
तद्धृत्यग्रापमगुणवधः कुगुणसमनृतद्धृतिवधो वा ॥ १६ ॥

---

Text of Ms. A :

[12] गुण्पोपमगुणकृतिराद्योन्पोग्रायमक्षितिगुणहृतिः
समनाकुज्पाकृत्पोः । वधोथवाभ्पस्तयोहारः

[13] कुगुणकृतियुतायमगुणहृतिदलं

[14] वाग्राग्राकुगुणसमनरा अग्राघ्रास्त्रिभज्पया भक्ताः
लघुकास्तैः कोणनरः प्राग्वत्त्रिज्पा प्रकल्प्याग्रम् ।

[15] लब्वग्रयेष्टयुतया याघ्पे सौघ्पे तथाष्ठयुजा वा ।
त्रिज्पामग्रां कृघा विदिनीरः प्राग्वदसकृत्स्पात्

[16] मनरकृतियठः प्रथमोन्पोग्राकृतिसमनृयघो वा
उद्धृत्पासमनरवधः कुस्मरणसमनृतद्धृतिवधो वा

Ms. B : 12 d °तयोर्हारः 14 c Before लघुकास्तैः the mss. have लघु followed by 51 ciphers, which is irrelevant. 15 b तथाष्ट°
15 d विदिर्नरः

तद्धृत्यग्राकृत्योर्युतिदलमनयोर्प्रकीर्त्यते हारः ।
समनृकृतिदलयुगग्राकृतिरथवाऽऽभ्यां विदिङ्नरः प्राग्वत् ॥ १७ ॥

[तद्धृतिं त्रिज्यां प्रकल्प्य कोणशङ्कुः]

वाऽपम[कु]गुणाग्रासमनरास्तु तद्धृतिहतास्त्रिगुणभक्ताः ।
लघुका विदिङ्नरास्तैः प्राग्वत्त्रिज्याह्वतद्धृत्या ॥ १८ ॥
इष्टयुतयोनया वाऽनयाऽग्रया कोणनोक्तवत् साध्यः ।
याम्योत्तरयोरसकृत्त्रिज्याह्वां तद्धृतिं कृत्वा ॥ १९ ॥

[आद्यान्यहाराणां रूपान्तराणि]

इष्टनृ[कृ]तिगुण्यवधः प्रथमोऽन्योऽग्रेष्ट[नृ]नृतलवधो वा ।
धृत्यग्रापमगुणहतिरन्यो वा धृतिनृकुगुणवधः ॥ २० ॥
नृतलकृतिहतः समना वाऽन्यो नृतलधृतिकृतियुतिदलं स्यात् ।
हारस्तयोर्नृतलकृतियुतनृकृतिदलमथवोक्तवच्चान्यत् ॥ २१ ॥

---

Text of Ms. A :

[17] उद्धृत्पग्राकृत्पोर्युतिदलमनयोः प्रकीत्पंते हारः
समनृकृतिदलपुगग्राकृतिरथवाभ्पां विदिङ्नरः प्राग्वत् ।

[18] वायमगुणाग्रासमनराः तु तद्धृतिहतास्त्रिगुणभक्ताः
लघुका दिविदिङ्नाराः तैः प्राग्वत्त्रिज्पाह्वउद्धृत्पा

[19] इष्टयुतयौनया वानयाग्रया कौणेनौक्तयत्साध्पः
याम्पोत्तरयोरसकृत्त्रिज्पाह्वात्तद्धृतिं कृत्वा

[20] इष्टतृतिगुण्पवधः प्रथमौन्पौग्रेष्टनृतलवधो वा
धृत्पाग्रापमगुणहतिरन्पो वा धृतिनृकुगुणवधः

[21] नृतलकृतिहतः समना वान्पो तृतलवृतिकृतियुतिदलं स्पात् ।
हारस्तयोर्नृतलकृतियुतवृंकृतिदलमथवाक्तेवश्चानृत् ।

Ms. B : 21 c °नृतलकृतियुतनृंकृति°

[धृतिं त्रिज्यां प्रकल्प्य कोणशङ्कुः]

**धृतिगुणिताः त्रिगुणहृता अग्रापमकुगुणसमनरा लघुकाः ।**
**तैः प्राग्वत्कोणनराः साध्याः त्रिज्यां प्रकल्प्य धृतिम् ॥ २२ ॥**

[इष्टच्छायाकर्णं त्रिज्यां कृत्वा कोणशङ्कुः]

**इष्टश्रवणाभ्यस्ता अग्राद्यास्त्रिज्ययोद्धृता लघुकाः ।**
**तैरपि विदिङ्नरो वा त्रिज्यामिष्टश्रुतिं कृत्वा ॥ २३ ॥**
**इष्टयुजा वियुजा वा साध्यो लघ्वग्रया विदिक्शङ्कुः ।**
**असकृद्याम्योत्तरयोः त्रिज्याह्वेनेष्टकर्णेन ॥ २४ ॥**

[कोणशङ्कुच्छायादिग्ज्ञानम्]

**समचतुरश्रे क्षेत्रे कोणनरः स्याद् भुजेऽधिके कोटेः ।**
**महति नते नैर्ऋत्यां भाख्याऽल्पतया तथैशान्याम् ॥ २५ ॥**

---

Text of Ms. A ;

[22] धृतिगुणितः त्रिगुणहृता अग्रायमकुगुणसमनरा लघुकाः
तैः प्राग्वत्कोणनरास्साध्याः त्रिज्यां प्रकल्प्य वृतिम्
[23] इष्टश्रवणाभ्यस्ता अग्राद्यास्त्रिज्यायोद्धता लघुकाः
तैरपि विदिङ्नारौ वा त्रिज्यामिष्टश्रति कृत्वा
[24] इष्टयुजा वियुता वा साध्यौ लघ्वग्रया विदित्कङ्कुः ।
असकृद्याम्योत्तरयोः त्रिज्याह्वेनेष्टकर्णेन
[25] समचतुरश्रक्षेत्त्रे कोणनरस्स्यात् भुजेधिके कोटिः
महति नते नैनृभ्यां भाज्याल्पतया तथैशान्याम् ।

Ms. B : 23 d °श्रतिं 24 a वियुजा वा 24 b विदित्छंकुः

**वाभावृत्ते कोणे भाख्याऽऽग्नेय्यां नरोन्नते वाऽल्पे ।**

**महति तथा वायव्यां घटिकाः प्राग्वद्विदिक्शङ्कोः ॥ २६ ॥**

**कोणशङ्कुविधिर्द्वादशः ।**

---

Text of Ms. A :

[26] वाभावृत्ते कोटेः भाख्यापाग्नेष्पा नरोनते वाल्पे ।

महति तथा वायव्पा घटिकाः प्राग्रद्विङ्नासमं शङ्कोः

[Four verses occurring here in the manuscript have been transposed to the end of Section 11 which was their appropriate place. See vss. 28-31 of Section 11.]

कोणशंकुविधिर्द्वादशः ।

## 13. छायातोऽर्कानयनविधिः

[सौम्ययाम्यगोललक्षणम्]

**द्युदलार्कनतः प्राग्वत् खाक्षः तदक्षभावशाद् दिशौ स्तः ।**
**गोलोऽल्पपले खाक्षाद्याम्यस्सौम्योऽधिके ज्ञेयः ॥ १ ॥**

**द्युदलद्युतेः प[ला]भा लघ्वी चेद्दक्षिणोऽधिका सौम्यः ।**
**याम्या द्युदलाभा चेन् नित्यं सौम्यो भवेद् गोलः ॥ २ ॥**

[कुलीरादि-मकरादि-अयनलक्षणम्]

**द्युदलद्युतेरुपचयः कुलीरराशेर्मृगादपचयः स्यात् ।**

[रविक्रान्तिः]

**खाक्षाक्षान्तरयोगस्समान्यककुभोरिनक्रान्तिः ॥ ३ ॥**
**खाक्षाभावात्क्रान्तिर्पलतुल्या द्युदलाभा यतो नास्ति ।**

[रविभुजज्या]

**क्रान्तिज्या त्रिज्याघ्ना जिनलवगुणहृता रविभुजज्या स्यात् ॥ ४ ॥**

---

Text of Ms. A :

[1] द्युदलाभः प्राग्वत् वाक्षाः तद्दिक्षभा दिशो — स्ता
गौलोल्पयले स्वाक्षाद्याय्पस्सौम्पोधिके ज्ञेयः

[2] घुदलद्युतिः प — भा लघी वेद्दक्षिणोधिका सौम्पः
पाम्पा दिषुवद्भा चेन्नित्यं सौम्पो भवेद्गोलेः

[3] द्युदलद्युतेरुपचयः कुलीरराशेः मृगादयधघस्स्पात् ।
खक्षाक्षान्तरयोगस्समान्पककुभोरिनक्रन्तिः ।

[4] खाक्षाभावोत्क्रात्तिर्वलतुल्पा घुदलभा यतो नास्ति
क्रान्तिज्प त्रिज्पाघ्नाक्षाभा । चरजिनेलवगुणाहृतिहृत्ता रविभुजज्पा वा

**Ms. B :** 1 b तद्दिक्षुभा  1 c °पले

[द्युज्याचरनृतल]हृतिरवलम्बगुणसमवृत्तनृभिर्गुणिता ।
पलजीवाघ्नानृजिनांशजीवाहृतेर्हृता दोर्ज्या ॥ ५ ॥

वाऽक्षज्याघ्नस्समना जिनांशजीवाहृतोऽर्कबाहुज्या ।
तद्धृतिरक्षज्याघ्ना मिथुनान्ताग्रोद्धृता वा स्यात् ॥ ६ ॥

लम्बज्यातद्धृतिवधात् मिथुनान्तसमनृहृतादिनभुजज्या ।
तद्धृतिपलगुणघातोऽर्कघ्नोऽक्षश्रुतिजिनांशवधहृद्वा ॥ ७ ॥

[त्रिज्यासमनर]घातोऽक्षगुणकुज्येष्टनृतलाहृतः पृथक् ।
भक्तस्त्रिज्याग्राधृतिगुणया जिनांशमौर्व्या दोर्जीवा ॥ ८ ॥

त्रिज्याग्रानृहृतिर्वा धृतिजिनलवगुणवधोद्धृता दोर्ज्या ।
भावृत्ताग्रात्रिज्यालम्बज्यासंहृतिर्भक्ता ॥ ९ ॥
भाकर्णान्त्यापमज्यावधेन लब्धं रवेर्भुजज्या वा ।

---

Text of Ms. A :

[5] हृतिरवलंछगुणसमनत्तर्नृभिर्गुणिता
यलजीवाग्रानृतलेर्जिनांशजीवाहृतैर्हृता दौर्ज्पा

[6] वारवाक्षज्पाघ्रस्सामनाजिनांशजीवाहृतोर्कछहुज्पा
उद्वृतिरक्षज्पाघ्ना मिथुनात्ताग्रोद्व्रत्ता वा स्पात्

[7] लंछज्पातद्वुतिवधान्मिथुनान्तसमनृहृतादिनभुजज्पा
तद्वृतिपलगुणद्यातोर्कघ्रोक्षश्रुतिजिनांशवंधकृता

[8] घातोलगुणमथेष्टनृभिराहृताः पृथग्
भक्तः त्रिज्पाग्रावृतिगुणया जिनांशमौव्पा दौजीवा ।

[9] त्रिज्पाग्रात्रिहृतिर्वा घृतिजिनलवगुणवधोद्वृता दौर्ज्पा
भावृत्ताग्रात्रिज्पालंछज्पासंहृतिर्भक्ता ॥

Ms. B :	5 d °जितांश°	6 d मिथुनान्ताग्रो°

[त्रिज्या] समदृग्ज्याघ्ना स्वनतज्याहृद्द्युमौर्विका [स्यात्] ॥ १० ॥
द्युज्यातः क्रान्तिज्या प्राग्वत्तस्याश्च सूर्यबाहुज्या ।
प्राग्वज्ज्याभ्यः क्रान्तिस्ततोऽर्कदोर्ज्या विधेया वा ॥ ११ ॥

[शाश्वतदिवसः]

लम्बसमायां क्रान्तावुदयास्तमयौ न तिग्मगोर्भवतः ।
तत्र वियद्ध्येयकला मध्यार्कगमोद्धृता दिवसाः ॥ १२ ॥

अथवाऽक्षज्यातुल्या कुज्या द्युज्यासमाऽक्षशिञ्जिनी वा स्यात् ।
त्रिज्यासमाऽथवाऽग्रा चरार्धजीवा च तत्रैवम् ॥ १३ ॥

[ज्ञातग्रहाज् ज्ञेयग्रहानयनम्]

ज्ञातज्ञेयग्रहयोरुदयान्तरजा ये भोदयासवः ।
ज्ञातादर्कवदेतैर्लग्नं ज्ञेयस्य मानं तत् ॥ १४ ॥

---

Text of Ms. A :

[10-11] भाकर्णान्त्याकृत्पावधेन लद्धं रवेर्भुजज्पा वा
द्युज्पातत्क्रान्तिज्पा
प्राग्वज्ज्पाभ्पः क्रान्तिस्ततौर्कदौर्ज्पा विधेयेचम् ।
प्राग्वत्तस्पाश्च सूर्यछाहुज्पा
समदृग्ज्पाघ्ना स्वनतज्पाहृघुमौर्विका त्पदतः ।

[12] लंछसमायां क्रान्तावुदपास्तमयाया न तिग्मयौर्भवतः
तत्र वियदयेयकला मघ्पगमार्कोद्दृता विवसाः

[13] अथवाक्षज्पातुल्पा कुज्पा घुज्पागमाक्षशिञ्जिनी वा स्पात् ।
त्रिज्पा समामथवाग्रा चरावजीवा च तत्रैवम् ।

[14] ज्ञातज्ञेयग्रहयोरुह — — वान्तरा — — ग्रो — —
ज्ञातादर्कवदेतैर्लग्नं ज्ञेयस्प मानं तत् ॥

Ms. B : 10 b लब्दं 13 c समासथवाग्रा 13 d तत्वैवम् ॥ 14 e °र्कचदेतैं°

[चन्द्रास्तोदयकालात् तिथिज्ञानम्]

**अस्तोदयं तु याभिः शुक्लेतरपक्षयोः प्रयातीन्दुः ।**
**रात्रौ घटिकाभिस्ता दलितास्तिथयो विनिर्दिष्टाः ॥ १५ ॥**

[रविभुजतः रविज्ञानम्]

**सवितुर्भुजगुणचापं प्रथमपदे भास्करस्तदेव स्यात् ।**
**भार्धाच्च्युतं द्वितीये सभार्धमपरे भतश्च्युतं चान्त्ये ॥ १६ ॥**

[ऋतुलक्षणानि]

**ऋतुलक्षणात्पदानां समभिव्यक्तिर्यतः स्फुटा भवति ।**
**ऋतुलक्षणान्यतोऽहं संक्षेपात् कानिचिद्वक्ष्ये ॥ १७ ॥**

[वसन्तऋतुलक्षणम्]

**विकचविचित्रपुष्पतरुसौरभसंवलितानिले मधौ**
**मधुकरवृन्दगीतविरुते कलकोकिलकोमलस्वने ।**
**मलयजपङ्कजे हिमरुचिस्फुरतारलतास्रगुज्ज्वले**
**प्रवरविलासिनीजनकरोज्झितवार्यभिषिक्तमानिनि ॥ १८ ॥**

---

Text of Ms. A :

[15] ⁻स्तो ⁻ योकार्ि ⁻ क्लेतरय ⁻ योः प्रयातींदुः
रात्रौ घटिकाभिस्ता दलतास्तिथयौ विनिर्दिष्ठः

[16] सवितु ⁻ ⁻णचापं प्रथमयदे भांस्करस्तदेव स्पात्
भावा ⁻ तं द्वितीचे सभावमयरे तयश्च्पुतं चान्त्पे ।

[17] ज्ञनुलक्षणोः पचनां समभिव्यक्तिर्यतः स्फुटा भवति
ज्ञतुलक्षणान्पेताहं संख्येयात्कानिचेद्वृक्ष्ये ।

[18] विकचविचित्रयुष्पतरुसौरभसंवलितानिले मधौ
मधुकरचंद्रगीतविरुते कलकेविलकोमलस्वने
मलयजयंकजं हेमरुचिरास्छरतारलतास्रगुज्ज्पल
प्रकचिलासिनीजनकरोज्कितवार्यभिषिकुमानिनि

**Ms. B :** 15 d विनिर्दिष्टः 17 a ज्ञतु° 18 a पुष्प°

विकसितकर्णिकारसदशोकसुचम्पकचूतमञ्जरी-
बकुलपलाशपुष्पजनितस्फुटवन्यसुसम्पदुज्ज्वलम् ।
कुरबकपारिभद्रतरुभिश्च सुपुष्पितकोणिभिर्वनं
वहति सुचित्रभित्तिरुचिमत्र षडङ्घ्रिकुलाकुलं महत् ॥ १९ ॥

[ग्रीष्मऋतुलक्षणम्]

भवति सहस्रदीधि[तिविभाव]खरस्वर[दाहको]ऽनिलो
दहतितरां तनूरनलमुर्मुरचूर्णवृतेव मेदिनी ।
अविरतदाववह्निभवधूमततीमलिनीकृता दिशो
बहलरजःप्रपुंजकलुषं [क्रियते] शुचिशुक्रयोर्वियत् ॥ २० ॥

[वर्षाऋतुलक्षणम्]

जलदभृतौ यदाम्रफलसंगपिशंगितमेदिनीतलं
धृतनवपल्लवप्रतनुशाखिलतान्तनिरस्तभग्रहम् ।
विबुधजनप्रव[र्ति]तसुधासरिशीतलवायुनाऽन्वितं
भवति घनं प्रफुल्लनवमल्लिकया सुरभीकृतानिलम् ॥ २१ ॥

---

Text of Ms. A :

[19] विकासितककिकारसदशोकेसुचण्पकचूतमञ्जरी
छकुलयलाशयुष्पजनितस्फुटवंकसम्पदुज्ज्पलम् ।
कुरवकमारिभद्रतरु - श्च सुयुष्पितकोणिभिधनं
वहति सुचित्रभित्रिरुचिमत्र षडंह्रिकुलाकुलं महत्

[20] भवति सहस्रविधि - - - - वस्वरंस्वर निलो
हहतितरा तनूरनलमुर्मुरदूर्णक्रुतेव मेदिनी
अविरतदाववह्निभवघूमततीमलिनीकृता दिशो
छहलरजःप्रयुंजकलुषं शुचिशुक्रयोर्वियत्

[21] मलदमृत्ते । यदाम्रफलसंगपिशंगितमेदिनीतल
द्यतनवयल्लप्रतनशाखिलतांतनिरस्तभग्रहम्
विवुधजनप्रव - तितसुधासितशीतलयुमान्वितं
भवति घनं भवति प्रफुल्लनवमल्लिकया सुरभीकृतानिलम् ।

Ms. B : 19 b °पटुज्ज्वलम् । 19 c सुयुष्यित° 20 b °मुर्मुरटूर्ण° °ते च

दधदमरेशचापमचिरांशुल[ता]निशिताग्रसायकं
गवलकुलच्छविः प्रतिरवीन्दुमृगद्विषलुब्धको महान् ।
रसितसुगीतगीर्विरहिणीं हरिणीमिव भित्तिसंवृतां
गतशशलांछनैणनयनां विनिहन्त्यलमम्बुदागमे ॥ २२ ॥

प्रियकशिलीन्ध्रनीलकुटजार्जुनकेतकपुष्पजासव-
प्रसवमदोल्लसन्मधुकरीमृदुमन्द्रप[टु]स्वनानिलम् ।
मुदितशिखण्डिताण्डव[समोद]चकोरकनादसुन्दरं
हरिततृणेन्द्रगोपकततीन्द्रधनुश्श्रियशोभिकाननम् ॥ २३ ॥

[शरदृतुलक्षणम्]

धवलविहंगमप्रतियता पदवन्दनचर्चितानना
नवविकचाब्ज[चारु]नयना कलहंससुकोमलस्वना ।
स्फुरदुरुतारकानिकरमौक्तिकहारलताविभूषिता
निखिलकलाकला[पकलिता विलस]न्नवयौवना शरत् ॥ २४ ॥

---

Text of Ms. A :

[22] दवदुभशचायमविरांशुल ‾ निशिताग्रसायकं
गवलकुलछविः प्रतिरवीदुमृगद्दुदलंब्दको महान्
रसितसुगीतगीर्विरहिणीहरिणीमिव भित्तिसंवृतां
गताश्पणांक्षणनवलने विनिहंत्पलमम्वुदागमे

[23] प्रयलसिलिद्रनीलकुटजार्जुनकृतवपुष्पजासव-
प्रसवमदोल्लसधुकरीमृदुमंद्रपस्वनानिल-
मुदितशिस्वडिताण्डवचकोरकनादसुंदरं
हरितर्यणेंदुगोयकततेंद्रधनुश्चरशोभिकाननम् ।

[24] धवलविहंगमप्रतियतौ पदवव्दनर्चिकानना
नवविवचाब्जनयना कलहंमसुकोमलस्वना
स्फुरद्रुरुतारकानिकरमौक्तिकहारलताविभूषित्रा
निखिलकलाकल ‾ ‾ ‾ ‾ ‾ ‾ नून्नवयौवना शरत्

Ms. B : 22 b °मृबम्छुदलंब्दको महान्

[हेमन्तशिशिरऋतुलक्षणम्]

तुहिनचयावृतो दिनमणिर्फलिनीवनक्लिष्टमानसं
क्वचिदधयो हिमोत्पतनतोऽप्यनलोंऽशुततीव हैमने ।
अपटुमरीचिरुष्णकिरणश्शिशिरे शिशिरस्समीरणो
वहलतुषारदृष्टिकलुषं वियदिक्षुरसे प्रसन्नता ॥ २५ ॥

[विषुवायने]

विषुवदजतुलादौ षट्कानि [भानि] मृगादेः ।
उदगयनमथान्यत् कर्कटादेर्भषट्ककम् ॥ २६ ॥

[विष्णुपद-षडशीतिमुख-सङ्क्रान्ती]

स्थिरभवनमुखाप्तेऽर्के [यत्] पदं विष्णुनाम ।
द्वितनुभवनसङ्ग[म]र्कस्य षड्वन्यमाहुः ॥ २७ ॥

---

Text of Ms. A :

[25] तुहिनचपोदिनघलमलीत्फलिनीवनविष्टमान
पच्चिदधयो हिमोत्पतनलोपानिलोंदहनततीव हैमने ।
अययुर्मरीविरुष्णकरिणीश्चिशिरे शिशिरस्समीरणो
वहलतुषारदृष्टिकलुषो विचदिक्षुरसे प्रसन्नता ।

[26] विषुवदजतुलादि गछतीन मृगादेः
उदगयनमथान्पः कर्कटादेद्भूषट्कम्

[27] स्तिरभवनमुखस्तेर्के पदं विष्णुनाम
द्वितनुभवनसांगर्कस्प षड्वन्यमाहुः

Ms. B : 25 a °चयोदिन°वल° 25 b °ततीवं हैमनै । 25 d बहल°

[वसन्तादिऋतुषट्कम्]

**द्वौ द्वौ वसन्तादृतवोऽत्र राशी मेषादितस्तिग्ममयूखचारात् ।**
**ग्रीष्मश्च वर्षा शरदाह्वयोऽन्यो हेमन्तसंज्ञश्शिशिरः षडत्र ॥ २८ ॥**

[चैत्रादिमासानां मध्वादिसंज्ञाः]

**चैत्रादिमासा मधुमाधवाख्यौ शुक्रः शुचिश्चैव नभोनभस्यौ ।**
**इषस्तथोर्जश्च सहस्सहस्यौ तपस्तपस्यावृतवोऽथ वेदात् ॥ २९ ॥**

**छायातोऽर्कानयनविधिः त्रयोदशः ।**

---

Text of Ms. A :

[28] द्वौ द्वौ वसन्तादृतवोत्र राशी मेषादितस्तिग्ममयूखवाराः
ग्रीष्मो च वर्षा शरदाह्वपोन्यो हेमन्तसंज्ञश्चिशिरष्वडत्र

[29] चैत्रादिमासा मधुमाधवाख्यौ शुक्रः शुचिश्चैव नभोनभस्पौ
इषस्तथोर्जश्च सहस्महस्पौ तपस्तयस्यावृतवोथ वेदात् ॥

छायातोःकायनविधिः प्रयोदशः ।

Ms. B :	28 d °शिरष्षडत्र	29 b शुक्लः	29 d चेदात् ॥

## 14. छायापरिलेखविधिः

[छायावृत्ते भुजकोटचग्रादयः]

प्राग्वन्नृतलाग्रैक्यं वियुतिश्च भुजः प्रभाहतो भक्तः ।
निजदृग्ज्ययाऽङ्गुलैस्स्यात्तदक्षाभायुतिविवराद्धि भाग्रा ॥ १ ॥
अग्राङ्गुलिका चैषा भावृत्तेऽक्षप्रभा नृतलसंज्ञा ।
उदयास्तसूत्रमस्मिन् प्रसाधयेदङ्गुलैर्विधिवत् ॥ २ ॥
दृग्ज्याकृतेर्विशोध्यावग्राबाह्वोः कृती पृथङ्मूले ।
आद्यमुदयास्तसूत्रं द्विगुणं कोटिर्भुजस्यान्यत् ॥ ३ ॥
उदयास्तसूत्रमग्रा [भु]जकोटी रवि[१२]गुणानि [नृ]हृतानि ।
अङ्गुलानि वा श्रुत्या हृतानि विभजेत् त्रिभगुणेन ॥ ४ ॥

[छायाग्रभ्रमवृत्त-शङ्कुभ्रमवृत्तयोरालेखनम्]

सलिलसमायामवनौ स्वेष्टाभाकर्कटाल्लिखेद् वृत्तम् ।
[याम्योत्तररेखायामथ स्वदिशि] दिनार्धभा केन्द्रात् ॥ ५ ॥

---

Text of Ms. A :

[1] प्राग्वन्नृतलाग्रेक्यं वियुतिच्च लुजाः प्रभाहतौ भक्तः
निजदृक्ष्यषांगुलैस्स्पात्तद्धाकृतिविवरादि समग्रा ।

[2] अग्रांगुलिना चैवं । भावृत्तेदप्रभा नृतुलसंज्ञा
उदपास्ततत्रसूमस्मिन्प्रसाधयेदंगुलैर्विधियत् ।

[3] दृग्ज्पाकृतिर्विधिशोध्पावग्राछह्वोः कृती पृथभूली
अद्यमुवयोसुसूत्रद्विगुणं कोटिर्भुजस्पान्पत् ।

[4] उदयास्तसूत्रमग्रा ⁻ जकोटी रविगुणानि हृतानि
अंगुलायौ वा श्रूत्पा हतानि विभभौत्त्विभगुणेन ।

[5] सलिलसमायामवनौ स्वेष्टाभा कर्कैठा लिश्चाहु दिनार्दभा केन्द्रात् ।

Ms. B : 1 c निजदृन्ज्पषां° 3 d °भुंजस्पात्पत् ॥ 5 b कर्कैठालिश्चाहु

तद्व्यत्ययाद्भुजाभ्यां मध्यच्छायाग्रबिन्दुना मत्स्यौ ।
तद्याम्यसौम्यगोले तन्मुखपुच्छावगाहिसूत्रयुगम् ॥ ६ ॥
बद्ध्वा तत्सम्पाते कर्कटकं वा निधाय वक्त्रेण ।
बिन्दुत्रयावगाहिच्छायावृत्तं लिखेत् स्पष्टम् ॥ ७ ॥
परिधिं न ज[हा]त्याभा[1] स्वकुलस्थितिमिव कुलोद्गता नारी ।
शेषैर्बिन्दुभिरेवं शङ्कुभ्रमवृत्तमालेख्यम् ॥ ८ ॥

[अत्र स्पष्टीकरणम्]

गोले सौम्येऽपि यदा याम्यो बाहुस्तदोत्तरभुजाभ्याम् ।
सौम्याभया च वृत्तं छायायाः शेषबिन्दुभिः शङ्कोः ॥ ९ ॥
याम्या चेद्द्युदलाभा तदग्रविपरीतदिग्भुजाग्रैस्तु ।
छायावृत्तं शेषैः शङ्कोर्भ्रममण्डलं विलिखेत् ॥ १० ॥
दक्षिणगोले सौम्यच्छायाग्रोत्तरभुजाग्रकैर्वृत्तम् ।
छायाभ्रमस्य शेषैर्भ्रमवृत्तं परिलिखेच्छङ्कोः ॥ ११ ॥

---

Text of Ms. A :

[6] तद्वत्पायाभुजाम्पां सौप्पछायाग्रछिंदुना मत्स्पौ ।
तद्यायासौप्पगोले तन्मुखयुछावगाहि सूत्रयुगं
[7] वद्ध्वा तत्संयाते कर्कटकं या निधाय वक्त्रेण
लिदुंत्रयायगाहि छायावृत्ते लिखेत्रसा
[8] यरिधिर्नजत्पाभा स्वकुलस्तितपिव कुलोद्गता नारी
शेषेर्विन्दुभिरेवं शंकुभ्रमवृत्तया लेख्पम्
[9] गौले सौम्पेपि पदा याम्पौ वाहुस्तदौत्तरभुजाम्पां
सौम्पालयाववृत्तछायायाशेषविंदुभिशंको:
[10] याम्पा चे ‾ द्युदलाभा उदग्रविपरीतदिग्भज्ञाग्रैः तु
छायावृत्तं शेषैः शंकोभ्रममण्डलं विलेखेत्
[11] दक्षिणगोले सौभ्पाछायाग्रोत्तरभुजाग्रकैर्वृत्तं
छायाभ्रमोवशेषेर्भ्रमवृत्तं परिलेखेछंको:

Ms. B : 7 c लिदुंत्रया° 9 b बाहु°

---

1. त्यजत्याभा is also possible.

[दिग्विशेषे भाप्रदर्शनम्]

**दृश्यन्ते यत्राभाभ्रममण्डलपरिधिना दिशालेखाः ।**
**तच्छङ्क्वन्तरमाभाः प्राच्यपराऽर्के समवलयगे ॥ १२ ॥**
**कोणगते कोणाभा याम्योत्तरवृत्तगे दिनार्धाभा ।**

[छायाऽभावस्थितयः]

**जूकाद्येऽर्को न विशेत् समवलयमथोत्तरे खाक्षे ॥ १३ ॥**
**अध्यर्धगृहगुणाच्चेद्याम्याग्रा समधिका विदिशि नोऽर्कः ।**
**दिनदलदृग्ज्या त्रिज्या सौम्ये दिनदलभानौ नवति च खाक्षे ॥ १४ ॥**

[शङ्कु-छायाग्रयोर्भ्रमणम्]

**दिङ्मध्ये छायाग्रं निधाय शङ्कोर्दिनेशवद्भ्रमणम् ।**
**केन्द्रस्थितस्य शङ्कोः छायाग्रं भ्रमति विपरीतमिनात् ॥ १५ ॥**

[गृहपटलं विदार्य, तैले दर्पणे जले वा रविदर्शनम्]

**गृहमध्यगपरिलेखात् कर्णस्थित्या विदार्य गृहपटलम् ।**
**दिग्योगस्थितदृष्टिः पश्यति सूर्यं ग्रहं वेष्टम् ॥ १६ ॥**

---

Text of Ms. A :

[12] दृशन्ते यत्राभभ्रममण्डलपरिधिना दिशालेखाः
तछंक्वंतरमाभाः प्राच्पुपरार्के समवलयःगे

[13] कोरागते कोणाभा याम्पोत्तरवृत्तग दिनावाभा
जूकोत्पर्को न विशेत्समवलयमथोत्तरे खाक्षो

[14] ध्पवगृहगुणाच्चेद्याप्पाग्रा समधिना विदिशिनोर्कः
दिनदलदृग्ज्पा त्रिज्पा सौम्पे दिनदलूभानौ भवति च खाक्षे

[15] दिग्पे छायाग्रं निधाय शंकोदिनशचद्भ्रमणम्
केंद्रस्तितस्प शंको छाफाग्रं भ्रमति वियरीतमिनात्

[16] गृहमध्पगपरिलेखा कर्णखित्पा विदाय गृहयटलं
दिग्पोगस्तितदृष्टिः यश्पति सूर्यं गूहं वेष्टम् ।

Ms. B : 12 a दृशत्ते 13 a कोणगते 15 d छायाग्रं 16 d गूहं

**तैलेऽथ दर्पणे वा जलेऽथवा शङ्कुमार्गविन्यस्ते ।**
**शङ्क्वग्रस्थितदृष्टिर्दिनमपि पश्येद् भ्रमन्तमिनम् ॥ १७ ॥**
**केन्द्रगवंशाग्रदृशा विलोकयेच्छङ्कुमार्गगं द्युचरम् ।**
**शङ्कुच्छिद्रपथा वा पश्यति तद्विद्धमिव सूर्यम् ॥ १८ ॥**

[ग्रहभानां दर्शनम्]

**ग्रहभानामप्येवं निजस्फुटेनापमेन संसाध्यम् ।**
**दर्शनमपि तैलादौ व्याधागस्त्यर्षिसंघस्य ॥ १९ ॥**

[पलभा-पलकर्ण-संस्थितिः]

**दद्याद् भुजवदिनाग्रां तदग्रयोस्तूदयास्तमयसूत्रम् ।**
**तच्छायावृत्तान्तरमक्षच्छायाङ्गुलानि स्युः ॥ २० ॥**
**तच्छङ्कुमस्तकान्तरमक्षश्रवणो**

[छायावृत्तपरिलेखः]

**ऽथवा न्यसेत्केन्द्रम् ।**
**यत्स्यात्तदिष्टकेन्द्रं तस्माद्वृत्तं लिखेद् विमलम् ॥ २१ ॥**

---

Text of Ms. A :

[17] तैलेथ दर्पणे ज जलेथवा शंकुमार्गविन्पस्ते
शंक्वग्रस्तितदृष्टिदिनमपि यश्पे भ्रममन्तमिनम्
[18] कॆंद्रगवम्सागदृशा विलोकयेछंकुमार्गगं ह्यपरमा
शंकुछितृ । प्रवर्यिश्पति तद्विद्धमिव सूर्यम् ।
[19] ग्रहभानामप्येचं निजस्फुटेनायमेन संसाध्पम्
दर्शनमपि शैलादी व्पघागख्र्पर्षिसंघस्प
[20] दद्याभुजवदिताग्रात्तदग्रयौस्तुदयास्तनयसूत्रम् ।
तछायावृत्तान्तरयक्षछायांगुलानि स्पुः ।
[21] तछंकुमस्तकांतरमक्षद्रवणोक्षभान्पसत्कॆंद्रम्
यस्पांत्तदक्षेकॆंद्रं तस्माद्वृत्तं लिखेद्विफलम् ।

**Ms. B :** 20 c °वृत्तान्तर°

**सिद्धांशं घटिकाङ्कं खटिकालेखाश्च केन्द्रगाः कार्याः ।**
**[अथ शङ्कुभ्रमवृत्तं] तद्वद्भाभ्रमणमपि लेख्यम् ॥ २२ ॥**
**यस्माद् विमले वृत्ते शङ्कुच्छायाभ्रमौ स्फुटौ भवतः ।**
**तात्कालिकाच्च सूर्यात् क्रान्त्याद्यं साधितं स्पष्टम् ॥ २३ ॥**

[वेधाद् ग्रहभगणज्ञानम्]

**साध्या यत्नैर्द्युचरा द्वितीयदिवसे च तद्विशेषकलाः ।**
**युगरविदिवसाभ्यस्ताः खखषड्घनभाजिता युगे भगणाः ॥ २४ ॥**

[वेधाद् ग्रहाद्यानयनम्]

**रविभूसङ्गादर्कों विधुरविसङ्गाद्विधुर्विधुखगानाम् ।**
**योगात्समस्तखचरा ग्रहभयुतेः क्षेपकध्रुवकाः ॥ २५ ॥**

[ग्रहोच्चपातक्षेपभगणपठने हेतुः]

**स्पष्टगतिर्द्युचराणां ग्रहोच्चपातैर्विना न सम्यगतः ।**
**क्षेपाः पठितास्तेषां स्वायुषि भगणाः कृता धात्रा ॥ २६ ॥**

**छायापरिलेखविधिश्चतुर्दशः ।**

---

Text of Ms. A :

[22] सिद्धांशं घटिकांकं खटिकालेखाश्च केंद्रगाः कार्याः
तद्वद्वाभ्रमणमविसख्पम् ।
[23] यस्माद्विमले वृत्ते शंकुछायाभ्रमौ स्फुटौ भ्रमतः
तत्कालिकाश्च सूर्यात्क्रान्त्पाद्यं साघितं स्पष्टम् ।
[24] साध्पा यत्नैर्द्युचरा द्वितीयदियस व तद्विशषकलाः
युगरविदिवसाभ्पस्तः स्वस्वषड्वनभाजिता युगे भगणाः
[25] रविभूमङ्गरविर्को विधुरविसंगाद्विधुर्बिधुखगानाम् ।
योगात्संमस्तस्ववरा ग्रहभयुतिः क्षषकध्रुवकाः
[26] स्पष्टगतिर्द्युचराणां ग्रहोश्चयातैर्विना न सम्पगतः
कार्यविसिताः त्वेषां स्वायुषि भगणाः कृता धात्रा ।

छापायरिलेखविधिश्चातुर्दशः ॥ ॥

Ms. B : 26 b °च्चपातैर्विना 26 c तेषां Col. °परिलेख°

# 15. स्फुटः प्रश्नाध्यायः

[उपोद्घातः]

त्रिप्रश्नप्रश्नसंख्यां कथमपि गणकैः शक्यते नावगन्तुं
भानाडीज्याविधीनामत इह लघुकं स्पष्टशब्दार्थयुक्तम् ।
प्रश्नाध्यायं विधास्ये नृपसदसि समाकर्ण्य यद् गोलबाह्याः
म्लानिं यान्त्य[प्र]बोधा मतिमलपटलोद्दोलनेन प्रचण्डम् ॥ १ ॥

[प्रश्नाः]

भाप्रवेशनविनिर्गमनाद् यो भात्रयेण ककुभः कथयेद् वा ।
भान्वपक्रमपलैश्च विना यो भाभ्रमं प्रकथयेद् गणकः सः ॥ २ ॥

वेत्ति दिशोऽपमभा[ग्र]पलैर्यो वेत्ति द्युतिभ्रमतो द्युदलाभा ।
मध्यदिनद्युतितोऽर्कमवैत्य स्वाक्षजभां कुरुते गणकः सः ॥ ३ ॥

वीक्ष्य रवेरुदयं रविविद् यो यष्टिविधेर्निखिलोर्ध्वमितिं वा ।
वेत्ति पलश्रवणं [पल]भामप्यक्षगुणादपि भाविधिवित् सः ॥ ४ ॥

---

Text of Ms. A :

[1] त्रिप्रश्नप्रश्नरांख्या कथमपि गणकैः शक्यते नावगंतुम् ।
मानाडयज्पाविधीनामत इह लघुकं स्पष्टशब्दार्थमुच्पेः
प्रश्नाध्पायं विधास्पे नृपसदसि समाकण्य यद्गोलवाह्याः
म्लानि यान्त्पवोधामतिमलयटलोर्दूलनैक प्रचंधम्

[2] भाप्रवेशनविधिर्गमनाद्यो भात्रयेण ककुभः कथयेद्वा
भान्पयक्रमयलैः च विना यो भाभ्रमं प्रकथयेद् गणकस्स

[3] वेति दिशो यमभा यलैर्यद्वेत्ति दिद्युति उमगो गुणादपि भा
मध्पदिनद्युतिमर्कमवेत्प स्वाक्षजभां कुरुते गणकस्सः

[4] वीक्ष्प रवोरुदयं रविविद्यो यष्टिविधिर्निखिलोर्ध्वमिति वं
वेत्ति यललश्रवणं भा मण्यगुणादयि भाविविवित्सा

Ms. B : 1 d यान्न्यबोधा°, °मलपटलो° 4 b °मिति न

विषुवद्द्युतिविस्त्वनेकधा लम्बज्याक्षगुणौ प्रसाधयेत् ।
द्यु[द]लद्युतिसूर्यविच्च यः स्वाक्षांशान् कथ[ये]त् स तन्त्रवित् ॥ ५ ॥

द्यु[ज्या]पमज्याचरमौर्विकाग्राकुज्यादिकाभ्यो बहुधा मिथस्ताः ।
करोति मध्याह्नतमारिजाभां बहुप्रकारं गणकाग्रणीस्सः ॥ ६ ॥

समयाम्योत्तरोद्भवाभीष्टस्वविदिङ्नरांश्च यो वेत्ति ।
एकप्रकारजानिह मद्विहितादन्यतस्स गणकोऽस्ति ॥ ७ ॥

इष्टभां च सममण्डलप्रभां कोणभां च बहुधा करोति यः ।
ताभ्य एव बहुधाऽर्कमानयेत् कालमिष्टमथवा स तन्त्रवित् ॥ ८ ॥

चरखण्डपलांशविद्रविं कुर्यादिष्टचरार्धतोऽक्षभाम् ।
स्वपलद्युतितश्चरार्धकं त्रिप्रश्नोक्तमवैति स स्फुटम् ॥ ९ ॥

---

Text of Ms. A :

[5] विषुवद्द्युतिविस्त्वनेकधा लम्छज्पाक्षगुणौ प्रसाधयेद्
द्युल । द्युतिसूर्यविध्पयः । स्वाक्षांसान्कथत्स तंत्रवित्

[6] द्युसमृज्या चरमौर्विकाग्रा कुज्पादिकायो वहुधा मिथस्ताः
करोति मध्याह्नतमादाभा वहुप्रकारं गणकाग्रणीस्मः ।

[7] समयाम्पांतुरभ्पुजाभीष्टस्थविदिङ्नराश्च यो वेत्ति ।
पकप्रकारजानिह मद्विहितादन्पतस्म गणकोमे ॥

[8] इष्टभां च सममण्डलभां च कोणभां व वहुधा करोति यः
ताल्प पच वहुधार्कमानपेत्कालमिष्टमथवा स तंत्रवित् ।

[9] चरखण्डयलांशविद्रविं कुर्यादिष्ठचरावतौक्षभम् ।
स्वयलद्युतितच्चरार्धकं त्रिप्रस्तोक्रमवति स स्फुटाम् ।

Ms. B : 7 a °तुरभ्फजा° d °प्रस्तोक्त°

इनशङ्कुमध्यलम्बकजीवाज्ञो यः करोति रविलग्नम् ।
अस्मत्कृततन्त्रविधे[रन्यतो] गणकाग्रणीः स इह ॥ १० ॥

राशिकालविरहेण वेत्ति यो लग्नतिग्मकरमध्यनाडिकाः ।
उन्नतं नतमहर्दले कुजान्नुद्युतेर्दिनपतिं [स] तन्त्रवित् ॥ ११ ॥

बाहुकोटिदिवसार्धभाङ्गुलैरिष्टभालिखितमण्डले पुमान् ।
शङ्कुभाभ्रममवैत्यहर्घटीस्तत्प्रभाञ्च गणकोऽस्तधीमलः ॥ १२ ॥

मन्दिरस्य पटलं विदार्य यस्तद्गतं दिनकरं प्रदर्शयेत् ।
तैलदर्पणजलादिगं तथा वंशकाग्रनिहितं स तन्त्रवित् ॥ १३ ॥

मिथुनभान्तमुपागततिग्मगौ शरकृति[२५]र्घटिकाः क्षणदा [यदा] ।
पलमितिं गद तत्र सुमित्र भो यदि वटेश्वरतन्त्रकृतश्रमः ॥ १४ ॥

घटिकाद्वितयं क्रियोदयो याते प्रान्तमहर्पतौ नराः ।
जितुमस्य वदन्ति वासरं यत् तद् ब्रूहि पलांशकानपि ॥ १५ ॥

---

Text of Ms. A :

[10] इनशंकुमध्पलम्छकजीवाज्ञो यः करोति रविलग्नम् ।
अस्पकृततत्नविधेद्गणकाग्रणीस्म इह ।

[11] राशिलग्नविरहेण वेत्ति यो लग्नतिग्मकरमध्पनाडिका: ।
उन्नतं नतमहर्दले कुजान्नुद्युतेर्दिनयतिं तन्त्रवित् ।

[12] राहुकोटिदिवसावभांगुलैः इष्टभालिखितमण्डले युमान् ।
शंकुभाभ्रममेवैत्पहृद्योटीस्ततप्रभाञ्च गणकोस्तधीमलः ।

[13] मंदिरस्प यटलं विवार्य यस्तद्गतं दिनकरं प्रदर्शयेत् ।
तैलदर्पणजलादिगां ताथा वंशकाग्रनिहितं सा तन्त्रवित् ।

[14] मिथुनभान्नमुपागततिग्मरवौ शरकृतिः घटिकाः । क्षणदा य
यलमिति गद तंत्र सुयित्र यो यदि विवित्रसुतंत्रकृतश्रमः ।

[15] घटिकाद्वितयं क्रियादयौ याते प्रांतमहर्यतौ शराः
जितमस्प वदन्ति वासरं यत्तद्व्रहि यलांशकानयि

नवा[९]भाङ्गुलानि द्युखण्डे खरांशोः पलांशा नखा [२०] यत्र तत्रास्ति मित्र !
घनध्वान्तविध्वंसकल्पः स्फुरत्तिग्मतेजोनिधिः तत्र कीदृग् दलेऽह्नः ॥ १६ ॥

तुलार्धमागते रवौ दशा[१०]ङ्गुला दिनार्धभा ।
कियत् सुतूर्णमत्र मे पलप्रमाणमुच्यताम् ॥ १७ ॥

रसवर्ग[३६]मिता विषयेऽक्षलवा मिथुनान्तगते नलिनीसुहृदि ।
दिवसस्य घटीद्वितये च गते वद तूर्णमशी[त]गुभाप्रमितिम् ॥ १८ ॥

तुलाल्प्यंशप्राप्तोऽहिमकिरणमालार्चिततनुः
हुताशाशासंस्थो विषय उदयं यत्र कुरुते ।
कियानक्षस्तस्मिन् यदि गणितगोलौ गुरुगृहे
त्वयाऽधीतौ सम्यक् प्रथय मम तूर्णं वदत भो ॥ १९ ॥

षट्कृतिः [३६] पललवा जिनांशका [२४°] यत्र भास्वदुदयाग्रकोत्तरा ।
तत्र भुक्तमहिमांशुमालिना ब्रूहि धिष्ण्यवलयस्य किं दिने ॥ २० ॥

---

Text of Ms. A :

[16] नवालांगुलानि द्युतखण्डे खरांशोः यलाभा नखा यत्र तत्रास्ति मित्र
घनध्वांतविध्वंसकल्पः स्फुरत्तिग्मतेजोनिधिः तत्र कीदृग्दलौह्नः

[17] तुलाछमागते रवौ दशांगुला दिनाछमा
कियत्सुतूर्णमत्र मे यलप्रमाणमुच्यताम् ।

[18] रसवर्ममिता विषयेच्चलबा मिथुनान्तगते नलिनीसुहृदि
दिवसस्प घटीद्वितये च गते वद तूर्णमशीगुभाप्रमितिम्

[19] तुलाल्पंशं प्राप्तोहिमकिरणमालार्चिततनु
हुताशशासंस्थो विषय तदयं यत्र कुरुते
किपलक्षस्तस्मिन्पदि गणितगोलौ गुरुगृहे
त्वयाधीतौ सम्पत्कथय मम तूर्ण वदत भा

[20] षट्कतिः यालवा जिनांशका पत्र भास्वदुदपाग्रकोत्तरा
तत्र भुक्तमहिमांशामालिना ब्रूहि धिष्ण्यवलयस्प कि दिने ।

Ms. B : 18 a विषयेन्चलवा 19 a °मालार्चितनु 20 b °कोत्तरा

परमोच्चगतेंऽशुमालिनि यत्राक्षो वियदग्नयों[३०]ऽशकाः ।
वद तत्र हविर्भुजो दिशि भा पट्टे कियती भुनक्त्यलम् ॥ २१ ॥

त्रिघन[२७]प्रमिताः पलांशका नलिनीबंधुरलित्रिभागगः ।
हुतभुग्दिशि रक्षसां तथा कियतीं [ब्रू]हि गतः करोति भाम् ॥ २२ ॥

स्मररिपुदिशं याते भानौ प्रभा नृप[१६]सम्मिता
भुजमिति[रिना] त्र्यंशोपेता [१२⅓] नता घटिकाश्च षट् [६] ।
दहनकिरणं यः साक्षांशान् करोत्यचिरादलं
जगति गणितं गोलं स्पष्टं स वेत्ति सुनिर्मलम् ॥ २३ ॥

हुतवहककुभं गते तमारौ नतघटिकाश्च षड[६]ष्टि[१६]सम्मिता भा ।
पलमितिमहिमद्युतिप्रबाहुं कथयति गोलदृशाऽस्तधीमलोऽसौ ॥ २४ ॥

---

Text of Ms. A :

[21] यरमोच्चमुयागतौशुमालिन्पत्राक्षो वियदग्रयांशकाः
वद तत्र हविर्भुजो दिशि भा पत्र कियती युनक्त्यलम्

[22] त्रिघनप्रपिताः यलांशका नलिनीछंधुरनित्रिभागगः
कुतभुग्दिशि रक्षसां तथा किपतीं ह्रि गतः करोति तान् ।

[23] स्मररिपुदिशं याते भानौ प्रभा वृयमप्सिता ।
भुजमिति त्र्यंशौयेता नता घटिकाश्च षट्
दहूनकिरणं यः स्वाक्षांशात्करोति अविरादलं
जगति गणितं गोलं स्पष्टं स वेत्ति सुनिर्मलम् ।

[24] हुतवहककुभं गतो तमोरौ नतघटिकाश्च षडष्टिसम्मिता भा
यलमितिमहिमद्युतिप्रछलं कथयति गौलदृशास्तघीमलौसौ ।

Ms. B :　　22 b °धुरलित्रिभागगः　　24 d °धीमलोसौ ॥

मेषान्ते स्थाणुदिक्स्थोऽभ्युदयति हरिजे कथ्यतामक्षमानं
वीणाभृत्प्रान्तगो वा द्रुतकनकनिभो वा वृषान्ते विवेच्यम् ।
वह्न्याशायां तुलान्ते क्षितिजवलयगः कीदृशेऽक्षेऽभ्युदेति
चापान्ते वृश्चिकान्ते हरितहरिरथो ब्रूहि गोलोपपत्त्या ॥ २५ ॥

हरिजवलये वीक्ष्याभ्यस्तं भवाम्बुधिसम्प्लवं
कनककलशाकारं बिम्बं रवेर्ध्रुवतारकम् ।
कथयति ध्वान्ताराति युगस्य च यद्गतं
पटुतरमतेः पादौ तस्य प्रणौमि समाहितः ॥ २६ ॥

द्वादशा[१२]ङ्गुलमिते भुजकोटी [अग्निगे दिनकरे] पलभागाः ।
यत्र सप्तयमला [२७] वद तस्मिंस्तूर्णमुष्णकिरणं यदि वेत्सि ॥ २७ ॥

षट्कृतिः [३६] पललवाः समवृत्ते तिग्मगोर्विषयवर्ग[२५]मिता भा ।
यत्र यत्र नलिनीवनबन्धुं ब्रूहि वेत्सि यदि तन्त्रपयोधिम् ॥ २८ ॥

---

Text of Ms. A :

[25] मेषेन्ते स्पाणुदित्स्थोभ्पुदयति हरि । जे क्वाद्यत्तामक्षयानं
वीणानृत्प्रान्तगो वा द्रुतकनकनिभौ वा वृषान्ते विवकाम् ।
वह्न्याशायान्तुलान्ते क्षितिजलवलयग: कीदृशेक्षेभ्पुदेति
वायान्त वृश्चिकान्ते हरितहरिररप्पो ब्रूहि गोलोययत्त्पा

[26] हरिजवलये वीक्ष्याभ्पन्तं भवांवुधिसंप्लवं
कनककलशाकारं छिचं रवेर्ध्रुवकारकम् ।
कथयत्ति ध्वान्ताराति युगास्प च यद्गतं
वटुतरमते: यादौ तस्प प्रणौरम समाहितः ।

[27] द्वादशगुलयिते भुजकोटी रक्षमं यलभाया:
पत्र सप्तियमला वद्व तस्मिस्तूर्णमुष्णकिरणं यदि वेत्सि

[28] षट्कृतिः यललवास्समवृत्ते तिग्मगोविषमवर्गमिता भा
यत्र तत्र तलिनीवनछंधु ब्रूहि वेत्सि पदि तत्रययोधिम् ।

Ms. B : 25 b हुतकनक° 28 b तिग्मगोर्विषम°

खाभ्रवेदनयना [२४००] नतासवः तिग्मगौ च सममण्डलस्थिते ।
भाङ्गुलानि नव [९] यत्र त[त्र] मे प्रोच्यतां पलदिवाकरौ क्रमात् ॥ २९ ॥

वल्लकीभृदवसानमागतः कुङ्कुमारुणरुचिर्गभस्तिमान् ।
नास्तमेति पलशिञ्जिनीं जनाः कीर्तयन्ति कियतीं वदाचिरात् ॥ ३० ॥

यत्र वेददहनाः [३४] पलांशकाः तिग्मगौ च मिथुनान्तसंस्थिते ।
वह्निपूर्वदिशि मध्यगे रवौ तत्र शङ्कुमितिमुच्यतां बुधाः ॥ ३१ ॥

यत्र शून्यतुरगाः [७०] पलांशकाः क्वोदयं व्रजति तत्र भानुमान् ।
केन वाऽस्तमुपयात्यनेहसा कीदृशश्च सविता प्रचिन्त्यताम् ॥ ३२ ॥

सकृदुद्गत एव भानुमान् दृश्योऽह्नां सदलं शतं [१५०] यदा ।
कियती पलशिञ्जिनी तदा किं भुक्तं रविणा वदाशु नः ॥ ३३ ॥

क्रान्त्यक्षभागैः कुरुते विना यो हिमाहिमांशोर्ग्रहणप्रभेदान् ।
सिद्धान्तमस्मद्विहितं विहाय पादौ प्रणौम्यस्य सुचारुबुद्धेः ॥ ३४ ॥

---

Text of Ms. A :

[29] स्वाभ्रवेदलयला तानसुवस्तिग्मव समण्डलस्थिते
भांगुलानि नव यत्र त मे प्रांच्पतां पलदिवाकरौ क्रमात् ।

[30] बल्लकीभृदवसानमागतः कुंकुमारुणरुचिर्गभस्तिमात्
नास्तमेति यलशिञ्जिनीं जनाः कीर्तपन्ति कियतीं वदाविरात् ।

[31] यत्र वेददह्रनाः यलांशकास्तिग्मगौ च मिथुनान्तसंस्थिते
वह्निपूर्वदिशि मध्यगे रवौ तत्र शंकुमितिमुच्पतां वुधाः

[32] पत्र शुन्पतुरगाः यलांशका क्वोदयं व्रजति तत्र भानुमान्
केन वास्तमुयायात्पनेहसा कीदृशष्व सविता घविन्त्पताम् ।

[33] सकृदुद्गत पव भानुमां दृश्पोह्नां सदलं शतं पदा
कियतीं पलशिञ्जिनीं तदा किं भुक्त रविणा वदाशु नः ।

[34] क्रांत्पक्षभागैः कुरुते विन यो हिमादिमांछोर्ग्रहणेप्रभेद
सिद्धान्तमस्मद्विहितं विहाप यादौ प्रणौम्पस्प सुचारुवुद्धेः

Ms. B :　31 d बुधाः

करणवासरधिष्ण्यतिथीः क्रमात् द्युतिमवेक्ष्य दिनाधिपतेस्तु यः ।
गणयतीह शशाङ्कदिवाकरौ प्रततसद्यशस्वेन स उच्चकैः ।। ३५ ।।
अवमकाधिकभूमिसुतादिकाः कुमुदिनीनलिनीसुहृदौ विना ।। ३६ ।।

स्फुटः प्रश्नाध्यायः पञ्चदशमः ।

इति श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्वरविरचिते स्वनामसंज्ञिते स्फुटसिद्धान्ते भट्टगोविन्दावतारिते त्रिप्रश्नाधिकारस्तृतीयः ।। ३ ।।

---

Text of Ms. A :

[35] करणवासःघिष्ण्पतिथीः कमात् । द्युतिमवेक्ष्प दिनाधियते तु यः
गणयतीह शशांककरामल प्रततसद्यशसेन स उश्वकैः

[36] अवमकाधिकभूमिसुतादिकाः कुमुदिनीतनिनीसुहृदौ विना

स्फुटः प्रश्नाध्यायः पंचदशमः ।।

श्रीमदानन्पपुरायभट्टमहदत्तसुतवठोश्चरविरचिते स्वनामसंज्ञिते स्फुवसिद्धांन्ते मट्टगोविंदावतारिते त्रिप्रश्नाध्पापस्तृतीयः ।। ।।

Ms. B : 35 d उश्चकैः

# IV. चन्द्रग्रहणाधिकारः

[उपोद्घातः]

प्रत्ययो जगति सर्वजनीनः शीतगूष्णकरयोर्ग्रहयोः स्यात् ।
वक्ष्यतः स्फुटमहं शिशिरांशोः प्रग्रहाद्यखिलमेव समासात् ।। १ ।।

[ग्रहाणां श्रुत्यानयनम्]

कक्ष्याऽयुत[१००००]घ्ना रदधीद्विकाङ्गः[६२८३२]विभाजिता स्युः श्रुतियोजनानि ।
व्योम्नोऽथवा तत्त्वरस[६२५]घ्नवृत्ताद्भगोऽग्नि[३९२७]भक्तात् स्वक[श्रुत्यवाप्तिः] ।। २ ।।

[रविचन्द्रयोः श्रुत्यानयनम्]

खरसै[६०]र्विभजेदुडुश्रुतिं कर्णः स्यादहिमांशुमालिनः ।
अथवा दशभिः [१०] समाहतं व्यासार्धं शशलां[छ]नश्रुतिः ।। ३ ।।

इतरेतरकक्ष्यया हतौ कर्णौ वा स्वककक्ष्ययोद्धृतौ ।
दिनरात्रिपयोर्निशीथिनीदिनभर्त्रोः श्रवणौ क्रमादिह ।। ४ ।।

---

Text of Ms. A :

[1] प्रत्पयो जगति सर्वजनीरश्वीतगुष्णकरयोर्ग्रहणे स्पात् ।
वक्पतः स्फुटमहं शिशिरांशोः प्रग्राह्याघाखिलमेव समासात्

[2] कक्ष्पायुतघ्ना रदधीद्विकोगो । विभाजिताः स्फुः श्चुतियोजनानि
व्पोम्नोथवा तत्वरसघ्नवृत्ताद्भागोग्निनिघ्नस्वककक्ष्पयाप्तम् ।

[3] खरसैर्विभजेदुर्तश्रुतिं कर्णः स्पादहिमांशुमालिनः ।
अथवा दशनिस्समाहृतं प्यासार्धं शशलांनश्रुतिः

[4] इतरेतरवक्ष्पया हतौ कर्णौ वा स्वकाकक्ष्ययोद्धृतौ
दिनरात्रिययोर्निशीथिनीदिनमर्त्रोः श्रवणौ क्रमादिह ।

Ms. B : 1 d प्रग्राह्याद्या° 2 c तत्वरसघ्न°

[रविचन्द्रयोः श्रुतियोजनानि]

**इषुभुजङ्गशराङ्कशराब्धयः [४५९५८५] श्रुतिरशीतकरस्य निशापतेः ।**
**नगतुरङ्गगुणाम्बुधिवह्नयो [३४३७७] ह्यवनिखेचरयोर्विवरं च तत् ॥ ५ ॥**

[रविचन्द्रयोः स्फुटकर्णौ]

**स्वाविशेषकलिकाश्रवणघ्नं व्यासखण्डविहृतं स्फुटमाहुः ।**
**मध्यभुक्तिनिहतः श्रवणो वा स्पष्टयाऽथ विहृतो निजभुक्त्या ॥ ६ ॥**
**स्पष्टकर्ण इह सूरिभिरुक्तो ध्वान्तशत्रुरजनीकरयोर्वा ।**

[रविचन्द्रयोः बिम्बयोजनानि]

**द्वीन्दुतोयधिकृता [४४१२] रविबिम्बं व्योमवह्निदहनाः [३३०] शिशिरांशोः ॥ ७ ॥**

[भूभादैर्घ्यं तमसः मानञ्च]

**भास्करश्रुतिरिलामितिनिघ्ना भूनभानुभजिता द्युतिरुर्व्याः ।**
**सेन्दुकर्णरहिता कुमितिघ्ना भोद्धृता च तमसः खलु मानम् ॥ ८ ॥**
**वेनकर्णहृदिलार्कविशेषश्चन्द्रकर्णनिहतो विफला भूः ॥ ९ ॥**

---

Text of Ms. A :

[5] इषुलभुजंघ्नशतांकशराध्वयः श्रुतिरशीतकरस्प निशायतेः
नगतुरंगमगणाम्छुधिवह्नयो ह्यवनिखेटरपोर्विवरं च तत् ।

[6] स्वाघ्रिशेषकालिकाश्रयणघ्नं व्यासखण्डविहृतं स्फुटमाहुः
मध्यभुक्तिनिहितः श्रवणो वा स्पष्टयाथ विहृतो निजभुक्त्या

[7] स्पष्टकर्ण इह सूरिभिरुक्तो ध्वान्तोशत्रूरजनीकरयोर्व्वा
द्वीन्दुतायविकृता रविविंछं व्योमवह्निदाहनाश्चिशिरांशो

[8] भास्करश्रुतिरिलायितिनिघ्ना भूनभानुभाजिता द्युतिरुर्व्पो
स्सेंदुकर्णरहिता कुपितौघ्नो स्वोद्धृता व तमसः स्वलु मानम् ।

[9] वेनकर्णहृदिलार्कविशेषश्चंद्रकर्णनिहतो विफला भूः

**Ms. B :** 7 c °विंछं

**शशिकर्णहतोऽथवा भुवः व्यासः कुद्युतिभाजितः फलम् ।**
**अवनीयमिलाप्रमाणतः शेषं स्यात्तमसः प्रमाणकम् ॥ १० ॥**

[कलात्मकानि बिम्बानि]

**रविचन्द्रतमःप्रविस्तरास्त्रिज्याघ्ना रविचन्द्रचन्द्रजैः ।**
**विभजेत्स्फुटकर्णकैः क्रमात् तद्बिम्बानि कलागतानि [वै] ॥ ११ ॥**

**कुमिति-क्षि[ती]नविस्तरान्तरे चन्द्रार्कश्रवणोद्धृते हते ।**
**त्रि[भ]मौर्विकया फलान्तरं मानं वा तमसः कलागतम् ॥ १२ ॥**

**गतिफलं निजमध्यमभुक्तिहृत् सुर[३३]हतं स्वमृणं च सुरेषु[३३]तः ।**
**गतिवदेव मिती रविसोमयोरिह वदन्त्यथवा कलिकागते ॥ १३ ॥**

[प्रकारान्तरेण रविचन्द्रतमोबिम्बसाधनम्]

**अमरा[३३]भिहता स्फुटा गतिर्भक्ता मध्यमयाऽथवा मितिः ।**
**नख[२०]हृज्जिन[२४]हृत् स्फुटा गतिर्मनिऽज[११]हता रवेः स्फुटे ॥ १४ ॥**

---

**Text of Ms. A :**

[10] शशिकर्णहताथवालुचः । व्या ~ सः स्वद्युतिराजितः फलम् ।
अयनीयमिलाप्रमाणाः शेषं स्पात्तमसः प्रणाहृम् ।

[11] रवितंद्रतमःप्रविस्तरास्त्रिज्पाघ्ना रविचंद्रचंद्रजैः
विभजत्स्फुटकर्णकैः क्रमात् तद्विठानि कलागतानि

[12] भुक्तमितिक्षिनहिस्तरान्तरे चंद्रार्कश्रवणोद्धृत हते
चिमौषिकया फलान्तरं मानं वा तमसः कलागतम् ।

[13] गतिफलं निजमध्पमश्रुक्तिहृत् । सुरहतं स्वमृणं च सुरेषु तत्
गतिवदेव मिती रविसौमयोरिह वदन्त्पथवा कलिकागते ।

[14] अभरासिहता स्फुटा गतिभक्ता मध्पमयाथवा मितिः
नस्वहृज्जनहृचफुटा गतिर्मनिजहता रवेः स्फुटे ।

**Ms. B :** 11 b चंद्रजैः　11 d तद्विगतिकला° [may also be read as तद्विवानिकला°]
12 c चिमौषिकया　13 c रचिसौमयौ　14 a अमरा°　14 b भक्वा

दृग्[२]गुणा तिथि[१५]हृता विधोर्गतिर्भूपयोधि[४१]गुणिता त्रिरुद्र[११३]हृत्।
उष्णगोर्विवरमाप्तयोस्तमोमानमिष्टमथवा कलात्मकम् ॥ १५ ॥

तत्वानि [२५] लिप्ता विकलास्तुरङ्गा [७]
रवेर्विधोरक्षदिशो [१०५] जिनाख्याः [२४]।
त्रिज्याहतास्ता मृदुकर्णभक्ताः
फलान्तरं वा तमसः प्रमाणम् ॥ १६ ॥
निजभुक्तिफलान्तराहता भुक्त्या मध्यमया स्वया हृताः।
गतिवत् स्वमृणं फलं स्वकं तास्वेवान्तरकं तमोमितिः ॥ १७ ॥
अथवा स्फुटभुक्तिताडिता भक्ता मध्यमयाऽन्तरं तमः।

त्रिगुणः सुर[३३]ताडितोऽथवा सूर्येन्द्वोर्मृदुकर्णहृन्मिती ॥ १८ ॥

[शशिविक्षेपानयनम्]

तत्कालपातसहितात्समलिप्तचन्द्रदोर्ज्यां खभै[२७०]रभिहतां विभजेत् त्रिमौर्व्या।
सौम्यः क्रियादभिहितस्त्वितरश्च जूकाद्विक्षेपकः शिशिरगोः कलिकादिकः स्यात् ॥ १९ ॥

---

Text of Ms. A :

[15] दृगुणा तिथिहृता विधोर्गतिभूयेपाधिगुणिता त्रिरुद्रहृ
दुष्णगोर्विवरमाप्तयोस्तमोमानमिष्टमथवा कलात्मकम्
[16] तत्वानि लिप्ता विकलास्तुरंगा रविर्विधोरक्षदिशो जिनाख्पाः
त्रिज्पाततास्ता मृदुकणभक्ताः फलान्तरं वा तमसः प्रमाणम्।
[17] निजभुक्तिफलान्तराहताद्भुक्तया मध्पमया स्वया हृता
गतिवत्स्वेमृणां फलं स्वकं तास्वैवान्तरकं तमोमितिः
[18] अथवा स्फुटभुक्तिताविता भक्ता मध्पमयान्तरं तमः
त्रिगुणः सुरराविततोध्वा सूयेन्द्वोर्मृदुकर्णहृन्मिती
[19] तत्कालयातमहितात्समलिप्तवंद्रघोर्ज्पा खभैरभिहतां विभजेत्त्रिमौर्व्पा
सौम्पः क्रियाटभिहितास्त्वितरश्च जुकाद्विक्षेपकः शिशिरगोः कलिकादिकस्स्यात्।

**सपातचन्द्राद् भुजशिञ्जिनी वा**
**व्यासाङ्घ्रिभक्ताऽक्षगुणेन्दु[१३५]निघ्ना ।**
**क्षेपश्शतघ्नी[१००] त्रिनगार्क[१२७३]हृद्वा**
**कुबाण[५१]भक्ता कृत[४]सङ्गुणा वा ॥ २० ॥**

[ग्रासमानम्]

**छादकः शिशिरदीधितेस्तमो भास्करस्य हिमगुर्यतस्ततः ।**
**ध्वान्तचन्द्रमितिसंयुतेर्दलाच्छेपकेन रहिताद्विधोर्ग्रहः ॥ २१ ॥**
**ग्राह्यतस्समधिकः समस्तकः खण्ड एव लघुको मुनीरितः ।**
**मानसंयुतिदलाद्यदाधिकः क्षेपको न हि भवेद्ग्रहस्तदा ॥ २२ ॥**

[दृश्यमानम्]

**अन्तरेण तिमिरेन्दुखण्डयोः क्षेपके विरहितेऽवशेषकम् ।**
**दृश्यते नभसि शीतगोर्यदा नावशेषमखिलस्तदा ग्रहः ॥ २३ ॥**

[स्थितिविमर्दखण्डे]

**ग्राहकस्य दलमूनसंयुतं ग्राह्यमानशकलेन वर्गयेत् ।**
**क्षेपवर्गरहितात् पृथक्पदे लिप्तिकाः स्थितिविमर्दखण्डयोः ॥ २४ ॥**

---

Text of Ms. A :

[20] सयातमहितचंद्राभुजशिञ्जिनी वा व्यासहताक्षगगुणेन्दुतक्ता
क्षपेशशतघ्नी त्रिनगार्कहृद्वा कुछाणभक्त हृत्तसंगुणा वा रा

[21] छादकः शिशिरदीधितेः तयां भास्करस्प हिमगुर्यतः ततः
ध्वान्तचंद्रमितिसंयुतोग्दला क्षयेकेन रहिताद्विधोर्म्रह ।

[22] ग्राह्यतस्समधिकस्समस्तकः खलु खण्ड पव लघुको मुनीरितः
मानसंपुतिदालाप्पदौधिकाः क्षेपको त हि भवेद्गहस्तदा ।

[23] अन्तरणे तिमिरेदुंमानायाः क्षेपको विहितौवशेषकम् ।
दृश्पते नभसि शीतगोत्ततवछेषमव्रतिखिलस्तदाग्रहः ।

[24] ग्राहकस्त दलमूनसंयुतं ग्राह्यमानशकलेन वर्गयेच
क्षेयवर्गरहितान्मृषक्षदे लिप्तिकाः स्पतिविमर्दस्रण्डयोः ।

Ms. B : 20 b °नक्ता 20 c क्षपेशतघ्नी 21 d क्षेपकेन रहिताद्विधोर्म्रहः ॥
23 c °गोन्न° 23 d °तवेछे° 24 c क्षेपवर्ग°

मितियोगविशेषखण्डके ग्राह्यग्राहकयोः शरान्विते ।
रहिते च परस्पराहते मूलं वा स्थितिखण्डको [भवेत्] ॥ २५ ॥

[असकृत्कर्मणा तयोः स्थिरीकरणम्]

गत्यन्तरांशभजिते घटिकादिके ते स्थित्यर्धसङ्गुणगतेर्वियदङ्ग[६०]लब्धम् ।
प्रग्रासमुक्तिजखगेष्वृणवृद्धिसंज्ञं तत्क्षेपकात् स्थितिदलादसकृत् तु साध्ये ॥ २६ ॥
स्थित्यर्धलिप्ताभिहताः क्रमाद्या गत्यन्तरांशैः विभजेदमीषाम् ।
भुक्तीः फलं प्रग्रहमोक्षकाले क्षयस्स्वमेष्वेवमनिश्चलत्वे ॥ २७ ॥

[प्रग्रहमोक्षादिकालसाधनम्]

स्थित्यर्धनाडीवियुतः समेतः स्फुटः तिथिः प्रग्रहमोक्षकालौ ।
विमर्दखण्डं च विधेयमेवं निमीलनोन्मीलनसिद्धिहेतोः ॥ २८ ॥
पर्वणः स्थितिदलेन पुरस्तात् प्रग्रहो भवति चोपरि मोक्षः ।
प्राङ्निमीलनमथोपरि दृष्टं शीतगोरिह विमर्ददलेन ॥ २९ ॥

---

Text of Ms. A :

[25] मतयोगनिशेषस्वण्डको गाह्यग्रातकर्योः शरान्विते
रहितं च यथास्वमाहते मूलं वा स्छितिखण्डको ।

[26] मत्यंतरांशभजिते घटिकादिके ते स्थित्पवसद्गुणगते वियदंगलब्धम्
प्रग्रासमुक्तिजखगष्वृणमृद्रिसंज्ञं तक्षेयकात्स्थितिदलाद्यसकृत्वसाम्पे ।

[27] स्थित्पछलिप्ताभिहताः क्रमाद्या गत्पन्तरांशैः विभजेदमीषाम् ।
भुक्तीः फलं प्रग्रहमाक्षकाले क्षयस्वमेष्वेवमनि । श्चलवे

[28] स्वित्पवनाडीवियुतः समेतः स्फुटः तिथिः प्रग्रहमोक्षकालौ
विमर्दस्वण्डं च विधेयमेवं निमीलनोन्मीलनमिधिहेताः ।

[29] पर्वणस्स्थितिदलेन युरस्तात्प्रग्रहो भवति भुपरिमोक्षः
प्राङ्निमीलनमथोपरि दृक्तं श्रीतगोरिह विमर्ददलेन

Ms. B : 25 a गतिशेषखण्डको 25 c रहितं व 26 d तक्षेप०

**स्फुटपर्वणि मध्यमग्रहः स्थित्यर्धैक्यघटीमिता स्थितिः ।**
**निखिलस्थगितस्य नाडिका योगः स्पष्टविमर्दखण्डयोः ॥ ३० ॥**

[इष्टकाले ग्राससाधनम्]

**पर्वणस्त्वगतभोगनाडिकासङ्गुणाः स्फुटगमान्तरांशकाः ।**
**उष्णशीतकरयोर्भुजाऽग्रका स्वेष्टकालिकनिशाकृतः शरः ॥ ३१ ॥**
**कृतियोगपदं तयोः श्रुतिः छाद्यछादकस्वमानयोगतः ।**
**दलितादपनीय तां श्रुतिं ग्रासः शिष्टमभीष्टकालिकः ॥ ३२ ॥**
**ग्राह्यबिम्बयुतकर्ण[मानतः ग्राह्यग्राहकप्रमाणभेदकम् ।**
**शोधितं भवति यत्समागतं तत्स]मुज्ज्वलमुशन्ति शिष्टकम् ॥ ३३ ॥**

[निमीलनोन्मीलनकाले भुजकोटी]

**मानान्तरार्धेन समौ तु कर्णौ निमीलनोन्मीलनकालजातौ ।**
**बाहू विमर्दार्धकलासमानौ तत्कालविक्षेपसमे च कोटी ॥ ३४ ॥**

---

Text of Ms. A :

[30] स्फुटपर्वणि मध्यमग्रह: स्थित्पर्वैक्यघटीमिता स्थिति:
निखिलस्थगितस्प नाडिका योग: स्पष्टविमर्दाखण्डयो:

[31] पर्वणस्त्वगतयोपनाडिका: सङ्गमा: स्फुटगमान्तराशका:
उष्णशीतकरयोर्भुजाग्रका स्वेष्टकालिके तिशाकृत: शरः

[32] कृतं योगपदं तयो: श्रुति छाद्यछादकसमानयोगत:
दलितादमनीय तां श्रुति ग्रास: शिष्टमभीष्टकालिक:

[33] गाह्यविवपुतकर्ण [unindicated gap]
मुज्ज्पलमुशन्ति शिष्टकम् ।

[34] मानान्तरार्धेन समौ तु कर्णौ निमीलनौन्मीलनं कालं जातौ
छाहुविमदीवकलासमानौ तत्कालविक्षेयसमे च कोटी ।

Ms. B : 30 d °विमर्दखण्डयो: 33 a °बिव°

[इष्टग्रासात् कालसाधनम्]

वीष्टग्रासं मितियुतिदलं तत्कृतिः क्षेपकृत्या
हीना तस्याः पदमिह भुजो भुक्तिविश्लेषभागैः ।
भक्तो नाड्यस्तदवधिविधोः क्षेपकेनासकृत्ताः
प्राक्पश्चात्तत्स्फुटतरतिथिर्यः प्रयातः स्थिरत्वम् ।। ३५ ।।

[अक्ष-दिग्वलनसाधनम्]

प्रग्रहमध्यमग्रहणमोक्षनतासुविलोममौर्विकाः
स्वाक्षभया हताः स्वपलकर्णहृताः फलचापलिप्तिकाः ।
प्रागपरार्धयोर्भवलयस्य समुत्तरदक्षिणेन ते
भत्रितयाधिके क्रमगुणोऽभ्यधिकस्य युतस्त्रिभज्यया ।। ३६ ।।

अग्राऽक्षजीवानृतलक्षितिज्याहता नतव्यस्तगुणाः क्रमाद्वा ।
विभाजितास्तद्धृतिभत्रयज्यास्वधृत्युदग्राभिरुषन्ति दिग्ज्याः ।। ३७ ।।

---

Text of Ms. A :

[35] वीष्टग्रामम्मितियुतिदलं तत्कृतिः क्षोपकृत्पा
हीना तस्पाः यदमिह भुजो भुक्तिविश्लेषभागैः
भक्ता नाड्यस्तदवधिविधोः क्षेपकेनासकृत्ता
प्राक्पश्वात्तत्स्फुटतरतिथिर्यथाताः स्थिरत्वे ।

[36] प्रग्रहमध्यमग्रहणमोक्षणतासुविमलोमौर्विकाः
स्वक्षभया हताः स्वयलकर्णहृताः फलवायलिप्तिकाः ।
प्रागपरार्धपोर्भकवयस्प समुत्तरक्षक्षिणोन्नते
भर्त्रितयाधिके क्वमगुणोभ्पधिकस्प युतस्त्रिभज्पया

[37] अग्राक्षजीवानृतलक्षितिज्पाहृता नतव्यस्तगुणाः क्रमाद्वा
विभाज्प ताद्धृतिभत्रयज्पास्ववृत्पुदग्राभिरुषन्ति दिग्ज्पाः

Ms. B : 36 b फलवाप°

[अयन-दिग्वलनसाधनम्]

**ग्राह्यात् त्रिगेहाभ्यधिकाद् विलोमात् क्रान्तिज्यका तत्क्रमचापलिप्ताः ।**
**ग्राह्यायनांशाकलितास्त्रिगेहे युक्तस्य वा गोलवशाद्दिगस्य ॥ ३८ ॥**

[स्फुटदिग्वलनसाधनम्]

**दिग्ज्याचापक्रान्तिविक्षेपकाणां तुल्याशानां संयुतिर्विप्रयोगः ।**
**भिन्नाशानां शेषजीवा भचक्रे काष्ठाचक्रे स्वेष्टवृत्तेऽनुपातात्[1] ॥ ३९ ॥**

[अङ्गुलस्य कलामानम्]

**उन्नताः स्फुटदिनार्धभाजिता नाडिकाः फलसमन्वितास्त्रयः ।**
**अङ्गुलस्य कलिका यवोदरैरङ्गुलं च वितुषैरिहोरगैः [८] ॥ ४० ॥**

[अस्य प्रयोगः]

**विक्षेपाणां ग्राहकग्राह्यमित्योः छेदश्चेष्टग्रासकस्यापि चोक्तः ।**

---

Text of Ms. A :

[38] ग्राह्यत्त्रिगोहाभ्पधिकाद्विमलोमा क्रान्तिज्पका तत्क्रमचायलिप्ताः
ग्राह्यायनांशाकलिताः शिगते युक्तम्प वा गोलवशाद्दिशंकाः ।

[39] दिग्ज्पावायक्रान्तिवियक्षकानां तुल्पांशानां संयुतिविप्रयोगः
भिन्नांशानां शषजीवा भवक्रे काष्टावक्क्र स्वष्टवृत्तेनुयातात् ।

[40] न्नउता स्फुटदिनार्धभाजिता नाडिकाः फलसमघितास्त्रयः ।
अङ्गुलस्प कलिका षवोदरैरङ्गुलं च चितुषेरिह्रोरगैः ।

[41] चिक्षेयानां ग्राहकग्राह्यमित्पो छादश्चेष्टग्रासकपिस्प चोक्तः

Ms. B : 38 b °चापलिप्ताः　　39 d काष्टावत्क्रंस्वष्टवृत्तेनुपातात् ॥

---

1. The reading काष्ठाचक्रात्स्वेष्टवृत्तेऽनुपातात् is also correct.

[प्रग्रहस्य दिक्]

**क्षेपैर्व्यस्तैः प्रग्रहो पूर्वभागे बिम्बस्येन्दोः पश्चिमे स्यात् खरांशोः ॥ ४१ ॥**

**इति श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्वरविरचिते स्वनामसंज्ञिते स्फुटसिद्धान्ते भट्टगोविन्दावतारिते चन्द्रग्रहणाधिकारश्चतुर्थः ॥ ४ ॥**

---

**Text of Ms. A :**

क्षेयैर्व्यस्तैः प्रग्रहे पूर्वभागे विवस्वेंदोः यक्षिमस्पा खरांशोः ।

श्रीमदानंदपुरीयभट्टमहदत्तसुतवटेश्वरकिचितेस्वनामसंज्ञिते स्फुटसिद्धांते भट्टगोविंदाचतारिते चंद्रग्रहणाधिकारश्चतुर्थः ॥ ॥

**Ms. B :** 41 d विबस्येन्दोः पछिमस्पा

# V. रविग्रहणाधिकारः

## 1. लम्बनविधिः

[उपोद्घातः]

गणितगोलविदामपि विभ्रमः भृशमिनग्रहणेऽस्ति यतस्ततः ।
गणितमत्र मयोदितमुत्तमं मतिमतामतिविस्मयकारि यत् ॥ १ ॥
मत्सरिणे परतन्त्रविदे वा देयमिदं शपथैरपि नैव ।
दास्यति चेत्सुकृतायुषनाशो भक्तिमते स्वसुताय च देयम् ॥ २ ॥

[लम्बनस्य सम्भवासम्भवम्]

वित्रिभलग्नसमे दिननाथे लम्बननाश इहाभ्यधिकोने ।
तद्भवति क्षयवृद्धिविधायि स्पष्टतिथेरसकृच्च सकृद्वा ॥ ३ ॥

[नतेः सम्भवासम्भवम्]

वित्रिभक्रान्तिभवांशगणैर्यदाऽक्षो न समो हि तदाऽवनतिर्भवेत् ।

---

Text of Ms. A :

[1] गणितगोलविदामपि विभ्रम भृशमिनग्रहणेत्र यतस्ततः
कतममत्र मयोदितमुत्तंम मतिमतामतिविस्मयकारि यत् ।
[2] मत्सरिणे परतन्त्रविदे वा यदेयमिदं शपथैरपि नैव
दास्पति वेत्सुकृतायुभिनाशो भक्तिमते स्वसुताय च देयम् ।
[3] वित्रिभलग्नसमे दिननाथे लंवननाश इहाभ्पधिकेन ।
तद्भवति क्षयवृद्धिविधाधि स्पष्टतिथेरसकृच्च सकृद्वा ।
[4] त्रिभवतिनरुतांशकैर्म्मदक्षजः दिगिहा च नतोर्भवेत् ।

Ms.B: 1 c °तमुत्तमं 4 a °कैर्य्यंदक्षजः 4 b व नतोर्भेत्

[पञ्चज्यासाधनम्]

**तद्द्युगतेन[1] नरः स्वचरासुभिः स्वाक्षगुणेन निजद्युदलज्यया ॥ ४ ॥**

**तत्त्रिज्ययोर्वर्गविशेषमूलं दृक्क्षेप एवं सवितुर्नृदृग्ज्ये ।**

**मध्याह्नलग्नागतमध्यजीवा लग्नोदयाग्रा रविवद्विधेया ॥ ५ ॥**

[मध्यलग्नसाधनम्]

**भवन्ति लङ्काभ्युदयासवोऽत्र ये दिनार्धतिथ्यन्तरजा द्युखण्डयोः ।**

**क्षयस्वमर्के प्रथमद्वितीययोर्गृहाणि तावन्ति हि मध्यलग्नके ॥ ६ ॥**

**सहितरात्रिदलेन विपर्वणा विभदलेननिरक्षजभोदयैः ।**

**वियुतमाध्यदिनावधि उत्क्रमात् द्युदललग्नमुशन्त्यथवा बुधाः ॥ ७ ॥**

[मध्यज्यासाधनम्]

**तदपक्रमस्वाक्षयोर्युतिर्जूकादेर्वियुतिः क्रियादितः ।**

**विवरस्य गुणो भुजः स्मृतो मध्यज्या च तदग्रका नरः ॥ ८ ॥**

---

Text of Ms. A :

तद्दुवितं न नरः स्वचारासुभिः स्वक्तगुणेन निजद्युचरेज्पया

[5] तत्त्रिज्पयोवर्गविशेषमूलं दृक्षेय पवं सवितुर्नृदृग्ज्पा

मध्पाह्नलग्नानतमध्पजीवो लग्नोदपाग्रा रविवद्विधेघा

[6] भवन्ति लग्नाभ्पुदयासवौत्र ये दिनार्धतिथ्पतुरजा द्युखण्डयोः

क्षयस्वमर्के प्रथमद्वितायर्योर्गृहाणि तावन्ति हि मध्यलग्न

मयराह्नं वात्कृतं वा निरक्षभवनोदयैर्भवेत्

[7] सदिनरात्रिदलेन वियर्वण्प विभदलेन निरक्षभवनोदये

विहितमाद्यदिनावदुक्रमा घुदललग्नमुशन्त्पथवा वुधाः ।

[8] तदयक्रमेणाक्षयोयुतिर्जूकार्दविसुतिः क्रियादितः

विकस्प गुणो भुजाः स्भृतो मंधूज्पा व उदग्रका नरः

Ms. B : 4 c तदुवितं 6 b घुस्वण्डचो 6 c द्वितींययो 7 c क्रभाद्

---

1. The original reading seems to be तद्द्युइतेन (= तद् + द्यु + इतेन)

[दृग्गतिसाधनम्]

**दृक्क्षेपदृग्ज्याविवरैक्यराश्योर्घातात्पदं [दृग्गतिसंज्ञकं स्यात्] ॥ ९ ॥**

[मध्याह्नदृग्गतिसाधनम्]

**दृक्क्षेपमध्यगुणयोगविशेषघातान्मूलं द्युखण्डदलदृग्गतिसंज्ञकं स्यात् ।**
**तच्छङ्कुवर्गविवरात्पदमीरितं वा शङ्क्वन्तरैक्यवधमूलमुशन्ति चैतत् ॥ १० ॥**

[प्रकारान्तरेण महल्लघुदृग्गती तयोर्योगान्तरे च]

**दृग्ज्यामध्यज्यासमासोऽन्तरघ्नो युक्तः स्वल्पादृग्गतिज्याजकृत्या ।**
**तस्मान्मूलं दृग्गतिर्भूयसी तल्लब्ध्या योगो भूस्तदाप्तोऽन्तरं स्यात् ॥ ११ ॥**
**अन्तरेण सहितोनिता मही द्व्युद्धृता च महती लघीयसी ।**
**मध्यदृग्गुणकृती हृते मही वाऽन्तरेण फलयोर्यदन्तरम् ॥ १२ ॥**

[प्रकारान्तरेण लघुदृग्गतिः]

**मध्योदयज्याभिहतिं निहन्याद् दृक्क्षेपवृत्तोद्भवशङ्कुमौर्व्या ।**
**व्यासार्धवर्गेण विभाजयेद्वा यत्तत्फलं सा लघुदृग्गतिज्या ॥ १३ ॥**

---

Text of Ms. A :

[9] दृञ्क्षेमदृग्ज्पाविवरैक्यराश्पोः घातात्पदं तयोर्वा

[10] दृक्षेपमध्पगुणयोगविशेषघातान्मूलं द्युराण्डदलदृग्जतिसंज्ञिकं स्पात् ।
तछंकुवर्गविवरात्पदमीरितं वा शंक्वंतरंक्यवधमूलमुशंति चैतत् ।

[11] दृग्ज्पामध्पज्पासमासोन्तरघ्रा वुक्तः खल्पदृगतिज्पाजकृत्पा
तस्मात्मूलं दृग्गतिलूपसी तल्लघ्वा यांगो भूस्तदाप्तोन्तिरं स्पात्

[12] अन्तरण सहितानिता मही द्युद्धृता व तहाती लघीयसी
मध्पदृग्गुणकृती कृत महे वान्तरेण फलयोर्यदन्तरंम् ।

[13] मघ्पोदयज्पाभिहितं निहत्पाद् दृत्क्षेपवृत्तोद्भवाशंक्तुमोर्व्पा
व्पासार्धवर्गेण विभाजयेद्वा यत्तत्फलं सा लघुदृग्गतिज्पा ।

Ms. B : 9 c दृञ्क्षमदृग्ज्या° 11 d ल्लघ्वी °13 a निहन्या b °शंकु°

[रविमध्यलग्नयोः दृग्ज्याशङ्कुसाधनम्]

**दृक्क्षेपवर्गौ पृथगन्वितौ वा भूयाल्पभूखण्ड[क]र्वागताभ्याम् ।**
**हीने तु तच्छङ्कुकृतेः पदे स्तो दृङ्मध्यजीवे नरमौर्विके वा ॥ १४ ॥**

[लम्बनसाधनविधयः]

**दृग्गतिः पृथगिलादलाहता स्पष्टसूर्यशशिकर्णयोजनैः ।**
**भाजिता फलविशेषलिप्तिका लिप्तिकादि तिथिपर्वलम्बनम् ॥ १५ ॥**

**दृग्गतिः कृत[४]गुणाऽथवा हृता त्रिज्ययैव घटिकादिलम्बनम् ।**
**तत्तिथौ क्षयधनं यथोक्तवल्लम्बनस्फुट इहोदितोऽसकृत् ॥ १६ ॥**

**स्फुटभुक्तिविशेषसङ्गुणा तिथि[१५]निघ्नत्रिगृहज्ययोद्धृता ।**
**अथवा स्फुटदृग्गतिः फलं तिथिवत्तद्घटिकादिलम्बनम् ॥ १७ ॥**

---

Text of Ms. A :

[14] दृक्षेपवर्गौ घथगन्वितौ वा । भूपाल्पभूखण्डवर्गिताभ्पाम्
हीते नुरतछंकुकृते पद स्तो दिदृङ्मध्पजीवे नरमौर्विर्क वा

[15] दृग्गतिः पृथगिलादलाहृता स्पष्टसूर्यशशिकर्णयोजनैः
भाजिता फलविशेषलिप्तिका नाडिकादि तिथियश्वलंवनम् ।

[16] दृग्गतिः कृतगुणथवा कृता त्रिज्पयेव घटिकादिलंवनम्
तत्तिथौ क्षयघनं यथोवक्तवल्लंवनस्फुट इहोदितो मकृत ।

[17] स्फुटभुक्तिविशेषसद्गुणा तिथिनिघ्नत्रिग्रहज्पयोद्धृता ।
अथवा स्फुटदृग्गतिः फलं तिथिवत्तद्घटिकादिलंघनम्

अथवायमजीवया हृता त्रिभमौर्ण्या विहिता व दृग्गतिः[1]
हलं तिथिवत्तुद्घाटिकादि लंवनन्[2]

1. This line is repetition by oversight of 18 (a-b).
2. This line is also repetition by oversight of 17 (c-d).

Ms. B : 14 b भूपाल्प॰ 14 c हीते तुरत॰ 16 a Between कृत and गुणथवा the mss. have वल्लंवनस्फुट इहोदितो सकृद् which is repetition of the same matter in 16 d.

**परमाप[म]जीवया हृता त्रिभमौर्व्या विहृता च दृग्गतिः ।**
**स्वसुरां[३३]शसमन्वितं फलं जगुरुच्चैः स्फुटलम्बनासवः ॥ १८ ॥**

**दृक्क्षेपदृक्कर्मनराः कृत[४]घ्नास्त्रिज्योद्धृताः स्युर्घटिकादिकं यत् ।**
**कृत्योर्विशेषात्पदमाप्यते यद् वदन्ति सन्तः स्फुटलम्बनं तत् ॥ १९ ॥**

**आद्यन्तयोर्वर्गविशेषयुक्तान्मध्यान्तयोर्वर्गविशेषराशेः ।**
**मूलं भवेद्दृग्गतिसंज्ञकं वा दृक्क्षेपदृङ्मध्यगुणत्रयेषु ॥ २० ॥**

[लघुलम्बनसंज्ञकं मध्याह्नलम्बनम्]

**लघुदृग्गतितोऽपि लम्बनं साध्यं पूर्ववदल्प[के] क्षयः ।**
**द्युदले त्रिभहीनलग्नतो मध्याह्ने स्वमथाधिके ततः ॥ २१ ॥**

[पुनः लम्बनसाधनविधयः]

**जलधि[४]संगुणिताः क्षितिलिप्तिकास्त्रिभगुणेन हृताः फलनाडिकाः ।**
**लघुदिवादललम्बन[व]र्जिता महदुशन्त्यथवा स्फुटलम्बनम् ॥ २२ ॥**

---

Text of Ms. A :

[18] प्रथवायजीवपा हृता चिभमौर्व्या विहिता च दृग्गतिः
स्वसुरांशसमन्वितं फलं जगुरुश्चैः स्फुटलंछनासवः

[19] दृक्षेयदृक्कर्मनराः कृतघ्नास्तिज्योदिताः स्फुर्घटिकादिलंवनम्
कृत्यौर्विशेयान्पदमाधयौर्यद्वदन्तिसन्तः स्फटलम्वनं तत् ।

[20] आद्यन्तयोर्वर्गविशेषयुक्तात्मध्पान्तयोर्वर्मविशेषराशेः
मूलं भवेल्लंछनसंज्ञकं वा दृक्षेयदृङ्मध्पागुणोक्यपवम् ।

[21] लधुदृग्गत्तितोयि लम्छनं साध्पं मूर्ववदल्पक्षपः
द्युदले त्रिभहीनलग्नतो मध्पाह्ने स्वमथाधिकोनके ।

[22] जलधिसंगुणिताः क्षितिलिप्तकास्त्रिभगुणेन कृताः फलनादिकाः
लघुदिनावनलंवनर्जिता महदुशन्त्पथवा स्फुटलंवनम् ।

**Ms. B :** 18 b विभमौर्व्या 22 c °बनलंबन°

अवनिखण्डविशेषकृता[४]हतिः त्रिगुणहृद्घटिकाः स्वमृणीकृताः ।
क्षितिघटीष्वथवा महदल्पके द्वि[२]भजिते स्फुटमध्यमलम्बने ।। २३ ।।

दृक्क्षेपशङ्कू पृथगल्पभूयोभूखण्डहीनौ कृतसङ्गुणौ च ।
त्रिज्योद्धृतौ लब्धघटीभिरूनौ नाडीगतौ ताविह लम्बने च ।। २४ ।।

फलान्तरं वा लघुलम्बनाढ्यं
महन्महद्धीनमथाल्पकं वा ।
फलैक्यहीनेऽपि विधेयमेवं

दृक्क्षेपनाडीनरवर्गनिघ्नौ ।। २५ ।।
हृतौ स्वनाडीनरशङ्कुवर्गौ दृक्क्षेपनाडीनरवर्गहीनौ ।
अवाप्तकाभ्यामथवा पदे ये स्फुटाल्पके लम्बनके प्रदिष्टे ।। २६ ।।

[सकृद्विधिना लम्बनसाधनम्]

हन्याद् दृङ्नरदृग्गती परमया क्रान्त्याऽग्रबाहू हरेद्
दृक्क्षेपस्य नरेण कोटिरहिता त्रिज्याऽह्नि युक्ता निशि ।

---

Text of Ms. A :

[23] अवनिखण्डविशेषकृताहतिः त्रिगुणहृद्टिकाः स्वगुणंवनाः
क्षितिघटीष्वथवा महदल्पके द्विभजिते स्फुटमध्पमध्पलम्छने ।

[24] दृक्षेम्छनीयशंकु पृथगल्पभूपो घूखण्डहीनौ कृतसङ्गुणौ च
त्रिज्पोद्धृतौ लब्धघटीभिऊनौ नाडीगतौ ताविह लंछने च ।

[25] फलान्तरं वा लघुलम्छनौनं महन्मद्धीनमथाला वा
फलैकोहीनेपि चिधेयमेवं दृक्षेपनाडीनरदस्रनिघ्नी

[26] हृतौ स्वनाडीनरशंकुवर्गप्यिवाप्तकाभ्पानथवा फलेप्तः
दृक्षेयनाहीनरवर्गिते ते स्फुटाल्पके लम्छमके प्रदिष्टे ।

[27] हन्पाद् दृङ्नरदृग्गती यरमया क्रान्प्राग्रवाहू हरे
दृक्षेपम्प नरणे कोटिरहिता त्रिज्याह्नि षुक्ता निक्षि

Ms B : 23 b हृद्घटिकाः 23 c °घटीष्वथवा° 24 c लब्ध°

**तद्दोर्वर्गसमासमूलभजितो दृक्क्षेपनादोर्गुणो**
**लब्धप्राणमितं सकृत्स्फुटतिथौ प्राग्वत्स्फुटं लम्बनम् ॥ २७ ॥**

[सकृल्लम्बने विशेषः]

**विधेयमादौ सकृदुक्तलम्बनं तदूनयुक्तादसकृत् पुनर्न तत् ।**
**स्थिरत्वमेत्यल्पतरप्रयासतो अतोऽन्यथा तन्महता स्थिरं भवेत् ॥ २८ ॥**

[प्रकारान्तरेण लम्बनसाधनम्]

**दृक्क्षेपदृग्ज्ये निजशङ्कुभक्ते सूर्या[१२]हते स्तोऽङ्गुलभे तयोश्च ।**
**अन्योन्यकर्णाहतयोः कृती ये तदन्तरान्मूलमिताङ्गुलानि ॥ २९ ॥**
**गुणगुणश्रवणेन दिवाकृतः प्रविभजेदिह लम्बननाडिकाः ।**
**श्रवणयोर्द्वययोस्तु हतेर्पदं खलु गुणं रविकर्णहृदत्र वा ॥ ३० ॥**

[प्रकारान्तरेण दृग्गतिसाधनम्]

**भास्वत्त्रिभोनितविलग्नविशेषजीवा दृक्क्षेपशङ्कुगुणिता त्रिगृहज्ययाऽऽप्ता ।**
**स्याद्दृग्गतिर्दिनकराभिहताऽथवा स्याद् दृक्क्षेपकर्णभजितादपि विस्फुटा सा ॥ ३१ ॥**

---

Text of Ms. A :

तद्वोर्र्वर्मसमासम्छुनम्
[28] द्वनमुक्तादसकृत्फनस्ति·
स्थिरत्वमेत्पल्पतरप्रयासतो यतोन्पथा तन्महता स्थिरौ भवेत्
[29] दृक्षेपदृग्ज्पे निजशंकुलक्ते सूर्याहते स्तोङ्गुलभतयाश्च
अत्पोन्पकर्णहतयोः कृती ये तदन्तरान्मूलनिताङ्गुलानि
[30] गुणगुणश्रवणेन दिवाकृतः प्रविभजैदिह लंछननाडिकाः
श्रवणयोगविशेषयुतेपदम्वतगुणं रविकर्णहृदत्र वा ।
[31] भास्वत्त्रिभोनितविलग्नविशेषजीवा दृत्क्षेपशंकुगुणिता त्रिग्रहज्पायाप्ता
म्पा । दृग्गतिर्दिनकराभिहताथवा स्पात् दृक्षेयकर्णभजतानिकटायाः

Ms. B : In place of 27 c-d and 28 a, Ms. B reads :
तद्वोर्वर्मसमासम्छुलभजितो दृक्षेपनादोर्गुणो
लघप्राणमितं सकृत्स्फुटतिपौ प्रीग्वत्स्फुर्ट लम्छनम् ।
विधेयमादौ सकृटुप्तिलम्छनम् ट्कनमुक्तादसकृत्फनस्ति

[प्रकारान्तरेण सकृल्लम्बनसाधनम्]

त्रिभरहितविलग्नादर्कहीनाद्भुजाग्रे त्रिकुलवरद[$\frac{३}{१}\frac{२}{३}$]भक्ते त्रिज्ययाग्रोनयुक्तात् ।
दृगदृगुडुकलापे तद्भुजावर्गयोगात् पदविहृदिषुजो ना काष्ठतो[1] दोर्गुणो वा ॥ ३२ ॥

[तत्र विशेषः]

सकृदेवमिहापि लम्बनं प्राग्वद्दृग्गतितोऽपि साधयेत् ।
द्युदलत्रिभहीनलग्नयोरन्तर्ज्यात इह द्युखण्डजम् ॥ ३३ ॥

लम्बनविधिः प्रथमः ।

---

Text of Ms. A :

[32] त्रिभरहितविलग्नादर्कहीना भजाग्रे त्रिकुलवरदभेक्ते त्रिज्पयाग्रोनयुक्ता
दृगदृगुडुकलाये तद्भुजावर्गयोगात्पदविहृदिसवाना काष्टिता दोगुणो ता ।

[33] सकृदेवमिहाविलंवनं प्राग्वद्दृगतितोपि साधये च ।
द्युदलत्रिमहीनलग्रपोरन्तज्पति इह द्युस्वण्डम् ।

लम्छनविधिः प्रथमः ।

Ms. B : 32 c °कलापे 32 d °सवाता 33 a °लंबनं

---

1. काष्ठतो इषुजो ना = दृक्क्षेपना

## 2. अवनतिविधिः

[साधनविधि:]

त्रिभोनलग्ने दिनखण्डदृग्ज्ये रवीन्दुविक्षेपवियोगयुत्या ।
दृक्क्षेप आद्यादि नयेद् रवीन्द्वोः विधोस्तथा स्याच्च यथैव भानोः ॥ १ ॥

[इन्दुदृक्क्षेपसाधनम्]

दृक्क्षेपचापं त्रिगृहोनलग्नक्षेपोनयुक्तं विषमान्यदिक्स्थम् ।
तज्ज्येन्दुदृक्क्षेप इनस्य चास्य इन्दोरितान्या निजसाधनैर्वा ॥ २ ॥

[नतिसाधनम्]

निजमन्दकलाश्रवणाभिहतस्त्रिगुणेन हृतः स्फुटतां स इयात् ।
कुदलाभिहतौ निजयोजनगश्रुतिसम्भजितौ नतिके तु फले ॥ ३ ॥

अथवा स्फुटभुक्तिताडितौ दृक्क्षेपौ त्रिगुणेन भाजितौ ।
तिथि[१५]भिश्च फले नती स्फुटे स्वे कक्ष्याप्रतिमण्डले तयोः ॥ ४ ॥

---

Text of Ms. A :

[1] त्रिभोनलग्नदिनस्वण्डदृग्ज्पे रवेन्दुविक्षेयविलोमवृत्पा
विक्षेयआक्र्यादिहर्देद वीछ्रो विधार्यथाव भानो:

[2] दृक्षेपलापत्रिग्रहोनलग्नक्षेयोनयुक्त नु सामात्पदिक्स्थं
उज्त्पेन्दुदृक्षये इनैस्प चास्प इन्दोरिताक्रचा निजसाधनैर्वा

[3] निजमन्दकलाश्रवणाभिहतास्त्रिगुणेन हृत: स्फुटत्तां समियात्
कुदलाभिहिता निजयोजनगश्रुतिसम्छजितौ नतिके तु फले

[4] अथवा स्फुटभुक्तिताडितौ दृक्षेयौ त्रिगुणेन भाजितौ
तिथिभिश्च फले नती स्फुटे स्ते कक्ष्याप्रतिमण्डे तयो:

Ms. B : 1 c हृदैर्दवीछ्रो 2 b तु 4 d स्वे

मध्यमौ क्षितिदलाहृतौ हृतौ मध्यमश्रवणयोजनैर्नती ॥ ५ ॥

मध्यभुक्तिताडितौ [च वा] दृक्क्षेपौ तिथिभाग[ $\frac{1}{15}$ ]ताडितौ ।
नती त्रिगुणभाजितौ क्रमात् [सूर्याचन्द्रमसोः कलागते] ॥ ६ ॥

[चन्द्रस्य स्फुटा नतिः]

योगान्तरं भिन्नसमाशयोर्नत्योर्नतिस्सा शशिनोऽर्कबिम्बात् ।
तात्कालिकक्षेपयुतोनिता सा समान्यदिक्त्वात् स्फुटतामुपैति ॥ ७ ॥

अवनतिविधिर्द्वितीयः ।

---

Text of Ms. A :

[5] मध्यमौ क्षितिदलाहिनीतो कृतौ मध्पमश्रवणयोजनैर्नती

[6] मध्पभुक्तिताडितौ दृक्केयौ तिथिलागताडिता वा
नती त्रिगुणभाजितौ क्रमात् ।

[7] योगान्तरं तुल्पसमाशयोर्नत्पोन्नतिस्सा शशिनोर्कविम्छात् ।
तात्कालिकक्षेयवुतौनिता शा सामानदिक्त्वा स्फुटतामुयैति ॥ ॥

अवर्नतविधिर्द्वितीयः ।

Ms. B : 7 d मुपैति After vs. 7, B wrongly inserts प्राग्रासमध्पग्रहमेक्षकालवि from vs. 2 of the next section.

# 3. स्थितिविमर्दार्धविधिः

[स्थितिविमर्दार्धादिसाधनम्]

[प्रथमविधिः]

स्थितिविमर्ददले शशिवच्च तद्वियुगुपेततिथेः करणागतात् ।
असकृदत्र विलम्बननाडिका ग्रहणमोक्षतिथिस्तु परिस्फुटा ॥ १ ॥
प्रग्रासमध्यग्रहमोक्षकालविश्लेषतो ये स्थितिखण्डके स्तः ।
निमीलनोन्मीलनसिद्धिरेवं तन्मध्यविश्लेषविमर्दखण्डे ॥ २ ॥

[द्वितीयविधिः]

मध्यलम्बननिजान्तरयुक्तं तत्स्फुटं भवति खण्डकद्वयम् ।
लम्बनं महदनन्तरागतात् प्रग्रहोत्थमृणमल्पकं धनम् ॥ ३ ॥
मौक्षिकं धनमनल्पकं भवेदल्पकं ऋणमतोऽन्यथा यदा ।
वर्जितं स्थितिदलं तदा स्वकं लम्बनान्तरफलैः स्फुटं भवेत् ॥ ४ ॥
स्वर्णयोर्यदि विपर्ययस्तदा लम्बनैक्यसहितं स्थितेर्दलम् ।

---

Text of Ms. A :

[1] स्छितिविमर्ददले शशिवच्च तद्वियुगुयेततिथेः करणागतात्
असकृदत्र विलम्छननाडिका ग्रहणमोक्षतिथिस्तु परिस्फुठा ॥

[2] प्राग्रासमध्पग्रहमेक्षकालविश्लेषन्द्रोषेस्थितिखण्डके स्ता
निमीलनोन्मीलनसिद्धिरेवं तत्मध्पविश्लेषविमर्दखण्डे

[3] मध्पलम्छननिजान्तरयुक्तं तत्स्फुटे भवति मर्दद
लंवनं महदनंतरागता प्रग्रहोत्थमृणमल्पकं धनम्

[4] मुक्तिकं धनमनुल्पक भवेदल्प वृणमतोन्पथा यदि
वर्जितं तिथिदलं तथा स्वंकं लंवनांतरफलैः स्फुटं भवेत् ।

[5] स्वर्णयोर्यदि विपर्ययस्तदा लंवनैक्यसहितं स्छितेर्दलम् ।

Ms. B : 1 d परिस्फुटा ॥ 2 b स्तः 4 c स्वकं 5 b लंबनै°

[इष्टकाले ग्रासानयनम्]

**[1]प्रग्र[ह]स्थितिदलेष्टकालयोः वीष्टसंज्ञमनयोर्यदन्तरम् ॥ ५ ॥**
**मध्यमस्थितिदलेन ताडितं स्पष्टहृत्स्फुटतरं हि वीष्टकम् ।**
**स्पष्टभुक्तिविवरांशसङ्गुणं तद्[भु]जस्तदवधेर्विधोरिषुः ॥ ६ ॥**
**कोटिका कृतिसमासतस्तयोः मूलमत्र समुदीरिता श्रुतिः ।**
**[छाद्यछादकदलैक्यतस्त्यजेच्छिष्टमत्र भवतीष्टग्रासकम्] ॥ ७ ॥**

[परिलेखार्थं चन्द्रबिम्बे संस्कारविशेषः]

**स्फुटचन्द्रगतिः खखाग्नि[३००]भिर्लब्धाश्चन्द्रकलार्ध[त]स्त्यजेत् ।**
**ग्रहणे सवितुर्यतो रविस्तीक्ष्णः स्वच्छतनुर्निशाकरः ॥ ८ ॥**
**अत एव विमर्दखण्डके स्थितिखण्डे परिलेखपूर्व[क]म् ।**
**अमुना विदधीत रात्रिपस्फुटबिम्बेन न शीतगुग्रहे ॥ ९ ॥**

---

Text of Ms. A :

मध्पमस्थितिदलेन ताडितं स्पष्टहृत्स्पुटतरं हि वीष्टकं
[6] प्रग्रस्थितिदलेषुकालयो वीष्टसंज्ञामनयोर्यदन्तर
स्पष्टभुक्तिविवरांशसङ्गुणम् ॥ तत्जस्तदवधे विधोरिष्टः
[7] कोटिका कृतिसमासतस्वपोः मूलमिष्टइषुटीरितः श्रुतिः ।
[8] स्फुटचद्रगते खसाग्रिभिः लव्वाचंद्रदलार्कस्त्पजेत् ॥
ग्रहृणे सवितुयतो रविस्तीक्ष्णः स्वछन्नतनुर्निशाकरः
[9] अत पव विमर्दखण्डके स्तितिखण्डे परिलेखयूर्वम्
अमुना विदधीत रात्रिपः स्स्फुटविम्छेन नरशीतगुग्रहे

**Ms. B :** 6 a °योर्वी° 7 a °स्घपोः 7 b म्लल° 8 a °ग्निभिः
9 b परिलेस्वयूर्वम्

---

1. Vss. 5 (c-d) and 6 (a-b) of the manuscript text have been interchanged to bring them in the correct order.

[वलनादिकर्म]

**चन्द्रवच्च वलनादिकाः क्रियाः**

[ग्रहणद्वयोः दिग्विपर्ययकारणम्]

**भूप्रभां विशति [शीत]दीधितिः ।**
**स्वग्रहे रविमिनग्रहे यतो**
**दिग्विपर्ययकृतो ग्रहद्वयोः ॥ १० ॥**

**स्थितिविमर्दार्धविधिस्तृतीयः ।**

---

**Text of Ms. A ;**

[10] वंद्रयश्च वलनादिका क्रिया भूप्रभां विंशति दीधितिः
स्वग्रहे रविमिनग्रहे यतौ दिग्विर्यर्यकृतो ग्रहस्वतः ॥ ॥

स्थितिविमर्दार्धविधिस्तृतीयः ॥ ॥

# 4. परिलेखविधिः

[उपोद्‌घातः]

स्पष्टाः परिलेखे स्युः [प्रग्रहण]ग्रासविशेषा यस्मात् ।
स्फुटमस्माद्वक्ष्येऽहं [सूर्येन्दुग्रहण]परिलेखम् ॥ १ ॥

[सामान्यपरिलेखविधिः]

[वृत्तत्रयलेखनम्]

ग्राह्यं लिखेत्कर्कटकेन भूमौ तन्मानखण्डाङ्गुलसम्मितेन ।
बिम्बार्धयोगप्रमितेन चान्यत् त्रिज्याख्यमन्यत्त्रिगुणायतेन ॥ २ ॥
एकत्र केन्द्रत्रयमस्त्यमीषां
रेखा तथा प्रागपरायतैका ।
याम्योत्तरा तत्तिमितोऽपि तत्र

[त्रिज्यावृत्ते वलनदानम्]

त्रिज्याख्यवृत्ते शिशिरोष्णदीप्त्योः ॥ ३ ॥
प्राक् स्पर्शमोक्षप्रभवं विमुक्तिप्रग्रा[स]जं दिग्वलनं च पश्चात् ।
याम्योत्तरे ज्यार्धवदत्र देयं सौम्येऽथ याम्ये त्वपसव्यवृत्या ॥ ४ ॥

---

Text of Ms. A :

[1] स्पष्टाः परिलेखे स्युः ग्रासविशेषा यस्मात्
स्पुटमस्माद्वक्ष्ये परिलेखम् ।

[2] ग्राह्यं त्विखेत्कर्कटकेन भूयौ तन्मानखण्डङ्गुलिसम्मितेन
विन्छार्धयोगप्रमितेन चान्पत्स्थित्पर्धमन्पत्त्रिगुणायतेन

[3] पकत्र कैंद्रत्रयमप्पमीषां रेस्वा तथा प्रागयरायतेक
याम्पोतुरा तत्तिमितोति ताला त्रिज्पाक्षवृत्ते शिशिरोष्णदीप्त्पोः ।

[4] प्राक्स्पर्शमोक्षप्रभवे विमुक्तिप्रागाजे दिग्वलनो च यश्चरत् ।
याम्पोतुरे ज्पाधवदतुकेश सौख्पेन सौम्पे त्वपसव्पवृत्पा

Ms. B : 2 a लूयौ 3 c °ति तात्ता

प्रसार्य याम्योत्तरयोर्दिशोरपि यथोक्तवन्मध्य[म]दिग्गुणस्ततः ।
तदग्रसूत्रत्रितयं स्वकेन्द्रगं विरच्य तेभ्यः स्थितिमण्डले क्रमात् ॥ ५ ॥

[मानैक्यार्धवृत्ते चन्द्रविक्षेपदानम् ।

क्षेपौ स्वकाष्ठाभिमुखौ प्रसार्यौ प्रग्रासमुक्तिप्रभवौ स्वसूत्रात् ।
ज्यावद्रवेर्व्यस्तदिशो हिमांशोः केन्द्रात्स्वसूत्रे ग्रहमध्यजातः ॥ ६ ॥

[स्पर्शमोक्षबिन्द्वोः मध्यग्रासमितेश्चानयनम्]

ग्राहकप्रमितकर्कटेन तत् खण्डयेन्निजशराग्रतः क्रमात् ।
ग्राह्यबिम्बवलयं ततः स्फुटाः स्पर्शमुक्तियुतिमध्यमग्रहाः ॥ ७ ॥

स्पर्शमोक्षशरकेन्द्रसङ्गतं ग्राह्यबिम्बपरिधिं स्पृशत्यलम् ।
यत्र तत्र कथितोऽथवा स्फुटः प्रग्रहो ग्रहबिमोक्षसम्भवः ॥ ८ ॥

व्यासार्धं वा मध्यविक्षेपहीनं स्वे दिक्सूत्रे दिङ्मुखाद्यत्र तस्मात् ।
खण्ड्यो ग्राह्यो ग्राहकार्धायतेन मध्यग्रासः कर्कटेन स्फुटः स्यात् ॥ ९ ॥

---

Text of Ms. A :

[5] प्रसार्य याम्पोत्तरयोर्दिशोरपि यथोक्तवन्मध्पदिग्गुणस्ततः
उदग्रसूत्रत्रितयं खगेन्दुगं विरव्प तेन्पः स्थितिमण्डलक्रमात्

[6] क्षेपौ स्वकाष्टाभिमुखौ प्रसायौ प्रसायौ प्रगासमुक्तिप्रभावौ खमूत्रात्
ज्पावद्रवर्व्पस्वदिशो हिमाशोः केंद्रात्स्वसूत्रे ग्रहमध्पजातः ॥

[7] याहकप्रमितकर्कटेन तत्स्वातापोर्निजशराग्रतः कमात्
ग्राह्यविमवलयं तयतस्स्फुटास्पर्शमुक्तिमितिमघ्पमग्रहाः

[8] स्पर्शमोक्षशरकेंद्रसङ्गतं ग्राह्यपरिधिं स्पृशत्पलम्
यत्र तत्र कथिताथवा स्फुटः प्रग्रहे । ग्रहग्विमोक्षसंभवः ।

[9] व्पासार्धं वा मध्पविक्षेयहीनं स्वे दिक्सूत्रे दिङ्मुखाद्यत्र तस्मात्
खण्द्यो ग्राह्यो ग्रादकावायतेन मध्पग्रासः कर्कटेना स्फुटः स्पात्

**Ms. B :** 5 c स्वगेन्दुगं　5 d स्थितिमण्डलं क्रमात्　6 a प्रसायौ occurs only once.
6 b स्वमूत्रात्　8 b पाह्य°　8 d प्रपहे

[ग्राहकमार्गलेखनम् अभीष्टग्रासप्रदर्शनञ्च]

**विक्षेपत्रयमण्डलैर्झषयुगं तद्वक्त्रपुच्छस्पृशोः**
**रज्ज्वोः संयुतितो लिखेदिषुशिरस्संछेदिवृत्तं महत् ।**
**मार्गो ग्राहकजः स्पृशेच्छ्रुतिमुखं केन्द्राद्यतो ग्राहक-**
**व्यासार्धायतकर्कटेन विलिखेद् ग्रासं त्वभीष्टं ततः ॥ १० ॥**

[प्रग्रहमोक्षबिन्द्वोरानयनम्]

**बिम्बान्तरालश्रवणेन चैवं प्रग्रासमोक्षावथ [चा]वधार्यौ ॥ ११ ॥**

[सर्वग्रहणपरिलेखः]

**सर्वच्छन्नानेहसा विग्गुणो वा**
**प्राग्वद् देयो मध्यदिग्ज्या शरो वा ।**
**इष्टग्रासोन्मीलनं वा तथैव**

[इष्टकाले बाहुकोटिकर्णसूत्राणि]

**तत्कालेषुः कोटिका बाहुसूत्रे ॥ १२ ॥**
**दोः कोटचग्रे केन्द्रतः कर्णसूत्रं**
**दोःसंसक्तं**

---

Text of Ms. A :

[10] विक्षयत्त्रयामण्डलैर्झषयुगं तद्वक्त्रपुछस्पृशौ
रज्ज्पोस्संयुतिता लिखेदिषुशिरस्संछेदिवृत्तं मह
मार्गो ग्राहकजः स्पृशेच्छ्रुतिमुखममुं केद्रादातो ग्राहकं
व्यासाधीग्रतकर्कटेन विलिखेद्गासं तुभीष्ट ततः ।

[11] विम्छोत्तरावश्रवणेन चैवं प्रासमोक्षावाथ वधार्यो

[12] सर्वछन्नानेहसां दिग्गुणो वा प्राग्वद्यो मध्पदिग्ज्पावधायो
इष्टग्रासोन्मीलनं वदेष स्तत्कालेषुः कोटिकावाम्पसूत्रे ।

Ms. B : 10 a विक्षेपसंभवः ॥ यत्रयामण्डलै° 12 a Both mss. have इष्टग्रासोन्मालनो वदेष स्पशमाक्षात् before सर्वछन्नानेहसां. This is repetition by oversight of 12 c. 12 b वधायो is repetition by oversight of वधार्यौ in 11 b. 12 d Both mss. have कोटिकोटिका in place of कोटिका

[शशिरविग्रहणयोः विशेषः]

प्राङ्मुखो ग्रास इन्दोः ।
प्रत्यग्बाहुः मुक्तिकाले खरांशोः
व्यस्तस्तस्माद् ग्राहकार्धेन खण्डम् ।। १३ ।।

[त्रिज्यावृत्ते परिलेखविधिः]

स्पर्शमुक्तिजशरौ समाहतौ त्रिज्यया मितिदलेन भाजितौ ।
त्रिज्यकाख्यवलये स्वदिङ्मुखं केन्द्रतश्च कथितोऽत्र मध्यमः ।। १४ ।।
ग्राहकं परिलिखेद् ग्रहादिकं ज्ञातुमिष्टमिह खण्डचमण्डले ।
प्राग्वदिष्टजनिमीलनादिकं स्वैर्महद्वलनकैर्हि मण्डले ।। १५ ।।

[मानैक्यार्धवृत्ते परिलेखविधिः]

दिग्ज्याः प्रमाणदलयोगसमाहताः स्युः त्रिज्योद्धृता मितिसमासदलाख्यवृत्ते ।
नेयौ तदग्रगशरौ ग्रहमोक्षजातौ मध्यात्स्वदिङ्मुखमभि ग्रहमध्यबाणः ।। १६ ।।
द्विमण्डलेऽन्यदुक्तवन्निमीलनेष्टपूर्वकम् ।
त्रिभज्यकाख्यमण्डले यथा तथा यथोक्तवत् ।। १७ ।।

---

Text of Ms. A :

[13] दोः कोद्यग्रे केन्द्रतः कर्णसूत्रं दोस्संसक्तं प्राङ्मुखो ग्रास इन्दोः
प्रत्पग्वाहु मुक्तिकाले खशराशोः व्यस्तस्तस्माद् गासकार्धेन खण्डम् ।

[14] स्पर्शमुक्तिजशरौ समाहितौ त्रिज्पया मितिदलेक भाजितो
त्रिज्पकाक्षवलये खदिङ्मुस्वाः केंद्रतस्प कथितोत्र मध्पमः ।

[15] ग्राहकं परिलिखेद् ग्रहादिकं ज्ञातुमेत्य इहा स्वण्डचमण्डले
प्राग्वदिष्टजनिमीलनादिकं खैर्मवद्वलनकैर्द्विमण्डले ।

[16] द्रग्ज्याः प्रमाणदलयोगसमाहताः स्पुः । त्रिज्पाद्धृता मितिसमासदलाख्पवृत्ते
नेर्या स्वदग्रगशरौ ग्रहमोक्षजातौ मध्पात्सुदिङ्मुखमरिभिग्रहमध्पवाणः

[17] द्विमण्डलेन्त्पदुक्तवन्निमीलनेःष्टपूर्वकम्
त्रिभज्पकाक्षमन्डलं विहृता यथोक्तवत्

Ms. B : 14 c स्पदिङ्मुस्वाः 15 d स्वै° 16 d °बाणः

[ग्राह्यवृत्ते परिलेखविधिः]

प्रग्रहग्रहविमुक्ति[जौ] शरौ ग्राह्यखण्डगुणितौ तदग्रतः ।
मानयोगदलभाजितौ न्यसेत् केन्द्रतोऽवितथमेव मध्यजम् ।। १८ ।।
दिग्गुणं स्वमपि खण्डयेत्तथा ग्राहकार्धमितकर्कटेन तत् ।
ग्रासमानमितरे शराग्रयोर्वा स्थितौ ग्रहविमोक्षयोः स्फुटे ।। १९ ।।
तद्विभेदि ककुभां समागमान्मानयोगदलसूत्रमानयेत् ।। २० ।।
तदग्रमध्येषुसुमण्डलैर्झषद्वयेन वृत्तं गतिमाह तैरिदम् ।
अभीष्टकर्णौ ग्रहमोक्षसम्भवौ निमीलनोन्मीलनजौ च केन्द्रतः ।। २१ ।।
प्रसारयेद् ग्राहक[मा]र्गसंस्पृशौ विधुग्रहे प्रागपरौ विपर्ययात् ।
इनग्रहेऽस्माच्च लिखेन्निजाकृतिं यथोक्तवच्चान्यदपि प्रसाधयेत् ।। २२ ।।

[त्रिज्यावृत्तमानैक्यार्धवृत्तपरिलेखयोः कोटिदानम्]

त्रिज्यकाभिनिहतैवमग्रका मानयोगदलसङ्गुणा हृता ।
कर्णकेन विधिवत्प्रसारिता त्रिद्विवृत्तपरिलेखयोरपि ।। २३ ।।

---

Text of Ms. A :

[18] ग्रडकेग्रहविमक्ति शरौ ग्राह्यखण्डगुणितो उदग्रतः ।
मानयोगदलभाजितो न्यसेत्केन्द्रता वितथमेव मध्यजम् ।

[19] दिग्गुणं स्वमभि खण्डयोत्तभो ग्राहकार्कमिहकर्कटेन तत् ।
ग्रासमानमितरो शराग्रयुोर्वामती ग्रहविमोक्षयोः स्फुटे ।

[20] तद्विभेदि ककुभात्समागमात्मानयोगदलसूत्रमानयेत् ।

[21] उदग्रमघ्येषुसुमण्डलेर्झषद्वयेन वृत्तं गतिरादृतेरिदम् ।
अभीष्टकर्णग्रहमाक्षसंभवौ निमीलनोन्मीलनजौ च केन्द्रतः

[22] प्रसारये ग्राहकर्गसंस्पृशौ विधुग्रहे प्रागपरौ विपर्ययात् ।
इनग्रहेस्माच्च लिखेनिजाधृति यथोक्तवत्तेवोक्तवदन्पत् ।

[23] त्रिज्पकाभिनिहितैवमग्रगा मानयोगदलंसंगुणा हृता
कर्णकेन विधिवत्प्रसारिता द्वित्रिवृत्तयरिलेखयोरपि

Ms. B : 23 c Between कर्णके and न विधि° Ms. B inserts 'गत इषो प्रथममघ्यमयोर्विशेषः' due to oversight. See 25 a,

[इष्टकाले ग्रासानयनम्]

संछादकद्वयशरान्तरमिष्टनाडीनिघ्नं हृतं स्थितिदलेन फलाङ्गुलाः स्युः ।
[तान्चाङ्गुलान् सुविधिना खलु ग्राहकस्य मार्गे प्रदाय गणयेन्निजग्रासमानम्] ॥ २४ ॥

[इष्टकाले चन्द्रविक्षेपसाधनम्]

संछादकप्रथममध्यमयोर्विशेषः क्षिप्त्योरभीष्टघटिकागुणितो विभक्तः ।
स्थित्यर्धकेन च युतो लघुको विहीनो ज्येष्ठः शरः शरमुशन्ति तमिष्टसंज्ञम् ॥ २५ ॥

[इष्टकर्णाद् इष्टघटिकासाधनम्]

इ[ष्ट]कर्णगुणिते शरान्तरे मध्यमश्रुतिहृतोनयुक्तके ।
सायकः सकृदथाग्रसंज्ञको ऽस्मादभीष्टघटिकाः प्रसाधयेत् ॥ २६ ॥

[स्थित्यर्धनाडीभिः ग्राह्यग्राहकमानसाधनम्]

गत्यन्तरांशगुणितस्थितिखण्डनाडी-
वर्गो युतः शरकृतौ [च] पदं द्विनिघ्नम् ।
मानान्तरोनसहितं दलितं प्रमाणे
ग्राह्योनमावृतिरथावृतिहीनमन्यः ॥ २७ ॥

---

Text of Ms. A :

[24] संछादकादानिशरान्तरमिष्टनाडीनिघ्नं हारवक्थितिदलेन फलाङ्गुलैः स्यात्

[25] संछादके गत इषो प्रथममध्पमयोर्विशेषः क्षिप्त्योरभीष्टघटिकागुणितो विभक्ता
स्तित्पर्धफलयुतो लघुको विहीनो जोष्टः शरः शरमुषन्ति तमिष्टसंज्ञम् ।

[26] इ – कर्णगुणिते शरान्तरं मध्पमेषुतिक्लोनयुकेन
सायको सकृदथाग्रसंज्ञकास्मादभीष्टघटिकाः प्रसाघयेत् ।

[27] गत्पन्तरांशगुणिताः णिताः स्थितिस्वण्डनात्वै
वनीकृतः शरकृतौ पदम् । स्विनिघ्नम् ।
मानान्तरोरसहितं दलितं प्रमाणे
ग्राद्योनमावृतिरथावृतिहीमन्पः

[इष्टवृत्ते परिलेखविधिः]

**इष्टे वृत्ते वलनं त्वनुपातात्सारयेत्ततः केन्द्रात् ।**
**वलनदिशि स्वक्षेपौ यथादिशं क्षेपकान्तमध्यगतौ ॥ २८ ॥**
**द्वावपि मध्यग्रहणे स्पर्शे मोक्षे च बाहुकर्णाग्रे ।**
**एवमभीष्टे काले परिलेखा एकवृत्ते स्युः ॥ २९ ॥**

[ग्रहणकाले ग्राह्यबिम्बस्य वर्णनिरूपणम्]

**प्रग्रासमुक्तिसमये शशभृत् सधूम्रः खण्डग्रहे शितिवपुः स्वदलाधिकश्चेत् ।**
**आताम्रकृष्णतनुरुत्कपिलः समस्तश्छन्नस्तथाऽन्यदुडुपश्च सकृष्णताम्रः ॥ ३० ॥**

[ग्रहणयोरनादेश्यम्]

**स्वबिम्बसूर्यांशक उष्णतेजसोर्न तेजतैक्ष्ण्यात् स्थगितोऽपि दृश्यते ।**
**हिमद्युतेः स्वच्छतनुत्वतः सुखं विलोक्यते खे मितिषोडशांशकः ॥ ३१ ॥**

**परिलेखविधिश्चतुर्थः ।**

---

Text of Ms. A :

[28] इष्टे वृत्ते वलनं त्वनयातात्साधपेत्ततः केंद्रात् ।
वलनदिशि स्वक्षेयो यथादिशं क्षेयकान्तमध्पगतौ

[29] द्वावपि मध्पग्रहणे स्पृशे मोक्षे च वाहुकर्णाग्रे
एवमभीष्टे काले परिलेखा पक वृत्तेः स्पुः

[30] प्रग्रासमुक्तिसमये शशभृत्सधूम्रः खण्डग्रहे शितिवयुः स्वदलाधिकश्चेत्
अंताम्रकृष्णतनुरुत्कपिलः समस्तछन्नस्तयान्नरुडुपश्च सकृष्णताम्रः ।

[31] खभिन्नसूर्यंश उष्णतेजसोर्न तैक्ष्णपात्स्थगितोयि दृश्पते
हिमद्युतेः स्वछतनुत्वतः सुखं विलोल्पते ले मितिषोडशांकः ।

परिलखविधिश्चतुर्थः ।

## 5. पर्वज्ञानविधिः

[ग्रहणसम्भवः क्षेपकपरिभाषा च]

प्रान्तगे शशिनि मासपक्षयोः पातयुक्त इह भार्धचक्रयोः ।
ग्रास उष्णशिशिरांशुमालिनोः क्षेपकोऽगतगतांशकास्तयोः ॥ १ ॥

[विक्षेपव्यासादिसाधनम्]

क्षेपकः स्वतिथिभागवर्जितः सायका[५]भिनिहतः कलागतः ।
चन्द्रसूर्यतमसां प्रविस्तराः पूर्ववत्स्थितिविमर्दखण्डके ॥ २ ॥

[मध्यग्रासमानम्]

मध्यमेन्दुश्रुतिसङ्गुणोऽथवा शीतगोः स्फुटश्रवोद्धृतः स्फुटः ।
तद्विहीनमितियोगखण्डकं मध्यमग्रहणमानमीरितम् ॥ ३ ॥

[चन्द्रग्रहणविषये स्थितिमर्दार्धसाधनम्]

स्फुटभुक्तिविशेषभागहृत् क्षेपो मध्यम एव वर्गितः ।
प्रकृ[तिश्रु]ते[२१,४]रपनीय[1] यत्पदे ते चेन्दोः स्थितिमर्दखण्डके ॥ ४ ॥

---

Text of Ms. A :

[1] प्रान्तगो शिशिनि मासयक्षयोः यातयुक्ता इह भार्धचक्रुयोः
ग्राम उष्णशिशिरांशुमालिनोः क्षेयको गतगतांशकास्तयोः ।

[2] क्षेयकः स्वतिथिभागपर्जितस्सायकाभिनिहितः कलागतः
चंद्रसूर्यतमसां प्रवस्तिराः प्रर्ववस्थितिविमर्दखण्डके ।

[3] मध्पमेन्दुगतिसङ्गुणोथवा शीतगोः स्फुटसमोद्धृतः स्फुटः
तद्विहीनमितियोगखण्डके मध्पमे ग्रहणमून ॥ मीरितम् ।

[4] स्फुटभुक्तिविशेषभागहृक्षेपौ मध्पम एव वर्गितम्
प्रकृतेरपनीय दृक्षयेदमिन्दोः स्थितिमर्दखण्डके

---

1. The reading really is प्रकृतेरपनीय, and प्रकृति is used to mean both 21 and 4. The letters तिश्रु have been inserted within square brackets to make the meaning obvious to the reader.

[सकृद्विधिना स्थित्यर्धयोरानयनं स्पर्शमोक्षकालिकक्षेपसाधनञ्च]

**शरशकल[ ⅓ ]पलैर्युतं विहीनं स्थितिदलमोजपदे वियुक्समेतम् ।**
**भवति युजि पदे तदाद्यमन्त्यं स्थितिदलक्षेपकलाः शरेऽन्यथा स्युः ॥ ५ ॥**
**स्पर्शमोक्षसमये शिलीमुखौ स्तो विमर्दशकलं निमीलने ।**
**दर्शने स्थितिदलोक्तकर्मणा भास्करग्रहणमेवमेव हि ॥ ६ ॥**

[लम्बनसंस्कारः]

**नतघटिकाङ्ग[ ६ ]समाहतिरंशाः स्वमृणमिने परपूर्वकपाले ।**
**[तदपमचापपलांशयुतोनं त्रिभरहितं द्युदले नतशङ्कू ॥ ७ ॥**
**खरसनाग(८६०)हृता नतमौर्विका] द्युदलशङ्कुगुणा त्रिभमौर्विहृत् ।**
**भवति लम्बनमुक्तकपालयोः तिथिघटीष्वसकृत्स्वमृणं क्रमात् ॥ ८ ॥**

[नतिसंस्कारः]

**द्वि[ २ ]गुणा नतशिञ्जिनी हृता क्षितिशक्रै[ १४१ ]र्न[ ति ]लिप्तिकामितिः ।**
**तत्कालशरोनसंयुतस्स्पष्टोऽतिग्मकरस्य सायकः ॥ ९ ॥**

---

Text of Ms. A :

[5] शरशकलयलैपुतं विहीनं स्तितिदलमौजयदं विपुक्समेतत् ।
भवति युजि यदे तदल्पमत्यँ स्थितिरलदद्वल्पकल्पः शरेन्पथा स्पुः
[6] स्पर्शमोक्षसमपे शिलेमुखौ स्तो विमर्दशकलं निमीलने
दर्शने स्थितिदलोक्तकर्मणा भास्करग्रहणमेवमेव हि ।
[7] नतघटिकाङ्गसमाहतिरंशाः स्वमृणमिने यरैयुर्वकयाले
[8] द्युदलशंकुगुण्पत्रिभमौर्विका
भवति लंवनमुक्तकयालयोः तिथिघटाष्वसकृत्खमृणं क्रमात्
[9] द्विगुणा नतशिञ्जिनी हृता क्षितिशक्रैर्नतिलिप्तिकाविधिः
तत्कालशरोनसंयुतास्स्पष्टास्तिग्मकरस्प सापकः

Ms. B : 5 c तदन्त्यमत्यं 8 c °लंबनमुक्वकयालयोः 9 d °स्तिग्मकरस्य सायकः

[सूर्यग्रहणविषये स्थित्यर्धविमर्दार्धवलनादिसाधनम्]

साधयेदकृतलम्बना तिथिर्लम्बनं स्थितिदलोनसंयुतात् ।
तत्तिथावसकृदत्र पूर्ववत् स्पर्शमोक्षसमयौ परिस्फुटौ ॥ १० ॥
स्पर्शमध्यमविमुक्त्यनेहसामन्तरे स्थितिदले परिस्फुटे ।
एवमेव हि विमर्दखण्डके प्रोक्तवच्च वलनादिकाः क्रियाः ॥ ११ ॥

[रव्यादीनां षाण्मासिकचालनम्]

ग्रहणाद्ग्रहणं तदोर्ध्वगं जिज्ञासुर्ग्रहपूर्वकं क्षिपेत् ।
प्रकृतग्रहमध्यभास्करे चन्द्रेंऽशादि तदुच्चपातयोः ॥ १२ ॥
पञ्च[५] संकृति[२४]रुडूनि[२७] षट्[६] क्रमात्
पञ्च[५] दृग्दृश[२२]गणा[१२]स्त्रिसायकाः [५३] ।
गोभुवो [१९] भुजकृता [४२] रसेषवो [५६]
नन्दका [९] द्वियमला [२२] महीकृताः [४१] ॥ १३ ॥

---

Text of Ms. A :

[10] साधयेदक्षतलम्छना तिथिर्लम्छनं स्थितिदलोनसंयुतात् ।
तत्तिथावसकृदत्र पूर्ववत्स्पर्शमोक्षसमयौ परिस्फुटौ
[11] स्पर्शमध्यमविमुक्तनेहसामन्तरस्थितिदले परिपरिस्फुटे
पवमेव हि विमर्दखानाके प्रोक्तवच्च वलनादिकाः क्रियाः
[12] ग्रहणाद्ग्रहणे सदोर्ध्वगं जिज्ञासुर्गृहफूर्वकम् क्षिग्पत् ।
प्रकृतग्रहमध्यभास्करे चंद्रैशादि तदुच्चपातयोः
[13] यंच मंकृतिरुडूनि षट्क्रनिषट् क्रमात्पंचदृग्दृशगुणास्त्रिसायकाः
गोभुवो भुजकृता रसेषवो नन्टका द्वियमला महीकृताः

Ms. B :　10 c तत्तिथा°　11 b °मन्तरे स्थितिदले

[तिथेः षाण्मासिकचालनम्]

पूर्ववत्स्फुटविधिं विनाऽपि यो वारयुग्म[२]मज[११]नाडिकाः क्षिपेत् ।
एवमेव दिवसेन वेत्त्यसाविन्द्विनग्रहणसम्भवादिकम् ॥ १४ ॥

पर्वज्ञानविधिः पञ्चमः ।

---

Text of Ms. A :

[14] पूर्ववत्स्फूटविधि दिनाधिये वारा पुम्ममजनाडिकाः क्षियेत्
पवमेव दिवसेन वेत्पसारिद्धिनग्रहणसम्भवायुतम् ॥ ॥

यर्वज्ञानविधिः पंचमः ॥ ॥

Ms. B : 14 a °त्स्फुटविधि

# 6. लघूपकरणविधिः

[स्पष्टतिथिसाधनार्थं प्रथमविधिः]

[क्षयकल्पना]

अवमशेषयुगाधिकसंहतेः कुदिनलब्धयुतोऽधिकशेषकः ।
हिमगुमासहृतांशकपूर्वकं रविविधूच्चयुतं क्षयसंज्ञकम् ।। १ ।।

[रविचन्द्रयोः केन्द्रसाधनम्]

भूदिनाप्तमवमावशेषकाद्यातमासदिनसंयुतं पृथक् ।
विश्व[१३]सङ्गुणमृणोनितं क्रमात् केन्द्रके रविहिमांशुमालिनोः ।। २ ।।

[स्पष्टतिथ्यानयनम्]

तत्फले सविकलं स्वकेन्द्रके स्पष्टवच्च ऋणसंयुते स्फुटे ।
उक्तवच्चरदलं स्वदोःफलं सूर्यदोःफलमथाध्वकर्मजम् ।। ३ ।।
नाडिका रवि[१२]हृतान्यमून्यलं प्राक्तनावमघटीष्वृणं [ध]नम् ।
उक्तवद्रविभवा विपर्ययात् स्यात्स्फुटा गततिथिस्त्विनोदयात् ।। ४ ।।

---

Text of Ms. A :

[1] अवमशेषयुगाधिकसंहतेः कुदिनलब्धयुतोधिकशेषकः
हिमगुणमासहृतांशकपूर्वकं रविविधुश्च युतं क्षयसंज्ञकम् ।

[2] भुदिनाप्तमवमावशेषकाद्यातयासदिनसंयुतं पृथक्
विषमंगुमृणोनितं क्रमात्केन्द्रके रविहिमांशुमालिनोः

[3] तत्फले रविकलं स्वकेद्रके स्पष्टयङ्कनगसंवुतत्
उक्तवच्चरदलं स्वदोःफलं सूर्यदोःफलमथाघ्पकर्मजम्

[4] नाडिका रविहृन्पमून्पलं प्राक्तनावमघटीष्दृण — नम् ।
उक्तवद्रविभवा विप्रर्ययात्स्पात्स्फुटा गततिथिस्त्विनोदयात्

Ms. B : 1 b °लब्ध°

**षष्टे[६०]रपनीय तां भवेद्येया ते नखशैल[७२०]सङ्गुणे ।**
**रविचन्द्रगमान्तरोद्धृते स्यातां स्पष्टतरे,**

[द्वितीयविधि:]

**फलानि वा ॥ ५ ॥**

**प्रविभज्य गमान्तरांशकैर्नाड्यः पूर्ववदिन्दुवासरैः ।**
**लब्धासु वियद्रसा[६०]हतान्नाडीषु त्ववमावशेषकम् ॥ ६ ॥**

[तृतीयविधि:]

**शशिवत्सरमासवासरैः द्युगणे सङ्गुणिते क्रमात् क्वहैः ।**
**लब्धा तिथिरुक्तपूर्वका स्पष्टा प्रोक्तफलैर्यथोक्तवत् ॥ ७ ॥**

[प्रकारान्तरेण रविचन्द्रयोः केन्द्रसाधनम्]

**द्युगणे जिन[२४]वर्गताडिते वसुधीखाङ्गकृतो[४६०८८]निते हृते ।**
**गोऽष्टाग्निखमूर्च्छनै[२१०३८९]र्भवेत् केन्द्रं वा भगणादिकं रवेः ॥ ८ ॥**
**खाज[११०]गुणे द्युगणे शशिकेन्द्रं क्वग्निखराम[३०३१]हृते भगणाद्यम् ॥ ९ ॥**
**मण्डलादि हिमतिग्मतेजसोः केन्द्रके कमलजोद्भवावधेः ॥ १० ॥**

---

Text of Ms. A :

[5] षष्टेरयनीय नां भवेद्येया ते नखशौलसंगुणे
रविचंद्रगमान्तरोद्धृते स्पातां स्पष्टेतरे फलानि वा

[6] प्रविभज्प ममान्तरांशकैर्नान्म्पः प्रर्ववदिन्दुवासरैः
लद्वास्त्र वियुग्रसाहतान्नाडोषु त्ववमावशेषकम् ।

[7] शशिवछरसासवासरैः द्युमणे सङ्गुणिते क्रमात्क्वहै
र्लघातिथिरुक्तपूर्वका स्पष्टा प्रोक्तफलेर्यथोक्तवत्

[8] द्युगणे क्रियवर्गताडिते वसुधीखाङ्गकृतोनिते हृते
गोष्टाग्निखमूर्छनैर्भवेत्केन्द्रं वा भगणादिकं रवेः ।

[9] खाजगुणे द्युगणे शशिकेन्द्रं क्वग्निखखमहृते दिनोत्करे

[10] मण्डलादि हिमतिग्मतेजसः केन्द्रको कमलजोद्भवाद्रवेः

Ms. B : 5 c रविबंद्र° 9 b क्वग्निखरामहृते

[सपातचन्द्रस्य युतिसंज्ञस्य साधनम्]

**पातचन्द्रभगणैक्यताडिते भाजिते कुदिवसैरहर्गणे ।**
**पर्ययादि युतिसंज्ञकं स्फुटं चन्द्रकेन्द्रजफलेन चोक्तवत् ॥ ११ ॥**

**खखदन्तकृता[४३२००]हतेऽथवा नवषट्पञ्चशरागरुद्र[११७५५६९]हृत् ।**
**द्युगणे युतिरुक्तवत्स्फुटा त्रिरसाब्ध्यब्धि[४४६३]समास्वृणं कला ॥ १२ ॥**

[युतिचन्द्रकेन्द्रयोः कलियुगादिक्षेपशोध्यौ]

**कलेर्गतादहर्गणाद्युतौ क्षिपेद् गृहाणि षट् [६] ।**
**विशोधयेद् गृहत्रयं [३] सुधामयूखकेन्द्रतः ॥ १३ ॥**

[क्रान्तियोजनपिण्डकाः]

**अजभूतबधो[११ × ५]ऽष्टखेन्दवः [१०८] कृतबाणावनयो[१५४]ऽभ्रगोभुवः[१९०]**
**गुणभूयमलाः [२१३] कुदृग्भुजा [२२१] भदले योजनपिण्डिका भुजे ॥ १४ ॥**

[दृक्क्षेपसाधनम्]

**षड्[६]गुणितास्तु गतास्तिथिनाड्यः स्वं सशिवं [११] रविकेन्द्रलवेषु ।**
**तत्क्रमयोजनकं स्वनिरक्षस्थानयुगान्तरयोजनपिण्डे ॥ १५ ॥**

---

Text of Ms. A :

[11] याताचंद्रभगणैक्यताड़िते भाजिते कुदिवसैरहर्गणे
यर्यायादि युतिसंज्ञकं स्फुटं चंद्रकेंद्रजफलेन चोक्तवत् ।

[12] खखदन्तेहृताहृतोथवा नवषद्यंवखराङ्गभद्रहृत् ।
द्युगणे पुतिभक्तवत्स्फुटा त्रिरसाव्ध्यग्निसमास्वृणं कला

[13] कलेर्गतादहर्गणाच्च्युतौ क्षिपेद् गृहाणि षट्
विशोधये गृहत्रयं सुधामपूखकेंद्रतः

[14] अजभूतवधोष्टस्वेन्देवः कृतवाणावनयोत्रगोभुवः
गुणिभूयमलाः कुदृभ्मुजा रुदलै योजनयिण्डिका भुजे ।

[15] षड्गुणिता तदथा त्तिथिनाद्यः स्वस्ते सशिवं रविकेंद्रद्रलेषु ।
योजकानिरक्षस्थानयुगान्तरयोजनपिण्डे

तौलितो धनमृणं क्रियादितो दोः कुवृत्तचरणस्तदूनितः ।
कोटिरग्नियम[२३]योजनैर्धनुस्तेन चोक्तवदिहाग्रदोर्गुणौ ॥ १६ ॥

[ लम्बनानयनम् ]

क्रमेण जीवा नतनाडिकाभ्यो हृताऽग्रमौर्व्या त्रिगुणार्धकृत्या ।
हृता भवेल्लम्बननाडिकास्तास्तिथौ क्षयःस्वं विधिवत्पुनश्च ॥ १७ ॥

[ नतेः चन्द्रशरस्य चानयनम् ]

मध्यभुक्तिविवरेण ताडितं दोर्गुणं तिथि[१५]गुणत्रिभज्यया ।
भाजयेदवनतिर्भुजावशादिन्दुबाणयुतवर्जिता स्फुटा ॥ १८ ॥

[ वलनादीनां साधनम् ]

प्राग्वदक्षवलनानि साधयेत्केन्द्रतोऽज[११]लवसंयुताद्रवेः ।
उत्क्रमापममिनस्य शीतगोः केन्द्रगोलविपरीततद्दिशम् ॥ १९ ॥
अन्यदुक्तवदशीतगु[ग्रहे] क्षेपकादि विधिवत्प्रयोजयेत् ।
दिक्प्रदर्शनमिहेरितं मया युक्तितश्च सकलं विचिन्तयेत् ॥ २० ॥

---

Text of Ms. A :

[16] तौलिनो घनमृणं क्रियादितो दोः कुवृत्तचरणस्तद्बनितः
कोटिरग्नियमयोजनैर्घनुस्वेन वोक्तवदिहाग्रदे । गुणौ ।
[17] क्रमेण जीवा नतनाडिकाभ्यो हृताग्रमौर्व्या त्रिगुणार्धकृत्या
हृता भवेल्लम्छमनाडिकास्तास्तिथौ क्षयः स्वं चिधिचत्पुनश्च ।
[18] मध्पभुक्तिविवरेण ताडितं तद्दोर्गुणं तिथिगुणं त्रिभज्पया
भाजयेदवनतिर्भुजावशादिन्दुछाणयुतवर्जिता स्फुटा
[19] प्राग्वदक्षवलनानि साधयेत्केन्द्रभोजलवसंयुताद्रवेः
उपक्रमायमपिनस्प शीतगोः केन्द्रगोलविपरीततद्दिशम् ।
[20] अन्पदुक्तवदशीतगुछेद्यकादि विधिवत्प्रयोजयेत्
दिक्प्रद्रर्शनमिहेरितं मया युक्तितश्च सकलं विचिन्तयेत् ।

Ms. B : 16 d °दिहाग्रदोगुणौ ॥ 17 c °लम्छन° 17 d चिचिचत्पुनश्च ।

[मध्यलग्नसाधनाय स्थूलविधिः]

नतशरां[५]शविवर्जितसंयुतो दिनपतिर्गगनार्धकलग्नकम् ।

[जिनांशतुल्येऽक्षांशे स्थूलविधिना लम्बनाद्यानयनम्]

त्रि[३]हततच्छ्रुतिसप्त[७४]विभाजिता तिथिविहीनयुता घटिकादिकम् ॥ २१ ॥

लम्बनं धनमृणं यथोक्तवत् तत्तिथेर्गगनकाश्यपी[१०]हता ।

पादहीननगसंकृते[२४७—¼]र्हृता कर्णकेन नतिकाऽत्र पूर्ववत् ॥ २२ ॥

[उपसंहारः]

चन्द्रपाततुहिनांशुभास्करक्रान्तिलम्बपलशिञ्जिनीर्विना ।

प्रोदितं ग्रहणयुक्तिमध्यमं तन्त्रविद्भिरपरैः सु[दु]स्तरम् ॥ २३ ॥

लघूपकरणविधिः षष्ठः ।

---

Text of Ms. A :

[21] नतशरोशविवर्जितसंयुतो दिनपतिर्गगनार्धकलग्नकम् ।
त्रिंहततछ्रुतिसप्तजिताजिना नतविहीनहता घटिकादिकम् ।

[22] लम्छनं धनमृणं ययोक्ववत्तत्तिथेर्गगनकाश्रुतीहता
यादहीननगसंकृति तथा कर्णकेन नतिकात्र यूर्ववत् ।

[23] चंद्रयाततुहिनांशुभास्करक्रान्तिलम्छयलशिञ्जिनीर्विना
प्रोदितं ग्रहणयुक्तमध्पमः तत्रविद्भिरपरैः सुस्तदुम् ॥ ॥

लघूयकरणविधिः षष्टः ॥ ॥

Ms. B : 21 a नतशरांश° 22 d °ततिकात्र

## 7. छेद्यकप्रश्नविधिः

विषुवद्वलनायनाख्ययोर्दिग्ज्याभिः त्रिगुणस्य मण्डले ।
ग्रहमध्यविमुक्तिसंस्थितिं जानन्तः परिलेखविद्वराः ॥ १ ॥

मानयोगदलमण्डलेऽथवा ग्राह्यमानवलयेऽपवर्त्य वा ।
वृत्तयुग्मपरिलेखकावुभौ वेत्ति यः स परिलेखतत्त्ववित् ॥ २ ॥

निमीलनोन्मीलनके तथेष्टग्रासं स्वकर्णाग्रभुजैर्विदध्यात् ।
मार्गेण वा छादकसंज्ञकस्य स्वदिग्गुणैर्वा गणकः पटुस्सः ॥ ३ ॥

अध्वकालममृतद्युतिग्रहाद् वेत्ति मार्गगतयोजनान्यतः ।
छाद्यछादकमिती च मध्यमाद् ग्रासतस्स पटुरुच्चकैर्भुवि ॥ ४ ॥

ग्रासमिष्टसमयादभीष्टकाद् ग्रासतश्[च] समयस्य नाडिकाः ।
पर्वणः स्वतिथिनाडिकाः क्रमात् वेत्ति यस्स गणकाग्रणीर्मतः ॥ ५ ॥

---

Text of Ms. A :

[1] विषुवद्वलनायमाख्पयोर्दिग्ज्पाभिः विगुणस्प मण्डे
ग्रहमध्पविमुक्तिसंस्छितं जानन्तः परिलेखदिद्धरः ।

[2] मानयोगदलमण्डेलेथवा ग्राह्यमानवलयेयवन्पयः
वृत्तयुग्मपरिलेखकावुभी वेत्ति यस्स परिलेखतन्वविंत्

[3] निमोलनोन्मीलनके तथेष्टग्रासं स्वकर्णाग्रभुर्विदध्पात्
मार्गेण वा छादलकसंज्ञकस्प रवदिग्नर्णैर्वा गणकः यटुस्सः ।

[4] अध्वकालममृतद्युतिग्रहाद्वेत्तिमार्गगतयोजनान्पतः
कादकाधृतिमितीदमध्पमाद्गासतस्स पटुरुश्चकैर्भुवि ।

[5] ग्राममिष्टसमयाभीदष्टकाद् गासतस्समयं स्वनाडिकाः
पर्वचस्वतिथिनाड़िकाः क्रमाद्वेत्ति यस्स गणकाग्रणीर्मतः ।

Ms. B : 1 c संस्थितं 2 c ०वुभी 3 d पटुस्सः

यातचन्द्रदिनकृत्पलापमेभ्यो विना ग्रहणके शशीनयोः ।
वेत्ति तस्य चरणाम्बुजद्वयं सेव्यते विगतमत्सरैः सदा ॥ ६ ॥

कुजे समुद्यन्तमवेक्ष्य तिग्मगुं हिमद्युतिं वा समवेक्ष्य तन्मितिम् ।
महीमितिं लम्बनतोऽथवा नतेः स तन्त्रवित्तोयधिमेखलावनौ ॥ ७ ॥

छेद्यकप्रश्नविधिः सप्तमः ।

इति श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्वरविरचिते स्वनामसंज्ञिते स्फुटसिद्धान्ते भट्टगोविन्दावतारिते रविग्रहणाधिकारः पञ्चमः ॥ ५ ॥

---

Text of Ms. A :

[6] यातचन्द्रदिनकृत्पलायमन्पो विना ग्रहेणके शशीनयोः
वेत्ति तस्प वरणाम्छुजद्वयं सेन्पते विगतमत्सरेवुस्सदा ।

[7] कुजे समुद्यन्तमवेक्ष्य तिग्मगुं हिमद्युतिं वा समचेक्ष्प तन्मितिम् ।
महीमितिलम्छततोथवा नतेः सततुवित्तयेधिमेस्वलावमौ ।

छेद्यकप्रश्नकविधिस्सप्तमः ॥ ॥

श्रीमदानन्दयुरीयभट्टमहदत्तसुतचटेश्चरविरचिते स्वनामसंज्ञिते स्फुटसिद्धान्त भट्टगोविन्दावतारिते रविग्रहणाधिकारः पंचमः ॥ ॥

Ms. B : 7 b समवेक्ष्प तत्मितिम् ॥ 7 c महीमितिं° Col. °वटेश्चर°

# VI. उदयास्तमयाधिकारः

[उदयास्तमयस्य दिक्]

प्रागुदेति लघुरल्पभुक्तिकोऽस्तं व्रजत्यलघुभुक्तिरुष्णगोः ।
ज्येष्ठभुक्तिरलघुस्समुद्यति स्वल्पभुक्तिरपरेऽस्तमेत्यलम् ॥ १ ॥
पश्चाद्विधुभार्गवेन्दुजा उद्यन्त्यर्कजभूजसूरयः ।
प्राच्यां ज्ञसितौ च वक्रगावस्तं व्यस्तदिशि स्वदृग्वशात् ॥ २ ॥

[उदयास्तमय-कालांशाः]

कालांशकैर्नव[९]भिरुष्णगुलुप्तदी[प्ति]र्दृश्यो भृगुर्गुरुबुधार्किकुजाः क्रमेण ।
तैर्द्व्यन्तरैस्तुहिनदीधितिरर्क[१२]संख्यैः वक्री बुधश्च वसु[८]भिर्भृगुनन्दनोऽपि ॥ ३ ॥

[ग्रहाणां परमशराः]

तुरग[७]शिव[११]शिलीमुखा[५]ङ्क[९]नन्दाः[९]
तिथि[१५]गुणिताः कलिकाः शरो महीजात् ।
समुदगपमवत्तथा च याम्यो
दिविचरपातयुतौ क्रियात्तुलाच्च ॥ ४ ॥

---

Text of Ms. A :

[1] प्रागुदेति लघुकल्पभुक्तिकोस्तं व्रजत्पलघुभुक्तिरुष्णगोः
ज्येष्टरुक्तिरलघुस्समुद्यति स्वल्पभुक्तिरपररुतमेत्पलम् ।

[2] यश्चाद्विधुर्भावेर्गनुजा उद्यन्तार्कजभूजसूरयः
प्राच्पा ज्ञसितौ च वक्रगावस्तव्यस्तदिशिखदिग्दृशः ।

[3] कालांशकैर्नवभिरुष्णगुलुप्तदीर्दृश्पो नुगुर्गुरुवुधार्किकुठः क्रमेण
तैद्द्वन्तरैस्तु हिनदीघितिरर्कसंखपैः वक्री वुधश्च वसुभिर्नुगुनन्दनोयि ।

[4] तुरगशिवशिलीमुखपङ्कनन्दास्तिथिगुणिकाः कलिका शरो महीज्पत् ।
समुदगयमवत्तोयथां याम्पो दिविचरयातयुतौ क्रियातुलाच्च ।

Ms. B : 2 a पश्चा° °भावेर्गन्दुजा 4 b शरो

[ इष्टशरसाधनविधयः ]

पातेऽथ फलं चलोद्भवं व्यस्तं स्वद्युचरात्परिस्फुटः ।
स्फुटपा[ तयु ]ताद् ग्रहाद् गुणश्क्षेपघ्नश्चलकर्णहृच्छरः ॥ ५ ॥

करणागतपातसंयुतान्मन्दस्पष्टखगाद्गुणोऽथवा ।
परसायकताडितो हृतश्चलकर्णेन तदिष्टसायकः ॥ ६ ॥

चक्राच्च्युतपातवर्जितान्मन्दस्पष्टदिवौकसोऽथवा ।
जीवा परबाणसङ्गुणाऽभीष्टेषुश्चलकर्णभाजिता ॥ ७ ॥

उक्तवच्च भगणाच्च्युतपाते शीघ्रजाः फलकलाः स्फुटपातः ।
तद्वियुत्स्फुटखगाद् गुणो वा कर्णहृच्छरहतश्छर इष्टः ॥ ८ ॥

[ अयनदृक्कर्मसाधनविधयः ]

सत्रिगेहखचरोत्क्रमज्यका ताडिता परमयाऽपमज्यया ।
क्षेपकेन च हरेत् त्रिमौर्विकावर्गितेन फलमत्र दृक्कलाः ॥ ९ ॥

---

Text of Ms. A :

[5] पातेघफलं चलाद्भवं व्यस्तं स्वद्युचरातपरिस्फुटः ॥
स्फुटयाताद्ग्रहाद्गुणा क्षेयघ्नश्वलकर्णहृछरः

[6] करणागतयातसंपुतान्दर्यः स्पषुखगाद्गुणो यचा
यरसायकत्पडितो हृतश्चलकर्णेन समिष्टसायकः

[7] चक्क्राच्चुतयातवर्जितान्मन्दस्पष्टदिवौकसाथवा
जीवा परवाणसङ्गुणाभीष्टेषुश्चलकर्णभाजिता ।

[8] उक्तवच्च भगणच्पुतपाते शीघ्रजाः फलकलाः स्फुटपातः
तद्वियुत्स्फुटस्वगागुणो वा कर्णहृछरहृतश्छर इष्टः ।

[9] सत्त्रिगेहखचरोत्क्रमजीवा ताडिता यरमया परज्पया
क्षेपकेन व हरेत्त्रिमौर्विकावर्गितेन फलमत्र दित्कालाः ।

Ms. B : 5 a चलांद्भवं 5 d °श्चलकर्ण° 6 b °न्दर्पः 9 b परमया परज्यया

त्रिभयुतखचरस्य वोत्क्रमज्या शरगुणिताऽब्धि[शराब्धि]बुद्धि[८४५४]भक्ता ।
अयनविशिखयोः समान्यदिक्त्वे ऋणधनमम्बरगे फलं दृगाख्यम् ॥ १० ॥

ग्रहभुजगुणवर्जिता त्रिभज्या जिनलव[२४°]मौर्विकयेषुताडिता च ।
त्रिगुणकृतिहृताऽयनेषुकाष्ठासमविषमे तु ऋणं धनं ग्रहेषु ॥ ११ ॥

ग्रहदोर्गुणवर्जिता त्रिभज्या विक्षेपाभिहताऽथवा विभक्ता ।
कृतबाणकृतोरगैः [८४५४] फलं स्यात् प्राग्वद् व्योम्निचरे दृगाख्यलग्नम् ॥ १२ ॥

त्रिभयुग्द्युचरोत्क्रमापमज्या शरघातात्त्रिगुणाप्तमुक्तवद्वा ।
विवरं त्रिगुणोद्धृतं शरघ्नं परमेष्टापमयोर्ग्रहे यथोक्त्या ॥ १३ ॥

परमापमबाणसंहृतिः त्रिगुणाप्ता गुणकः कलादिकः ।
त्रिगुणेषुवधोऽब्धिसायकश्रुतिधी[८४५४]हृद् गुणकोऽथवा भवेत् ॥ १४ ॥
भत्रयाधिकखगोत्क्रमापमज्यागुणौ गुणगुणौ विभजेच्च तौ ।
तीर्थकृल्लव[२४°]गुणत्रिमौर्विकाभ्यां क्रमादुदितवच्च फलं ग्रहे ॥ १५ ॥

---

Text of Ms. A ;

[10] त्रिभयुक्तस्वरचस्य वोत्क्रमज्पा शरगुणिताद्धिवुद्धिरुक्ता
अयनविशिखयोस्सामान्पदिञ्क्त फलमृणमम्छरगोधने मृगाख्पाः
[11] ग्रहभुजगुणवर्जिता त्रिभज्पा जिनलवयोर्विकयेषु गुणाहता च
त्रिगुणकृतिहतायनेषुकाष्टासमविषमत्वज्ञणं ग्रहं धनेषु
[12] ग्रहदोर्गुणवर्जिता त्रिभज्या विज्ञेयाभिहताथवा विभक्ता ।
कृतवाणकृतोरगैः फलं स्पात्प्राग्वद्योम्निवरे मृगाक्षलग्नम्
[13] त्रिभयुग्द्युचरोत्क्रमायमज्पा विक्षेपा शरघातात्त्रिगुणाप्तमुक्तवद्वा
विवरं त्रिगुणोद्धृतं गरघ्नं यरमेष्णुयमयो ग्रहेथथोक्त्या
[14] परमायमवाणसंहृते त्रिगुणाप्तं गुणवत्कलादिकः
त्रिगुणोषुवधोञ्चिसायकश्रुतिधीहृद्गुणकोथवा भवेत् ।
[15] भत्रयाधिकस्वगाः क्रमायमज्यागुणौ गुणगुणौ विभयंजतौ
तीर्थकृल्लवगुणत्रिमौर्विकाभ्पां क्रमादुदितवत्फलं ग्रहे ।

Ms. B : 10 c °दिक्त्वे 11 c °यनेषु° 12 b विक्षेपाभि° 15 b °यजतौ

ज्यौ यमौ गुणहतौ क्रमाद्ग्रहात्त्रिज्यया जिनलव[२४°]ज्यया हृतौ ।
लब्धहीनगुणके यथोक्तवत् खेचरे भवति दृग्विलग्नकम् ॥ १६ ॥

ज्योतिषस्त्विषुगुणः परापमस्वेष्टकापमवियुग्गुणाहतः ।
व्यासभेदजिनभाग[२४°]शिञ्जिनीभ्यां हरेद् गदितवद् ग्रहे फलम् ॥ १७ ॥

[अक्षदृक्कर्मसाधनम्]

विषुवत्प्रभया हतः शरो रवि[१२]भक्तो ह्युदयास्तगे ग्रहे ।
धनदिग्विशिखे क्षयं धनं स्वमृणं याम्यशरे दृशे खगे ॥ १८ ॥

अथवेषुपलज्ययोर्वधाल्लम्बज्याप्तकला यथोक्तवत् ॥ १९ ॥

[स्फुटदृक्कर्मसाधनम्]

अपरं शरतो यदीरितं दृक्कर्म द्युचरे स्फुटं न तत् ।
स्फुटदृग्गणितैक्यकृच्च यत् तद्दृक्कर्म विधास्यतेऽधुना ॥ २० ॥
द्युचरापमधन्वबाणयोर्दिक्साम्ये युतिरन्यथाऽन्तरम् ।
अपमस्फुट उक्तवत्ततो मध्याच्चापमतश्चरासवः ॥ २१ ॥

---

Text of Ms.A :

[16] ज्यौ यमौ गुणहतौ क्रमाद्ग्रहात्त्रिज्या जिनलवज्यया हृतौ
लब्धहीतगुणके यथोक्तवत्स्वेचरे भवति दृग्विलकग्नम्

[17] ज्योतितस्त्रिभगुणः परायमस्वेष्टकायमचियुद्गुणाहतौ
व्यासभेदजिनभागशिज्जिनीत्या हरेद्गदितवद्ग्रहे फलम्

[18] विषुवत्प्रभयाहतः शरौ रविभक्तेत्युदयास्तगे ग्रहे
समदिग्विशिखे क्षये धनं स्वमृणं याम्पशरे दृशे कुजे

[19] अथवेशुपलज्वयोर्वधाल्लम्छज्पप्तकला यथोक्तवत् ।

[20] अयरं शरतो यदीरितं दृत्कूर्म द्युचरे स्फुटं न तम्
स्फुटदृग्गणितैक्यकृच्च यत् तत् । दृत्कुर्म विधास्पतेधुना ।

[21] द्युचरायमुधत्ववाणयोर्दिक्साम्पे द्युतिरत्पथान्तरम् ।
अयमस्फुट उक्तवत्ततो मध्पश्चायमतश्चरासवः

Ms. B : 16 c लघहीन° 18 c क्षपे 20 b दृक्कर्म 20 d दृक्कर्मं

तद्युतिर्विवरमन्यतुल्ययोः काष्ठयोः फलमुदक्शरे क्षयः ।
दक्षिणे स्वमुदयेऽस्तगेऽन्यथा दृग्ग्रहे यदि दिवौकसः स्फुटः ॥ २२ ॥
उदयास्तविलग्नसंज्ञकः

[उदयास्तमयकालसाधनविधयः]

प्राग्भोग्या द्युचराद्रवेर्गताः ।
पश्चाद्विपरीतमुद्गमे प्राणा मध्यगृहोदयैर्युताः ॥ २३ ॥
त्रिंशद्[३०]भजिताः खषड्[६०]हृताः कालांशा घटिकाः षड्[६]द्धृताः ॥ २४ ॥
तेषु निजोक्तदृगंशमहत्सु व्योम्निचरोऽभ्युदितो[ऽल्प]सु नैव ॥ २५ ॥

राशिकलाभिहताः समयांशाः क्षेत्रलवा उदयासुविभक्ताः ।
अर्कखगान्तरभागमहत्सु तेषु खगोऽस्तमितोऽल्पसु दृश्यः ॥ २६ ॥
ऋज्वजुखेटगमोनयुजाप्तं तद्विवरं समयो रविभुक्त्या ॥ २७ ॥

घटिकाद्वितयेन वा विधुर्दृश्योऽर्कान्तरितो यथोक्तवत् ।
सितजीवबुधार्किभूमिजाः त्र्यंशत्र्यंशयुजा हि सार्धया ॥ २८ ॥

---

Text of Ms. A :

[22] तद्युतिर्विपरमत्पत्तुल्पयोः काष्टयोः फलमुदत्करे क्षयः
दक्षिणे स्वमुदयास्तगेत्पथा दृग्ग्रहो यदि दिवौकसः स्फुटः ।

[23] उदयास्तविलग्नं संज्ञकः प्राग्भोम्पा द्युवराद्रवेर्गतः
यश्चाद्विपरीतमुद्गमे प्राणा लध्यगृहोदयाहताः

[24] त्रिशद्भजिताः खलुषड्धृताः कलांशा घटिका ष्वदुद्धृताः ।

[25] तेषुतिजाकंदृगंशयहत्स्पुव्योम्निचरोम्पुदितौसुनैव

[26] राशिकलामिहिताः समयांशाः क्षेत्रलवा उदयासु त्रिभक्ताः ।
अर्कखगान्तरभागमतत्सु तंयुखगास्तोल्पसु दृश्पः

[27] ज्ञज्वजुखेटगमोनपुजाप्तं तद्विवरं समयो रविभुक्त्या

[28] घटिकाद्वितयेन वा विधुदश्योत्कान्तरितो यथोक्तचत्
सितजीववुधार्किभूमिजाः त्र्यंशत्र्यंशयुजादिववया ।

Ms. B : 23 b प्राग्भोग्या° 26 b °विभक्ताः ॥ 26 d तेषु खगा°

नाड्याऽभ्युदयन्ति भार्गवो घटया त्र्यंशयुजा विलोमगः ।
वक्री घटिकाद्वयेन विद् खेगार्कान्तरनाडिका यदा ॥ २९ ॥
वह्न्योऽभ्युदितस्तदा ग्रहः स्वल्पा वाऽस्तमितोऽन्तरासवः ।
भुक्त्यन्तरभाजिता ग्रहे व्यस्ते भुक्तिसमाससंहृताः ॥ ३० ॥
दिवसा उदयस्य कीर्तिता गतगम्या द्युसदोऽस्तगस्य वा ।
समयान्तिकसूर्यखेचरौ कृत्वा निश्चलतान्तमाचरेत् ॥ ३१ ॥

[दृश्यादृश्यादिनिरीक्षणविधिः]

खेचरभ्रमगशङ्कुमस्तके भाङ्गुलेन च धृते दिवौकसः ।
दर्शयेत् क्षितिभुजोऽत्र यन्त्रके ऽदृग्युतिस्थितिदृशोऽन्यदुष्करम् ॥ ३२ ॥

इति श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्वरविरचिते स्वनामसंज्ञिते स्फुटसिद्धान्ते भट्टगोविन्दावतारिते उदयास्तमयाधिकारः षष्ठः ॥ ६ ॥

---

Text of Ms. A :

[29] नाद्याभुदयन्ति भार्गवो घद्या त्र्यंशयुजा विलोमगः
चक्री घटिकाद्वयेन विंस्वेगर्कार्तरनाडिका यदा
[30] छाह्योभ्पुदितस्तदा ग्रहः स्वल्पा अस्तिगतोन्तरासवः
भुक्त्यन्तरभाजिता ग्रहे व्यस्ते भुक्तिसमासंहृताः
[31] दिवस उदयस्प कीर्तितः गतगम्पा द्युसदोस्तगस्प वा
समयन्तिकसूर्यस्वेचरौ कृत्वा निश्चलतान्तमाचरे
[32] स्वेचरभ्रमगशंकुयस्तके भाङ्गुलेमयधृते दिवौकसः
दर्शये क्षितिभुजोत्र यत्रयके दिग्पुतिस्थितिदृश्पोन्पदुष्करम् ॥ ॥

श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्चरविरचिते स्वनामसंज्ञिते स्फुटसिद्धान्ते भट्टगोविन्दावतारिते उदयास्तमयाधिकारष्षष्ठः ॥ ॥

Ms. B ; 29 a नाद्याभ्युदयन्ति

# VII. शृङ्गोन्नत्यधिकारः

## 1. शृङ्गोन्नतिविधिः

### चन्द्रोदयः

[उपोद्घातः]

रविचन्द्रभुजांशभिर्विधोः साध्यः पूर्ववदुद्गमोऽसिते ।
निशि चास्तमयः सितेऽन्यथा नैतत्स्याद्वदनान्तरांशकैः ॥ १ ॥

[चन्द्रोदयास्तकालसाधनम्]

[मासस्य प्रथमचरणे]

उदयेऽह्नि सितेऽर्कचन्द्रयोरुक्तः प्रोक्तवदुद्गमो विधोः ।
सभखण्डविधूणतेजसोर्दिवसान्तेऽस्तमयः क्षपाकृतः ॥ २ ॥
नक्तं वाऽस्तमयः सभार्धयोः स्फुटदृग्विधिनाऽन्तरासवः ।
शीतांशोरसकृत्तदन्तरात् भगणार्धयुतार्कचन्द्रयोः ॥ ३ ॥

[मासस्य द्वितीयचतुर्थचरणयोः]

असितेऽर्कमृगाङ्कयोः सिते षड्गेहाधिकभानुसोमयोः ।
उदयो रजनीद्युशेषतो असकृद्विधिना हिमद्युतेः ॥ ४ ॥

---

Text of Ms. A :

[1] रविचन्द्रहिमांशुभिर्विधोः साध्यः पूर्ववदुद्गमः सिते
निशि चास्वमयंस्सितेन्यथा नैक्याद्वदनोन्तरान्तगैः

[2] उदयेह्नि सितेर्कचंद्रयोर्नोक्तं प्रोक्तवद्वुद्गमो विधोः
सभखण्डविधूम्रतेजसोर्दिनयान्तेस्तमयोः क्षयाकृतः ।

[3] नक्तं वास्तसमयस्सभागयौः स्फुटदृग्विधिनान्तरासवः
शीतांशोरसकृदन्तरात् भदलार्धयुतार्कत्वंद्रयोः

[4] असितेर्कमृगाङ्कयोः सिते षड्गेगाधिकारभानुसोमषोः
उदयौ रजनीद्युशेषतौ असकृद्दृग्विधिना हिमद्युतिः

तपनैणभृतोः सभार्धयोः दिनशेषेऽस्तमयोऽसिते सिते ।
भदलाधिकचन्द्रसूर्ययोः क्षणदाशेष इहैणलक्ष्मणः ॥ ५ ॥

[चन्द्रस्य चालनविधिः असकृत्कर्मविधिश्च]

अवधेर्गतयेयनाडिकागुणिता चन्द्रगतिः खषड्[६०]हृता ।
फलहीनयुतो विधुः पुनः कालो दृग्विधिना स्फुटोऽसकृत् ॥ ६ ॥

[पौर्णिमायां चन्द्रोदयस्वरूपम्]

युतेनर्क्षैः षड्भिर्हरितहरिणा स्पष्टहरिणः
समः सम्पूर्णाङ्गः प्रवरवनितावक्त्रहरिणः ।
उदेत्युच्चैः कान्त्या विदधततमस्कं कुवलयं
रथा[ङ्गा]नां प्रेमद्विषि मुकुलिताब्जं कुवलयम् ॥ ७ ॥

[पौर्णिमायां उदित चन्द्रस्य अस्तमितसूर्यस्य वा स्वरूपम्]

सितपर्वणि सान्ध्यगक्षितावुडुधामनि भदलाग्रसंस्थितौ ।
तपनामृतगू सुहाटकपृथुघण्टाविव शक्रदन्तिनः ॥ ८ ॥

---

Text of Ms. A :

[5] तयनैणभृतोः सभार्धयोर्दिनशेषेस्तमयेसिते सिते
भदलाधिकचंद्रसूर्ययोः क्षणदाशेष इहेणलक्ष्मणः

[6] अवधेर्गतवेयनाडिकागुणिता चंद्रगतिः स्वषद्गता
फलहीनयुतो विधुः पुनः कालो दृग्विधिना स्फुटोसकृत्

[7] युतेनर्क्षे थद्धिर्हरितहरिणा स्पष्टहरिणः
समः सम्पूर्णाङ्गः प्रवरवनितावक्वहरिणः
उदेत्पुश्चैः कान्त्या विदधतमस्कं कुवलपं
रथानां प्रेमद्विषिनुकुलब्दाः कुवलयम्

[8] सितयर्वणि सन्छ्यः कृता वुडुधाम्नो भययाश्चसंतौ
तवनामृतगुसुहाटका पृथुघण्टाविव शुन्पदन्तिनः

Ms. B : 5 a तपनैण° 6 a °तवेप° 6 c °नपुतो 7 a पुतेनर्क्षैष्षद्धिर्हरित°
8 a सितपर्वणि 8 b भयपाचं सं तौ

## चन्द्रच्छाया

[चन्द्रच्छायासाधनकालः]

**स्वल्पकोऽभ्युदयलग्नतोऽधिकः शीतगुर्यदि निजास्तलग्नतः ।**
**[निर्मले दिवि] तदास्य दर्शनं भां विषाणगुरुतां च साधयेत् ॥ ९ ॥**

[स्पष्टे चन्द्रक्रान्तिद्युज्ये]

**तात्कालिकादेणभृतोऽपमज्या चापं स्वविक्षेपवियुक्समेतम् ।**
**भिन्नैकदिक्स्थं शशिनोऽपमोऽयं स्पष्टो द्युजीवाद्यमतोऽर्कवत् स्यात् ॥ १० ॥**

[चन्द्रस्य दिनमान-चरार्धसाधनम्]

**शीतगोरुदयदृग्विलग्नका षड्भयुग् दृगभिधास्तलग्नकम् ।**
**[स्वोदयैर्दलघटीविशेषिता नाडिकास्तिथिमिताश्चरार्धकम्] ॥ ११ ॥[1]**

---

Text of Ms. A :

[9] स्वल्पकोभ्युदयलग्नतोधिकः शीतगुर्यदि निजाख्पुलग्नतिव
तदास्पदर्शने भाविषा (षाणभृगुता च साधयेव ।
तीक्षालिकादेणभृतोयमज्पा चायं स्वविक्षेयवियुक्तमतत्
भिन्नोत्प) (दिक्स्थ शशिनोपमोयं स्पष्टो फजीवाद्यमृतोर्कवत्स्पात्
शीतगोरुदवदृग्विलग्नकात्षड्भयुग्दृ) णभृगुतां व साधयेत् ।

[10] तात्कालिकादेनभृतोपमज्पपावानं स्वविक्षेयवियुक्समेतत्
भिन्नोन्पदिक्स्थं शशिनोपमोयं स्पष्टो द्युजीवाद्ययतोर्कवत्स्पात् ।

[11] शीतगुरुदयदृग्विलग्रका षड्भयुग्मृगभिधास्तलग्रकम्

Ms. B : 9 The bracketed portions do not occur in this ms.
9 d साधयेव । 10 a-b तात्क्षालिकादेणभृतोयमज्पाचापं स्वविक्षेपवियुक्समतत्
10 d °फजीवाद्यमृतोर्कवत्स्यात् । 11 a शीतगोरुदवदृग्विलग्नकात्
b °दृशभिधा° After 11 a-b and before 12 स्वोदयैर्मलघटीविशेषिता
नाडिकास्तिथिमिताश्चरार्धकम् ।

---

1. Vs. 11(c-d) has been reconstructed with the help of Ms. B.

[ग्रहस्य दिनमानम्]

स्फुटभुक्त्यसुसंयुताः सदा खरसाः स्पष्टतरं त्वहर्निशम् ।
द्युचरस्य समीरितं बुधैर्गणितस्कन्धविशेषभाजनैः ॥ १२ ॥

[चन्द्रच्छायासाधनम्]

दिनशेषविधूदयासवैः सहिता रात्रिगतासवोऽप्यलम् ।
रविवन्नरचन्द्रदीपयोर्भा चन्द्रभ्रमेण भुजादि च ॥ १३ ॥

प्राग्लग्नदृक्चन्द्रमसोर्विलग्न[1]सभार्घदृग्रात्रिपयोर्विशेषात् ।
स्वभोदयैरुन्नतजासवो वा प्रभाद्यमेतैरहिमांशुवत्स्यात् ॥ १४ ॥

[पूर्वापरकपालयोः चन्द्रस्य नतनाडीसाधनम्]

स्वेष्टकालकृतमध्यलग्नतः प्राग् विधुः समधिकोऽल्पकोऽपरे ।
अन्तरे द्युदललग्ननाडिकाः प्राग्वदेव नतसंज्ञिकाः तयोः ॥ १५ ॥

---

Text of Ms. A :

[12] स्फुटभुक्त्यसुसंयुताः सदा खरमा स्पष्टतरं त्वहर्निशम्
द्युचरस्य समीरितं वुधैर्गणितस्कन्दविशेषभाजनैः

[13] दिनशेषविधूदयासवः सहिता रात्रिगतासवोप्यलम्
रविवन्नारकर्णदीप्तयोर्भा चंद्रभ्रमेण भुजादि च

[14] प्राग्लग्नदृक्कंद्रमसो विलग्नशभावत्मृग्रात्रिययोरथान्तरः
स्वभोदपैरुन्नतकासवो वा प्रभाद्यमेतैरहिमांशुवत्स्पात् ।

[15] स्वेष्टकालकृतमध्पलग्नतः प्राग्विधुः समधिकोल्पकोयरे
अन्तरे द्युदललग्ननाडिकाः प्राग्वदेव ततसंज्ञिकाः तपोः

Ms. B : 12 b खरसास्यष्ट° c °द्युवरास्फसमीरितं 13 a °विधूघासवस्सहिता
b रात्रिगृता° c रविवन्नर° d °र्भाविन्दध्रमेण
14 a प्राग्लग्नदृक्चंद्रमसौ विलग्न°

---

1. **Ms. B breaks off here.** For the rest of the work Ms. A only has been used.

[चन्द्रस्य स्फुटबिम्बसाधनम्]

शशिशङ्कुधनुर्युतोनितं स्फुटबिम्बार्धकलाभिरुज्ज्वले ।
असिते वियुगन्वितं स्फुटं पक्षे प्रागपरार्धयोः क्रमात् ॥ १६ ॥

[चन्द्रस्य याम्योत्तरवृत्तसंक्रमणकालः]

एवमिष्टसमयप्रसाधिताः शीतगोर्विधिवदुन्नतासवः ।
तद्द्युखण्डसदृशा यदा तदा शीतगुर्द्युदलगो भवत्यसौ ॥ १७ ॥

## चन्द्रशृङ्गोन्नतिः

[बाहुकोटिकर्णसाधनम्]

बाहुमुक्तवदभीष्टकालिकां शीतगोर्दिनकृतश्च साधयेत् ।
तत्समासविवरं भुजः स्फुटो भिन्नतुल्यककुभोर्दिगस्य तु ॥ १८ ॥
अन्तरेऽर्कभुजतो विपर्ययादिन्दुबाहुककुभन्यथा भवेत् ।
दृग्गुणस्वभुजवर्गयोः क्रमादन्तरस्य पदमिन्दुभास्वतोः ॥ १९ ॥
तत्समासविवरं कपालयोराद्य अन्यसमदिक्समुत्थयोः ।
चन्द्रतिग्मकरशङ्कुजीवयोरन्तरैक्यमपरस्त्वहर्निशोः ॥ २० ॥

---

Text of Ms. A :

[16] शशिशंकुधनुर्यतोनितं स्फुटविवाधकलाभिरुज्ज्वले
अफसिते वियुगन्वितं स्फुटं यक्षे प्रागपरार्धयोः क्रमात्
[17] पवमिष्टसमयप्रसाधिताः शीतगोर्विधिवदुन्नतासवः
तद्द्युस्वण्डसदृशा यदा तदा शीतगुर्द्युदलगो भवत्पसौ
[18] वाहुयुक्तवदभीष्टकालिका छीतगोर्दिनकृतः च साधयेत्
उन्ममासविवरं भुजस्फुये भिन्नतुल्पककुभोर्दिशस्प नु
[19] अन्तरेर्के भुजजे विपर्ययाद्विम्दुवाहुककुभन्पथा भवेत्
दग्गुणस्खभुजं वर्गयोः क्रमादन्तरस्प वदमिन्दुभास्वतोः
[20] तत्समासविवरं कलाययोराद्य इन्द्रकमिदिक्तमुत्थयोः
चंद्रतिग्मकरशंकुजीवयोरन्तरैक्यमपरस्त्वडर्निशोः ।

अपरेतरवर्गसंयुतेः पदमग्रेन्दुभुजाग्रमध्यगा ।
अग्राभुजवर्गयोगजं मूलं कर्ण इनेन्दुमध्यगः ॥ २१ ॥

वीनसोमदलदोर्गुणोऽथवा दृग्[२]गुणः श्रवणकोऽन्तरं तयोः ।
तद्भुजाकृतिविशेषतः पदं कोटिरेणधरदोर्मुखान्तरम् ॥ २२ ॥

[सितसाधनम्]

वीनचन्द्रविपरीतशिञ्जिनी तज्ज्यया त्रिभगुणो युतः त्रिभात् ।
चन्द्रबिम्बदलसंगुणोद्धृतः त्रिज्यया सितमितिं जगुर्दिवा ॥ २३ ॥
विरवीन्दुदलांशसंगुणं दलमिन्दोः शरवेद[४५]हृत्सितम् ।
नवतेर्भदलाच्च्युतं निशि सन्ध्यायां सितयोगखण्डजम् ॥ २४ ॥

[परिलेखसूत्रसाधनम्]

[प्रथमविधिः]

सितचन्द्रदलान्तरं हृतिस्तद्भक्तं शशिखण्डवर्गितम् ।
फलयुग्घृतिरर्धिता भवेत्सूत्रं तत्परिलेखसंज्ञितम् ॥ २५ ॥

---

Text of Ms. A :

[21] अपरेतरवर्गसंयुतेः यादमग्रेन्दुभुजाग्रमध्पगा
अग्रभिुजवर्गयोगजं मूलं कर्ण इनेन्दुमध्पगः
[22] वीनसोमदलदोर्गुणो वा दृगुणो श्रवणकोन्तर तयोः
तद्भुजाकृतिविशेषतः यदं कोटिरेणधरदोन्मुखान्नरम्
[23] वीनचंद्रविपरीतशिञ्जिनी त्रिज्पाया त्रिभगुणो युतं त्रिभाक्
चंद्रविम्छदलसंगुणोकृतस्त्रिज्पया सितमितं जगुर्दिवा
[24] विरवीन्दुदलांशुसंगुणं दलमिन्दुः शरस्वेदहृत्सितम्
तवतेर्भदलाच्च्युतं निशि सध्यायां सितयोगस्वण्डजम् ।
[25] सितवंद्रजलान्तटं हृतिस्ततिस्तद्भक्तं शशिस्तण्डवर्गितम्
फलयुत्कृतिरन्विता भवेत्स्तुतं तत्परिलेखसंज्ञितम्

सितशशिपरिमाणार्धान्तरस्येह वर्गः
शशिमितिदलवर्गस्तद्द्वियोगस्य खण्डः ।
शशिपरिमितिभेदश्चेतदूरेण [भ]क्तो
भवति लिखनसूत्रं शृंगसंस्थान इन्दोः ॥ २६ ॥

[द्वितीयविधिः]

शुक्लमानशशिमानभेदयोरन्तरेण शशिभेदमाहतम् ।
दृक्[२]समं हरनिशाकरार्धयोरन्तरद्विगतसंयुतं हरेत् ॥ २७ ॥
अन्तरेण कर[२]संगुणेन यल्लभ्यते तदिह वाऽपि सूत्रकम् ।

[तृतीयविधिः]

मानपादकृतिरुद्धृता युता शुक्लमामितिदलान्तरेण वा ॥ २८ ॥

[अङ्गुलीकरणम्]

भुजकोटिकर्णमितयः स्वेष्टविभक्ताः स्फुटाङ्गुलानि स्युः ।
अङ्गुललिप्ताभक्ताः शशिसितपरिलेखसूत्रकलाः ॥ २९ ॥

---

Text of Ms. A :

[26] सितशशिपरमाणार्धान्तरस्येह वर्गः
शशिमितिदलयोगे सन्नियोगावतंसौ
शशिपरिमितिदलयोगे सन्नियोगावतंसौ
शशियरिमितिभेदश्चेतदूरेण क्वौ
भवति लिखनसूत्रं शृंगसंस्थान इक्षोः ।

[27] शुक्लमानशशिमानभेदयोरन्तरेण शशिदभेमाहृतम्
द्विसमन्नरनिशाकरार्धयोरन्तरं द्विगतसंयुतं हरत्

[28] अन्तरेण करसद्भुङ्गुणेन पल्लभ्पते तदिह वापि सूत्रकम्
मानपादकृतिरुद्धृता युता शुक्लमापितिदलान्तरेण वा

[29] भुजकोटिकेटिकर्णमितयः स्वेष्टविभक्ताः स्फुटाङ्गुलानि स्युः
अङ्गुललिप्ताभक्ता शशिमितयरिलेस्वसूत्रकलाः

## चन्द्रशृङ्गोन्नतिपरिलेखः

[परिलेखविधिः प्रथमः]

**बिन्दुं परिकल्प्यार्कं तस्माद्बाहुं स्वदिङ्मुखं देयम् ।**
**तन्मुखतोऽग्रां प्राचीं सिते प्रतीचीं नयेत् कृष्णे ॥ ३० ॥**
**तच्चिह्नयुजं कर्णं कर्णाग्रासंयुतौ लिखेच्चन्द्रम् ।**
**शुक्ले परतः शुक्लं प्राक् कृष्णे कर्णसूत्रवशात् ॥ ३१ ॥**
**सितशृङ्गोन्नतिसिद्ध्यै विलिखेत् परिलेखसूत्रमानेन ।**
**शुक्ले मानार्धसमं वाऽर्धजीवया [समं] शुक्लम् ॥ ३२ ॥**

[परिलेखविधिः द्वितीयः]

**अथवोदयास्तलग्नस्वोदयजीवेन्दुबाहुयुतिविवरम् ।**
**ग्रहयुतिवद्दिक्कभुजः कोटिस्तात्कालिको विधुना ॥ ३३ ॥**
**तद्भुजकृतियुतिमूलं श्रुतिरिष्टेनावर्तनं एषाम् ।**
**वीनेन्द्वंशाः शुक्लं सितेऽसिते भार्धवर्जिताः कृष्णम् ॥ ३४ ॥**

---

Text of Ms. A :

[30] छन्दुं परिकल्प्यार्कं तस्माद्वाहुं स्वदिङ्मुस्वा देयात्
तन्मुखतोग्रां प्राचीं सिते प्रतीचीन्तयेत् कृष्णो
[31] तच्चिह्ले युजकर्णं कर्णावासंयुतौ लिखेच्चंद्रम् ।
शुक्ले परतः शुक्लं प्रान्कृष्णे कर्णसूत्रवशात्
[32] सितशृङ्गोन्नतिसिद्ध्यै विलिस्वेत्परिलेयसूत्रमानेन
शुक्ले मानार्धसममार्धजीयया शुक्लम् ।
[Between सितशृङ्गोन्नतिसि and द्ध्यै the ms. has °ते प्रतीचन्तयेत् कृष्णे । तच्चिह्ले युजकर्णं कर्णं वा संयु । which is repetition of 30d-31b by oversight.]
[33] अथवोदयास्तलग्रस्त्रौदलजीवेन्दुवाहुयुतिविवरम्
ग्रहपुतिवद्दित्कभुजकोटिस्तात्कालिकी विधुना
[34] तद्भुजकृतियुतिमूलं श्रुतिरिष्टेनापवर्तनं येषाम् ।
वेमेन्द्वंशाः शुक्रं सितेसिते भारवर्जिताः कृष्णम्

चन्द्राङ्गुलबिम्बगुणं खधीन्दु[१८०]भक्तं तदङ्गुलानि स्युः ।
निजदिशि बाहुः चिह्नात्तदग्रतः प्राङ्मुखी कोटिः ।। ३५ ।।
शुक्लेऽसिते प्रतीच्यां कर्णः प्राग्वदग्र[द्वय]युतिगविधुः ।
कर्णस्तत्प्रागपरे तन्मत्स्याद्दक्षिणोदीच्यौ ।। ३६ ।।
श्रुतिसूत्रे परभागात् सितमसितं प्राङ्मुखं सितासितयोः ।
तद्याम्योत्तरबिन्दुत्रयभित्परिलेखनं तिमियुगेन ।। ३७ ।।

[परिलेखविधिः तृतीयः]

वोदयलग्नेन्द्वोः प्रागपरकपालेऽस्तलग्नहरिणभृतोः ।
क्रान्त्यन्तरसंयोगः समान्यककुभोः ककुप्प्राग्वत् ।। ३८ ।।
शशिभाश्रुत्यक्षश्रुतिगुणितः सूर्या[१२]हतत्रिगुणभक्तः ।
अथवेन्दुभाश्रुतिघ्नो निजावलम्बज्यया भक्तः ।। ३९ ।।
फलपलभायुतिविवरं लग्नाद्याम्योत्तरे विधौ बाहुः ।
द्वादशिकाऽग्रा कर्णो भुजाग्रयोर्वर्गयुतिमूलम् ।। ४० ।।

---

Text of Ms. A :

[35] वंद्राङ्गुलविम्छगुणं विधेन्दुभक्त तदङ्गुल्वानि स्पुः
निजदिशि वाहुश्चिह्नात्तदग्रेतः प्राङ्मुखी कोटिः

[36] शुक्लसिते प्रतीवी कर्णः प्राग्वदग्रयुतिगविधुः
कर्णस्तत्प्रागयरे तन्मनाग्दक्षिणोदीच्पौ

[37] श्रुतिसूत्रे परभागात्सितासितं प्राङ्मुखं सितासितयोः
तद्याम्पोतुरविंदुत्वयमित्परिलेखनात्तिमियुगेन

[38] वोदयलग्नोर्केन्द्वोः प्रागयरकपालेः नुलग्रहरिणमृत्पोः
क्रान्त्पन्तरसंयोगः सामान्पककुभोः ककुप्प्राग्वत् ।

[39] शशिभाम्प्रुत्पक्षश्रुतिगुणिताः सूर्यतस्त्रिगुणभक्तः
अथवेन्दुमाश्रुतिघ्नो निजावलम्छज्पया भक्तः

[40] फलयलभायुतिविवरं लग्नाद्याम्पोतुरो वेधौ वाहु
द्वादशिकाग्रा कर्णौ भुजाग्रयोर्वर्गयुतेर्मूलम्

रविरहितेन्दुर्द्विगुणः शुक्लमजादौ विशोध्य जूकादौ ।
तत्संकृतेः [२४] सितं स्यादनुष्णगोर्द्वादशाङ्गुले बिम्बे ॥ ४१ ॥
परिलेखः पूर्वोक्त्या क्षितिपटपट्टादिषूक्तवद्वाऽतः ।
असितविहीनं बिम्बं सितमसि[तं सि]तविहीनं तत् ॥ ४२ ॥

[परिलेखविधिश्चतुर्थः]

सिद्धाशे वेन्दुमिते केन्द्रात्प्राक् प्राङ्मुखीं न्यसेत् कोटिम् ।
पश्चादपराभिमुखीं तदग्रतो व्यस्तदिङ्मुखं बाहुम् ॥ ४३ ॥
तन्मुखशशिकेन्द्रस्पृक्कर्णः पूर्वापरेऽत एव विधौ ।
तत्तिमितः परिशेषे प्रोक्तवदन्यत् सितासितयोः ॥ ४४ ॥
श्रुतिवृत्तमध्यसंस्थे चन्द्रे वा प्रोक्तवत्कोटिः ।
बाहुस्तदग्रतोऽतः कर्णः प्राग्वद्विधिवदन्यत् ॥ ४५ ॥

[परिलेखविधिः पञ्चमः]

वेन्दुमिते सिद्धाशे विधु[द]लगुणितः स्वकर्णहृद्बाहुः ।
पश्चादपरकपाले व्यस्तदिशि प्राग्यथायातः ॥ ४६ ॥

---

Text of Ms. A :

[41] रविरहितैर्द्वेन्द्विगुणः शुक्लमेजाद्वौदौ विशेद्य जूकादौ
तत्संकृतैः सितं स्पादनुष्णगौर्द्वादशाङ्गुले विम्छौ

[42] परिलेखः प्रवक्त्या क्षितियटयट्टादिषूक्तवद्यतः
असितविहीतं विम्छं सित्तमसितविहीनं तत्

[43] सिद्धावेशेन्दुमतौ केन्द्रात्प्राङमुखीं न्पशेत्कोटिम्
यश्चादयराभिमुखीन्पदग्रेतोत्पतः तदिङ्मुखं वाहुमु

[44] तत्मुखशशिकेन्द्रस्पृत्ककर्णः यूर्वापरेप्तपव विधौ
तत्रिमितः यरिशेषे प्रोक्तवदन्पत्सितासितयोः

[45] श्रुतिवृत्तयोः मछ्पसंस्थे चंद्रे वा प्रोक्तवत्कोटिः
वाहुः तदग्रतोतः कर्णः प्राग्वद्विधिवदन्पत्

[46] बेन्द्रमिते सिद्द्वांशे विधुलगुणितः स्वकर्णहृट्वाहुः
यश्चादयरकयाले व्पस्तदिशि प्राग्पथायतः

सः पश्चिमाद् वलनवद्देयः कर्णानुगे भुजासूत्रे ।
पश्चाद्भागाच्छुक्लं शुक्ले कृष्णेऽसितं देयम् ॥ ४७ ॥
तद्याम्योत्तरवलयाग्रमीनयुगमध्यसूत्रयोः सङ्गात् ।
परिलेखः सितशृङ्गोन्नतिसिद्ध्यर्थं हरिणभर्तुः ॥ ४८ ॥

[शृङ्गोन्नतिः]

दोर्दिशि नतं विशिखं समुन्नतं तिग्मतेजसः ककुभि ।
शुक्ले विम्बार्धसमे शशभृल्लाटीलला[टतट]तुल्यः ॥ ४९ ॥
उन्नतमुदेति पूर्वं विषाणमस्तं समेति तत्पश्चात् ।
अविकचकेतककोटौ मधुकरसङ्गजश्रियं दधानमिव ॥ ५० ॥

[चन्द्रस्य प्रथमकला]

स्मरकोदण्डलतेव प्रथमकला दृष्टिमेति तुहिनांशोः ।
विभ्रन्ती शुभ्राभासुभ्रूभ्रूविभ्रमाभ्रान्तिम् ॥ ५१ ॥

परिलेखविधिः पञ्चमः

[इति शृङ्गोन्नतिविधिः प्रथमः]

---

Text of Ms. A :

[47] सा यश्चिमावलेनवछेषाः कणानुगे भुजासूत्रे
यश्चाद्भागाछुक्लं शुक्ले कृष्णे सितं देयम्

[48] तद्याम्पोतुरवलनाग्रामीनयुगमध्पसूत्रयोः सङ्गात्
परिलेखा सितशृङ्गोन्नतिसाध्पर्धं हरिणधातुः

[49] दोर्दिशि नतं विशिखं समुन्नतं तिग्मतेजसः ककुभि
शुक्ले विम्छार्धसमे शशभृल्लाटीललातुल्यः

[50] उन्नतमुदेति यूर्वं विषाणयस्तं समेति तत्पश्चात्
अविकचकेतुककोठोन्मधुकरसङ्ग‒श्रियं दधानमिव

[51] स्मरकोदण्डतलेव प्रथकला दृत्वमेति तुहिनांशोः
विभ्रन्ती शुभ्राभासुभ्रूभ्रूविभ्रमाभ्रान्तिम् ॥ ॥

परिलेखविधिः पंचमः ॥ ॥

## 2. प्रश्नविधिः

प्रतिदिनमिन्दोः शुक्लं तदुद[य]कालं तदस्तकालं च ।
बहुधा परिलेखविधिं प्रतिक्षणं शृङ्गसंस्थानम् ॥ १ ॥
विलिखति पटेऽथ पट्टे कुड्यादौ वा विधूदयज्ञः सः ।

प्रथमोदये हिमांशुं ग्रहं ग्रहयुतिं द्वयोरथवा ॥ २ ॥
ग्रस्तमिनं चन्द्रं वा वंशाग्रे दर्शयेदपरदेशात् ।
दर्पणतैलाम्बुगतं योऽसौ ब्रह्मा नमस्तस्मै ॥ ३ ॥

प्रश्नविधिः द्वितीयः ।

इति श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्वरविरचिते स्वनामसंज्ञिते स्फुटसिद्धान्ते
भट्टगोविन्दावतारिते शृङ्गोन्नत्यधिकारः सप्तमः ॥ ७ ॥

---

Text of Ms. A :

[1] प्रतिदितमिन्दोः शुक्लं तदुदकालं तदस्तकालं च
बहुधा परिलेखविधिप्रतिक्षणं शृङ्गसंस्थानम् ।

[2] लितिखति यदेथ यट्टे कुद्यादौ वा विधूदयज्ञः सः ।
प्रथमोदये हिमांशुं ग्रहं ग्रहयुतिर्द्वयोरथवा

[3] ग्रस्तमिनं चंद्रं वा वंशाग्रे दर्शयोदयरवेशात्
दर्यणतैलाम्छुगतो योस्नौ व्रह्मा नमः तस्मै ।

प्रश्नविधि द्वितीयः ॥ ॥

श्रीमदानन्दपुरीयभट्टमदत्तसुतोवटेश्वरविचिते स्वनामसंज्ञिते स्फुटप्रसिद्धान्ते
मट्टगोविन्दावतारिते शृङ्गोन्नत्पथिकारस्सप्तमः ॥ ॥

# VIII. समागमाधिकारः

## 1. ग्रहयुतिविधिः

### कदम्बप्रोतीया युतिः

[युतिकालिकग्रहसाधनम्]

भुक्तयन्तरेण विभजेद् ग्रहान्तरं वक्रिणोर्युतिर्व्यस्ता ।
प्रतिलोमे चैकस्मिन् महति च येयाऽल्पके याता ॥ १ ॥
दिनगुणनिजगतिलिप्ताः स्वमृणं ग्रहयोः समैष्यगतयोगे ।
वक्रगतेर्विपरीतं तुल्यौ भवनादि विकलान्तौ ॥ २ ॥

अथवा निजगतिगुणितं ग्रहान्तरं गतिविशेषसम्भक्तम् ।
गतियोगेन विलोमे प्राप्तकलाभिः समौ प्राग्वत् ॥ ३ ॥

[ग्रहाणां मानलिप्ताः]

शर[५]दिक्[१०]तिथि[१५]नख[२०]तत्त्वैः[२५] शशिकर्णगुणैस्त्रिमौर्विका भक्ताः ।
त्रिदश[३३]गुणाः सितगुरुबुधशन्यसृजां मानलिप्ताः स्युः ॥ ४ ॥

---

Text of Ms. A :

[1] भुक्त्यन्तरेण विभजेद् गह्यन्तरं वक्रिणोर्युतिर्व्यस्ता
प्रतिलोमे चैकस्मिन्महति च येयाल्पके याता

[2] दिनगुणनिजगतिलिप्ताः स्वमृणं ग्रहयोस्समेष्यगतियोगो
वक्रगतेर्विपरीतं तुल्पौ भवनादि विकलान्तो

[3] अथवा निजगतिगुणितं ग्रहान्तरं गतिविशेषसंभक्तम्
गतियोमन विलोमे प्राप्तकलाभिस्समो प्राग्वत् ॥

[4] शरदिक्तिथिनखन्वैश्चलकर्णगुणोस्त्रिमौर्विकामक्ता ।
त्रिदशगुणो सितगुरुवुधशन्पसृजां मानलिप्ताः स्पुः

[युतिकाले ग्रहान्तरम्]

मन्दस्फुटाद्द्विचरात्तत्कालभवात्स्वपातयुक्ताज्ज्या ।
निजबाणगुणा भक्ता स्वशीघ्रकर्णेन विक्षेपः ॥ ५ ॥
स[म]भिन्नदिशोः शरयोर्विवरैक्यं खेचरान्तरं ज्ञेयम् ।
दिक्छरयोगे शरवद्दिगन्यथाऽनल्पबाणस्य ॥ ६ ॥

[भेदयुतिः]

बिम्बैक्यार्धाच्छुद्धे विवरे भेदोऽत्र भेदकोऽधःस्थः ।
इन्दुग्रहणवदखिलः स्थित्यर्धाद्यो विधिः कार्यः ॥ ७ ॥

[चन्द्रविभेदः]

चन्द्रविभेदेऽवनतिर्विधू[द]याल्लम्बनं च संसाध्यम् ।
भेदे वेष्टग्रहयोर्निजोदयाल्लम्बनावनती ॥ ८ ॥

[युतिकालेऽक्षदृक्कर्म]

दृष्टिफलं स्वनतघ्नं स्वदिनार्धहृतं समग्रहे प्राग्वत् ।
विवरे ह्युत्तरखचरे सौम्यविधिर्दक्षिणे याम्यः ॥ ९ ॥

---

Text of Ms. A :

[5] मन्दस्फुटाद्द्विविवरात्तत्कालभवात्स्वायातयुक्ताज्ज्यां
निजवाणगुणा भक्ता । त्रिस्वशीघ्रकर्णनविक्षेयः

[6] सभिन्नदिशोः शरयोर्विवरैक्यखेवरान्तरं क्षेपः
दित्कुरयोगे शरवद्विष्पस्तात्पवाणस्प

[7] विम्छैक्यार्धाछिुद्धो विवरे भेदोत्र भेदकोधःस्थः
इन्दुग्रहणवदखिलस्तित्पर्धाद्यो विधिः कार्यः

[8] चंद्रविभेदेवनतिर्विधूपालम्छनं संसाध्यम्
भेदवेष्टग्रहयोर्निजोदयाल्लम्छनाद्वतती

[9] दृष्टिफलं स्वनतघ्नं स्वदिनार्धहृतं समग्रहे प्राग्वत्
विवरो द्योत्तरखचरे सौम्पविधिर्दक्षिणे याम्पः

[कलाकरयोः सम्बन्धः]

उदयास्तयोः कलानां द्वासप्तत्या [७२] करोऽथ मध्याह्ने ।
षट्सहितया नवत्या [९०+६] तदन्तरे चानुपातेन ॥ १० ॥

## समप्रोतीया युतिः

[समप्रोतीययुत्यध्ययने हेतुः]

त्वष्ट्रास्वातिवदुदये दृग्योगे यद्यदन्यथाऽस्तमये ।
तत्तत् स्याद् दिविचरयोर्दृग्गणितैक्यं ब्रवीम्यस्मात् ॥ ११ ॥

[समप्रोतीययुतिकालसाधनम्]

अधिकदिनोदितगुणितादूनदिनादधिकवासराप्तं यत् ।
तच्चोनदिनाभ्युदितादधिकं भावी गतोऽन्यथा योगः ॥ १२ ॥
तद्विवरमाद्यमेवं द्वितीयमपि चेष्टनाडिकाभिः स्यात् ।
गतयोरन्तरघट्याऽन्यथा समासेन भाजयेत् प्रथमम् ॥ १३ ॥
इष्टघटीसंगुणितं प्रथमवशादाप्तघटिकाभिः ।
भूताऽथ भाविनी वा समकलकाला[द]भ्युतिः ग्रहयोः ॥ १४ ॥

**ग्रहयुतिविधिः प्रथमः**

---

Text of Ms. A :

[10] उदयास्तयोः कलानां द्वासप्तत्पा करोथ मध्याह्ने
म्रट्सहिताया वनत्पा तदन्तरे वानुयातेन

[11] त्वाष्ट्रास्वातिवदुदये दृग्पोगे यद्यदन्पथास्तमये
यद्यत्स्पाद्दिविचरयोर्दृगातिरैक्यं व्रवीम्पस्सात्

[12] अधिकगुणोदिनोदितगुणितादधिकवासराप्तं पत्
तच्चोनदिनाभ्पुदितादधिकं भावे गतोन्पथा योगः

[13] तद्विवरमाद्यमेवं द्वितीयमयि देष्टनाडिकाभिः स्पात्
गतयोयान्तरयुत्पान्पथा सस्पसेन भाजयेत्प्रथमात्

[14] इष्टघटीसंगुणितं प्रथमवशादाप्तघटिकाभिः
भुताथ भाविनी वा समकलकालाम्पुतिः ग्रह्योः ।

ग्रहयुतिविधिः द्यथप्तः ।

## 2. भग्रहयुत्यादिविधिः

[नक्षत्रध्रुवकाः]

मेषेऽष्ट[८]नखै[२०]रंशै-
र्गवि विदलैस्तै[७½,१९½]स्त्रि[३]सप्त[७]भिर्जितुमे ।
त्र्य[३]ष्टि[१६]धृति[१८]भिः कुलीरे
वसु[८]भैः[२७] सिंहे जलधि[४]नखैः[२०] षष्ठे ॥ १ ॥
राम[३]धृति[१८]भिस्तुलायां
द्वी[२]न्द्रा[१४]तिधृति[१९ भि]रलिनि कु[१]मनु[१४]नख[२०]भैः[२७]
धनुषीभ[८]नखै[२०]र्मकरे
विंशति[२०]त्रिघनै[२७]र्घटे नग[७]त्रिंशैः[३०] ॥ २ ॥
मीनेऽश्विन्यादीनि द्युचरैर्योगं व्रजन्ति

[अगस्त्यलुब्धकध्रुवकौ]

जितुमांशे ।

सप्तविंशे[२७]ऽगस्त्यः तद्विंशे [२०] लुब्धकध्रुवकः ॥ ३ ॥

[योगः भावी गतो वा]

ध्रुवकादूनेऽभ्यधिके द्युचरे भावी गतो योगः ।
अन्यद् ग्रहसंयुतिवद्

---

Text of Ms. A :

[1] मेषेष्टनखैरेशैर्गवि विदलैस्तैस्त्रिसप्तभिर्जित्तमे
त्र्यष्टिधृतिभिः कुलीरे वसुभैः सिंहे जलधितसैः षष्टे

[2] रामधृतिभिस्तुलायां द्वीन्द्रातिधृतिरलिनि क्तमनुनखैः
धनुषीप्रमानरैवर्मकरै विश्वात्रिद्वनैर्घटे नगत्रिशैः

[3] मीनेश्विन्पादीनि द्यत्वरैर्योगं व्रजन्ति निजमांशे
सप्तविंशोगस्त्पाष्वद्विंशे लुब्धकध्रुवकः

[4] ध्रुवकादूनेभ्पधिके द्युवरो भावी गतो ग्रहयोगः
अभ्पद्ग्रहसंयुतिवद् ध्रुवकक्कान्त्पतः क्षेयाः

[नक्षत्रक्षेपाः]

ध्रुवकक्रान्त्यन्ततः क्षेपाः ॥ ४ ॥

दश [१०] सूर्याः [१२] पञ्च [५] शराः [५]
दिशः [१०] शिवाः [११] षड् [६] वियन् [०] नगाः [७] शून्यम् [०] ।
सूर्या [१२] विश्वे[१३]शौ[११] द्वौ [२]
सप्तत्रिंशद् [३७] भुजौ [२] रामाः [३] ॥ ५ ॥
वेदा [४] नव [९] षड् [६] ऋतवः [६]
कृतर्तवः [६४] खाग्नयो [३०] ऽङ्गरामाः [३६] खम् [०] ।
तीर्थकृतः [२४] षड्यमलाः [२६] ख[०]मंशका अश्विनादीनाम् ॥ ६ ॥
ब्राह्मैन्द्रमूलमैत्राग्नेयानां खाग्नयः [३०] कलाः खकृताः [४०] ।
वैश्वापविशाखानां खभुजा[२०]स्त्वाष्ट्रस्य संशोध्याः ॥ ७ ॥
त्रीणि ब्राह्मात् सार्पं द्वितयं हस्ताद् द्विदैवतात् षट् ।
एतानि दक्षिणदिशि विक्षिप्तान्यन्यानि चोत्तरतः ॥ ८ ॥

[व्याधागस्त्ययोः क्षेपौ]

याम्ये क्षिप्तो व्याधः खकृतै[४०]रंशैः नगाचलै[७७]श्च मुनिः ।

[भेदयुतिः]

बिम्बैक्यदलाच्छुद्धे समविक्षेपान्तरे भेदः ॥ ९ ॥

---

Text of Ms. A :

[5] दश सूर्याः पंच शरा दिशः शिव ष्वह्वियन्नगाः शून्यम्
सूर्या विश्वेष्टौ द्वौ सप्तत्रिंशद् भुजो रामः
[6] वेदा नव षट्तवः कृतन्नवः स्वाग्रयोगरामः स्वम्
तीथकृतष्वत्धमलाः स्वमंशका आश्विनादीनाम्
[7] व्राह्मैव्दमूलमैत्राग्नेयानां खाग्नयः कलाः स्वकृताः
वैश्चायिविशास्वानां स्वभुजस्त्पाष्ट्रम्प संशोध्पः ।
[8] त्रीणि व्रह्मात्सार्यं द्वितीयं हस्ताद्विघदैवता अवद्व
पतान्नि दक्षिणदिशौ क्षिप्तान्पन्पानि वोतुरतः
[9] याम्पे क्षिप्तो व्याधः खकृतैरंशैः तगाचलैश्च मुनिः
छिम्वैकदलाछुद्वे समदिक्षेयान्तरे भेदः

Note. Vs. 8 is exactly the same as *KK* (=*Khaṇḍakhādyaka*), I, ix. 13.

[रोहिणीशकटभेदः]

**गवि सप्तदशे [१७] भागे याम्यः सार्धां[१½]शको यस्य ।**
**विक्षेपो रोहिण्या भिनत्ति शकटं दिविचरोऽसौ ॥ १० ॥**

[चन्द्रेण रोहिणीयोगताराभेदः]

**छादयति योगतारां हिमगुर्याम्येन परमविक्षिप्तः ॥ ११ ॥**

[नक्षत्राणां तारासंख्या]

**गुण[३]शिखि[३]षडि[६]षु[५]शिखि[३ कु१]कृत[४]-**
**गुणा[३]ङ्ग[६]शर[५]दृग्[२]भुजे[२]षु[५]कु[१]कु[१]वेदाः[४] ।**
**कृत[४]गुण[३]शिवा[११]क्षि[२]शिखि[३]पुं[३]-**
**गुण[३]कृत[४]शत[१००]यम[२]यमल[२]दन्ताः[३२] ॥ १२ ॥**
**साभिजितं धिष्ण्यानां तारासंख्येयमश्विनादीनाम् ।**

[योगतारालक्षणम्]

**ज्ञेयाऽत्र योगतारा महीयसी सर्वतारासु ॥ १३ ॥**

[नक्षत्राणामाकृतयः]

**हयमुख-भग-क्षुर-शकट-हरिणशिरो-रत्न-मन्दिरे-ष्व-रिणाम् ।**
**भित्तेः शय्या-मञ्चक-कर-मुक्ताफ[ल]-प्रवालानाम् ॥ १४ ॥**

---

Text of Ms. A :

[10] गवि सप्तदशे भागे याम्पं साधांशकं । यस्प
विक्षेयो रोहिण्या भिनत्ति शकटं दिविचरोसौ ।

[11] छादेयति योगान्तरां हिमगुर्योर्म्येन परिविक्षिप्तः

[12] गुणशिखिषडिषुशिखिकृत्तगुणागशरदृग्भुजेषुक्तक्तवेदः
कृतगुणशिवाष्टिशिखियुंगुणकृतशतपपमयमलादन्ताः

[13] साभिजितां धिष्ण्पानां तारासंख्पेयमश्चिनादीनाम्
ज्ञेयात्र ये । गतारा महीयसी सर्वतारासु ॥ ॥

[14] हयमुखभगक्षुरशकटहरिणशिरोरत्नमन्दिरेष्वरिणाम्
भित्तेः शयायंवककरमुक्ताफप्रवालानाम्

तोरण-वलि-कुण्डल-के[सरिलाङ्गूल-शय्या-गजरदानाम् ।
स्तम्बेरमकर्ण-त्रयचरण-पटह-वलय-मञ्चानाम्] ॥ १५ ॥
पर्यङ्क-मृदङ्गकयोः सदृशानि च भान्यशिवम्यादीनि ।

[ध्रुवतारा]

तिम्याकृतितारााणां ध्रुवतारा तनुतारा मध्ये ॥ १६ ॥

[नक्षत्रोदयास्तकाले उदयलग्नम्]

अपमः शशिवद् ध्रुवकाद् ध्रुवकक्षेपोनसंयुतः स्पष्टः ।
मध्यस्फुटापमाद्यच्चरासवस्तद्युतिविशेषः ॥ १७ ॥
भिन्नैकदिशोः स्पष्टाश्चरासवो भोदयांस्त्यजेत्तेभ्यः ।
उत्क्रमतः सौम्येभ्यो याम्येभ्योऽव्यत्ययेन फलम् ॥ १८ ॥
क्षयं धनं प्रागपरे स्वर्णं षड्भान्विते विलग्ने स्तः ।

[भानां दृश्यादृश्यत्वम्]

स्वेन्द्रां[१४]शाप्तभोदयफलयुक्तोदयलग्नेन तुल्येऽर्के ॥ १९ ॥
भानामुदयोऽस्तमयः स्वफलभखण्डोनितास्तलग्नसमे ।
अस्तोदयलग्नेऽल्पे भमदृश्यमतोऽन्यथा दृश्यम् ॥ २० ॥

---

Text of Ms. A :

[15] तोरणवलिकुण्डलके

[16] पर्यङ्कमृदङ्गकयोः सदृशानि च मात्पश्चिन्पादीनिः
तिम्पाकृतितारााणां ध्रुवतारा तनुतारा मध्पे

[17] अयमः शशिवद्ध्रुवका ध्रुवकक्षेयोनसंयुतस्स्पष्टः
मध्पस्वुटायमाध्पंवरासवस्तद्युतिविशेषः

[18] भिन्नैकदेशोः स्पष्टाश्चरासवो भोभयात्पज्पेत्तेभ्पः
तत्क्रमतः सौम्पैभ्पो यामेभ्पोत्पपेन फलम्

[19] क्षपवृद्धी प्रागपरे – –णं भावान्वितं विलग्ते स्तः
स्वेन्द्रप्तलोदयफलयुक्तोदयलग्ने तुल्येर्के

[20] भानामुदयास्तमये स्वेफलभस्वण्डोनितास्तुलग्नसमे ।
अस्तोदयलग्ने – भमदृश्यमतोन्यथा दृश्यम्

[भानामस्तदिवसाः]

अस्तार्कोनोदयरविलिप्ता रविगति[लिप्ता]हृतास्तदहस्ततिः ।

[सदोदिततारकाः]

उदयरवेरस्तरविर्यदि भूयान्नास्तमेति तदिनो भम् ॥ २१ ॥

[क्रान्तिविषये विशेषः]

चरदलयोगे काष्ठा स्फुटापमादन्तरे ककुब् ज्ञेया ।

[अगस्त्यस्य दृश्यादृश्यकालः]

सिंहेऽक्षांशसमेऽर्के केषाञ्चिदगस्त्यमुन्युदयः ॥ २२ ॥

[मतान्तरम्]

[अन्येषां मतमेवं] पलभा द्विकृता[४२]हता हृता विशिखैः [५] ।
लब्धफलोनसंयुताः षडगा [७६] वसुनन्दकाः [९८] [क्रमशः] ॥ २३ ॥
[एतेन समे वाऽर्के]ऽदृग् दृश्यः स्फुटभास्वरो मुनिः ॥ २४ ॥

---

Text of Ms. A :

[21] अस्ताार्कोनोदपरविलिप्ता रविगतिलिप्ताहृतास्तदहस्ताताः
उदयरवेरस्तरवर्येदि भूयान्नास्तमेति तदिनो भम्

[22] चरदलयोगे काष्टा स्फुटायमादन्तरे ककुप्र् क्षेयात्
सिंहेक्षान्नसमेर्के केषांचिदगस्त्पमुन्पुदप

[Hereafter the ms. reads रवेरस्तरवेर्यदिभूपा which is repetition by oversight of the same matter occurring in 21 c.]

[23] पलभाद्विकृताहता हृता विशिखै-
र्लब्ध ‐‐ ‐नसंयुताः षडगा वसुनन्दकस्सदा

[24] दृग्दृश्यस्फुटभास्करो मुनिः

[ग्रहभानां छायादिकर्म]

**ग्रहभानां हिमकरवत् त्रिप्रश्नोक्तं प्रभादिकं कार्यम् ।**
**इह नोक्ता यास्तारा नानायत्नैश्च तास्साध्याः ॥ २५ ॥**

[भग्रहयुतिकालः]

**द्युसदां सङ्क्रमसमयः कैश्चिन्निरूपितो गणकैः ।**
**दृग्गणितैक्यं येषां स्फुटः स तेषां न तद्भेदः ॥ २६ ॥**

[सप्तर्षिचारः]

**नगदृग्[२७]गुणितैः वर्षैः कलेः शता[१००]प्तैर्भमाप्यते मुनिभिः ।**
**अथवा कलिगतवर्षैर्मनू[१४]नितैश्चापरेषां तैः ॥ २७ ॥**
**पूर्वो मरीचिरपरस्ततो वसिष्ठस्ततोऽङ्गिराश्चात्रिः ।**
**तदनु पुलस्त्यः पुलहः क्रतुरिह मुनयः क्रमेण ते [भुङ्क्ते ] ॥ २८ ॥**

[वसिष्ठपत्नी अरुन्धती]

**सूक्ष्मा वसिष्ठपत्नी जगज्जनित्री त्वरुन्धती साध्वी ।**
**यद्दर्शनेन मर्त्या विधूत[पापाः प्रयान्ति ग्रहलोके] ॥ २९ ॥**

---

Text of Ms. A :

[25] ग्रहभानां हिमकरवत्त्रिप्रश्नोक्तप्रभादिकं कार्यम् ।
इह नोक्ता यास्तारा नानायत्नैश्च तास्साध्या:

[26] द्युसदां संक्रमसमसमपः कैश्चिन्निऊपितौ गणकैः
दृग्गणितैक्यं येषां स्फुटस्स तेषा न तद्भेदः

[27] नगदृग्पुते वर्षैः कलेः शताप्तैर्भमाप्यते मुनिभिः
चेद्गरुवर्षैर्मनूनितेः चापरेषां तैः

[28] पूर्वे मरीचिरयरस्तवो वसिष्टस्ततोङ्गिराः चात्त्रिः ।
तदनु पुलस्त्पः पुलहः कतुरिति यु क्रमेण ते

[29] सूक्ष्मो वासिष्टयत्नी जगज्तनित्री त्वरुन्वती साध्वी
यद्दर्शनेन मर्त्पा विधूत — — — — — — —

[उपसंहारः]

[मध्यस्फुट]ग्रहगतयो त्रिप्रश्नग्रहणखेचराभ्युदयाः ।
चन्द्रोदयो ग्रहयुतिर्भग्रहयोगा विविधविकल्पयुताः ॥ ३० ॥
[विषया येऽस्मिन् ग्रन्थे प्रोक्तास्तान् पठेद् भक्तिपूर्वेण] ।
गणितगोलशास्त्रविद्यस्त पुनरवैति महोन्नतिं प्रदीप्तिम् ॥ ३१ ॥

भग्रहयुत्यादिविधिः द्वितीयः ।

इति श्रीमदानन्दपुरीयभट्टमहदत्तसुतवटेश्वरविरचिते स्वनामसंज्ञिते स्फुटसिद्धान्ते भट्टगोविंदावतारिते समागमाधिकारोऽष्टमः ॥ ८ ॥

समाप्तमिदं कालक्रियापट्टम् ।

---

Text of Ms. A :

[30] ---- ग्रेहगतो त्रिप्रश्नग्रहस्वेचरेम्पुदयाः
चंद्रोदयो ग्रहयुतिर्भग्रह्योगा　तिविविधिविकल्पयु -
[31] - स्मि -- ग्रा ------------ य
गणितगोलशास्त्रविद्यस्सयुनरवैति तरोनतं प्रदीयम् ॥　॥

ग्रहयुत्पादिविधिः द्वितीयः ॥　॥

श्रीमदानन्दयुरीयभट्टमहदत्तसुतवदेश्वरविरचिते स्वनामसंज्ञिते
भट्टगोविंदावतारिते समागमाधिकारोष्टमः ॥　॥

समाप्तेदं कालक्रियायट्टम् ॥　॥

Note-2 pages are blank before this.

# VAṬEŚVARA'S GOLA

Vaṭeśvara's *Gola* is found to oocur towards the end of Ms. A. The existing text, besides being incomplete (five chapters only being available), is found in disarranged fragments. The sequence of these fragments is as follows :

1. *Golapraśaṁsā* (complete in 7 vss.).
2. *Chedyakam* (vss 1 to 7).
3. *Golabandhaḥ* (vss. 17 to 28).
4. *Golavāsanā* (vss. 1 to 11).
5. *Chedyakam* (vss. 8 to 15).
6. *Golabandhaḥ* (vss. 1 to 13 and 14 to 16)
7. *Golavāsanā* (vss. 12 to 22).

The following two fragments occur between vss. 55 and 56 of Chapter IV of Govinda's Supplement to *Tripraśnādhikāra* of the *Vaṭeśvara-siddhānta* (occurring in Ms. A after Chapter VIII of the *Vaṭeśvara-siddhānta* but not included in the present edition) :

8. *Golavāsanā* (vss. 23 to 33).
9. *Bhagolaḥ* (vss. 1 to 12).

The existing text contains only the fragments of the following five chapters, the remaining chapters being lost :

*Golapraśaṁsā* (1), *Chedyakam* (2), *Golabandhaḥ* (3), *Golavāsanā* (4), and *Bhagolaḥ* (5).

In editing the text of Vaṭeśvara's *Gola*, attempt has been made to reconstruct these chapters by collecting together in proper sequence the various fragments of these chapters. Lalla's *Gola* has been of great help in doing this, as the arrangement of the chapters in Lalla's *Gola* and the sequence of the topics set out in those chapters have been closely followed by Vaṭeśvara. One who makes a comparative study of Vaṭeśvara's *Gola* and Lalla's *Gola* will be struck by the fact that the two works set out the same thing in practically the same sequence. Sometimes, the words used too are the same.

श्रीवटेश्वरविरचितं

# गोलम्

## 1. गोलप्रशंसा

[उपोद्घातः]

मध्याद्यशेषां ग्रहदिव्यचेष्टां गोलं विना सम्यगवैति नो ना ।
यस्मादतोऽभीष्टपदार्थवृत्त्या गोलप्रबन्धं विधिवद् विधास्ये ॥ १ ॥

[गोलप्रशंसा]

वक्षो विवक्षोरुहमङ्गनानां निशीथिनी नैव विना निशेशम् ।
पयोगुडाज्यानि विहाय भोज्यं तन्त्रं च गोलेन विना न किञ्चित् ॥ २ ॥[1]
धिग्वादिनं व्याकरणानभिज्ञं भिषग्वरं कर्मसु मुग्धबुद्धिम् ।
यज्वानमुच्चैरनधीतवेदं मौहूर्तिकं चादृतगोलखेदम् ॥ ३ ॥[2]
संख्यानवित् सम्यगवैति गोलं गोलार्थवित् खेचरचेष्टितज्ञः ।
संख्यानगोलस्थमतिर्न योऽसौ न वेत्ति चेष्टां द्युसदां कथञ्चित् ॥ ४ ॥[3]

---

Text of Ms. A:

[1] मध्पाद्यशेषो ग्रहदिव्पचेष्टां गोलं विना सम्पगयैति नो ना
यस्मादतोक्तिष्टपदार्गवृत्पा गोलप्रवन्ध्यं बिधिवद्विधास्पे ।

[2] वक्षोरिवक्षोरुहमङ्गनानां निशीथिनी नैव विना निशास्पाम् ।
ययोगुडाज्पानि विहाय भोज्पं । तन्त्रं च गोलेन विना न किंमित् ।

[3] घिग्वादिनं व्याकरणानभिज्ञं भिषग्वरं कर्मसु मुग्ववुद्धिम्
पज्वानमुश्चैरनधीतवैदं मौहुर्तिकं चाहृतगोलखेदम् ।

[4] संख्पानवित्सम्पगवैति गोलं गोलाथवित्खेचरचेष्टितज्ञः
संख्पानर्गोलस्तमतिर्न योसौ नवत्ति चेष्टां द्युसदां कथंवेत् ।

---

1. *Cf. LG* (=Lalla's *Gola*), i. 2. 2. *Cf. LG*, i. 3.
3. *Cf. BrSpSi* (=*Brāhma-sphuṭa-siddhānta*), xxii. 3; *LG*, i. 4.

अपरोक्षमिव प्रदर्शयेद्यो मध्यादिकभुक्तिकादिकम् ।
यत एव मतस्स मेधसामाचार्यः स्फुटगोलतत्त्ववित् ॥ ५ ॥[1]

[गोलात् किं ज्ञायते]

गोलको गम्यते ज्ञायतेऽस्मादितीत्थं बुधै-
र्गोलशब्दानुशास्तिर्निरुक्ता किमस्मात्पुनर्गम्यते खेचर-
क्ष्माभसंस्थानपूर्वं व्यालीकात्तु सत् तद्यथा —
पद्मनालादिषु स्नायुवेधादिभिर्वाऽथ वैद्या मखज्ञाश्च शु-
ष्केष्टिवेद्या मखादीनि वा रूपसर्गागम-
प्रत्ययाङ्गादिभिः साधुशब्दं च तज्ज्ञा विदन्त्येव साम्वत्सरा
वा धनुर्ज्येषुबाहुग्रकर्णावलम्बैश्चतु-
स्त्र्यश्रिवृत्तायतक्षेत्रसूत्रादिभिः संस्थितिं खेचरर्क्षश्रुतीः ॥ ६ ॥[2]

---

Text of Ms. A :

[5] अयरोक्षमितिप्तदर्शये यन्मध्पादिकमुक्तिमादित:
यत पव मतस्स्वमेधसामातार्यस्स्फुटगोलतत्त्ववित्

[6] गोयेर्गम्पते ज्ञायतेस्मादितीत्थं वुधै-
र्गोलशच्चानुशास्तिमिरुक्तात्किभस्मात्पुनर्गम्पस्वेतेचर: ।
क्ष्माभसंस्छातपूर्वं व्पलीकात्तस यथा
पद्मनालादियुस्नापवेद्यादिभिर्वैद्या: मखज्ञाश्चतु-
ष्केष्टिनिष्टामखादीनि खाभूपसर्गागम-
प्रत्पयाङ्गादिभिस्साधुशब्दं च तज्ज्ञा विदन्त्येवा सांवत्सरे
धनुर्ज्येष्टावाहुग्रकर्णावलस्वेश्चतु:
त्यश्रिवृत्तायतक्षेत्त्रसूत्रादिभिस्संस्छितेङ्क्षेचरर्क्षश्रुती

---

1. *Cf. BrSpSi*, xxii. 1.
2. This verse incorporates the ideas expressed in the following statement of the seventh century astronomer Bhāskara I :
गम्यते ज्ञायतेऽस्मादिति गोलम् । किं पुनरस्माद्गम्यते ? ग्रहभ्रमणसंस्थानादीनि सर्वम् । एवं परमार्थजिज्ञासवो ह्यसत्यपूर्वकं सत्यं प्रतिपद्यन्ते । तद्यथा–भिषजोऽप्युत्पलनालादिषु

[Continued on the next page]

[ग्रंथनिर्माणहेतुः]

न कृत्स्नवस्तुप्रतिपादनार्थिना प्रपद्यतुं तद्विन शक्यते यतः ।
खिलं न कश्चिद्विलिखेत् क्रियान्वितं ततोऽत्र [मे गोल]निबन्धनोद्यमः ॥ ७ ॥

इति गोलप्रशंसा ॥ १ ॥

---

Text of Ms. A :

[7] न कृत्स्नवस्तुप्रतियादनार्थिना प्रत्पपते तद्विन शक्यते य ।
खिलं न कश्चिद्विलिखेत्क्रियान्वितं ततोत्र दि¯गंतिछन्धनोद्यमः ॥

गोलप्रशंसा ॥ ॥

---

[continued from the previous page]

शिरावेधनादीनि प्रतिपद्यन्ते, यज्ञशास्त्रविदः शुष्केष्टचा यज्ञादीनि, वैयाकरणाः प्रकृतिप्रत्ययलोपागमवर्णविकारादिभिः साधुशब्दं प्रतिपद्यन्ते । एवमत्रापि साम्वत्सराः वृत्तशलाकासूत्रावलम्बादिभिः क्षेत्रगणितविशेषैः पारमार्थिकं गोलं प्रतिपद्यन्ते ।

See opening lines of Bhāskara I's com. on *Ā* (=*Āryabhaṭīya*), iv. Also see his com. on *Ā*, iii, 17, where he says :

[असत्यया क्रियया] नासत्यं प्रतिपाद्यते । यथा हि हृयुत्पलनालादिषु [शिरा]वेधनादीन्यभ्यस्यन्ते, नापिताः पिठरादिषु मुण्डनादीनि, यज्ञशास्त्रविदः शुष्केन्धनादिना यज्ञादीनि, शाब्दिकाः प्रकृतिप्रत्ययविकारागमवर्णलोपव्यत्ययादिभिः शब्दान् प्रतिजानते, एवमत्रापि मध्यममन्दोच्चशीघ्रोच्चतत्परिधिज्याकाष्ठादिषुभुजाकोटिकर्णादिव्यवहारेण साम्वत्सरा ग्रहाणां स्फुटगतिं प्रतिजानते ।

# 2. छेद्यकम्[1]

[ग्रहगतिपरिलेखविधिः]

गृहभागकलाङ्कितां हि स्वां कक्ष्यां व्यासदलादथालिखेत् ।
द्युसदां परिकल्पयेत् क्षमां तन्मध्ये नृमुखोद्धृतिक्षमाम् ॥ १ ॥[2]

ख[च]रान्त्यफलस्य शिञ्जिनीं भूकेन्द्रान्निजतुङ्गगामिनीम् ।
प्रवितत्य तदग्रकादलं कक्ष्यामण्डलमालिखेत् स्वकम् ॥ २ ॥[3]

प्रतिमण्डलमेतदीरितं वलयं केन्द्रभवं निरक्षजम् ।
अनुलोममिदं स्फुटग्रहः स्फुटभुक्त्या भ्रमति स्वमन्दतः ॥ ३ ॥[4]

शीघ्रात् प्रतिलोमसादितः कक्ष्यामण्डलचारतः क्रमात् ।[5]
नीचोच्चकवृत्तमालिखेत् केन्द्रं तस्य खगे विधीयते ॥ ४ ॥

---

Text of Ms. A :

[1] गृहभागकलंकितो लिस्वेत्कंक्ष्यां व्पासदलाद्यथा लिखेत्
द्युसदां परिकल्पयेक्षमां तन्मध्पे नृमुखोद्धृतिक्षमाम् ॥

[2] खरान्त्पफलस्प शिंजिनी भूकेन्द्रं निजभुजंगगामिनीम्
प्रवितत्ष तदग्रकादेलं कक्ष्यामण्टलमालिखैश्चलम् ।

[3] प्रतिमण्डलमेतदीरितं वलयं केन्द्रभवं निरस्पजम्
अनुलोममिदं स्फुटग्रहः स्फुटभुक्त्या भ्रमति स्वमन्दतः ।

[4] शीघ्राप्रतिलोमसादितः कक्ष्यामण्डलचारतः क्रमात्
नीचोञ्चावृत्तमालिखेर्केंद्रं तु खगे द्विधा यतः ।

---

1. This chapter has been reconstructed by collecting together two fragments of the chapter, the first consisting of the opening verses 1-7 and the second consisting of the closing verses 8-15 of this chapter.

2. *Cf. LG*, i. 7. 3. *Cf. LG*, i. 8. 4. *Cf. LG*, i. 12(a-b).

5. *Cf. LG*, i. 13(a-b).

[ग्रहगतिनिरूपणम्]

स्फुटखगो भ्रमति प्रतिलोमगस्त्विह निजोच्चगतश्च बृहद्गतिः ।
लघुगतिस्त्वनुलोमगतिर्यदा वलययोरुभयोः समयोजनः ॥ ५ ॥[1]

धाम्नि स्वतुङ्गसदृशो द्युचरो यदोच्चे नीचे तथैव भदलाभ्यधिके च मध्यः ।
दूरे क्षितेः निकटगः श्रुतिमानतोऽसौ सौक्ष्म्यं महत्त्वमत एव भवेद् ग्रहाणाम् ॥ ६ ॥[2]

मध्यमैव भवति स्फुटभुक्तिः खेचरे वलयसङ्गमुपेते ।
मध्यमः स्फुटसमः परमोच्चे मन्दनीचनिकटत्वमुपेते ॥ ७ ॥[3]

[Break][4]

[मन्दशीघ्रफले]

[स्पष्टखगं क्षयगं त्वधिकं वा पश्यति येन] नरोऽन्तरलिप्ताः ।
मन्दफलं त्वनयोः क्षयवृद्धी मध्यखगे चलजं विपरीतम् ॥ ८ ॥[5]

---

Text of Ms. A :

[5] स्फुटखगो भ्रमति प्रतिलोमगस्त्विह निजोश्चगतश्च वृहद्गतिः
लघुगतिस्त्वनुलोमगतिर्यथा वलययोरुभयोस्समयोजनः ॥

[6] धाम्रि खतुंगसदृशो द्युचरो यदोश्चे नीचै तथैव मदालाभ्यधिकेश्च मध्यः
दूरे क्षितेर्निकटगः श्रुतिमानतोसौ साक्ष्यं महत्त्वमत पव मतो ग्रहाणाम् ।

[7] मध्यैव भवति स्फुटभुक्तिः खेचरे वलयमंगमुयैति
मध्यमः स्फुटसमः परमोश्चे । सूनुमंच निकटत्वमुपेतः
पच्पते चरं निजमध्याह्ा

[8] मनोन्तरलिप्ताः
मन्दफलं त्वनयोः क्षयवृद्धी मध्यस्वगे चलजं विपरीतम् ।

---

1. *Cf. BrSpSi*, xxi. 25(c-d).
2. *Cf. LG*, i. 9(c-d)-11(a-b).
3. *Cf. LG*, i. 13(c-d)-14(a.b).
4. No verse seems to be missing here.
5. *Cf. LG*, i. 15.

[कर्णज्ञानम्]

**परमफलगुणादधः कुलीरादुपरि मृगादित एव कोटिजीवा ।**
**वियुतियुतिरतोऽग्रकाऽनयोस्तद्भुजगुणवर्गयुतेः पदं श्रुतिः स्यात् ॥ ९ ॥**[1]

**उपरि कोटिफलं त्रिगुणान्मृगाच्छशिगृहात्तदधः स्वमृणं ततः ।**
**त्रिभगुणे क्रियते ग्रहकोटिजं भुजफलाग्रकयोः श्रुतिरुक्तवत् ॥ १० ॥**[2]

[शीघ्रफलानयने कर्णानुपातः]

**कक्ष्यावृत्ते दोःफलं चेत् त्रिमौर्व्या किं कर्णेन स्यात्तिरस्योऽनुपातः**[1] **।**
**व्यस्तो यस्माद् भूरिकर्णे लघीयान् स्वल्पे नाल्पं शीघ्रमेवं फलं स्यात् ॥ ११ ॥**[3]

[मन्दकर्मणि कर्णानुपातः किं न क्रियते]

**मन्दकर्मवदिह स्फुटता स्यात् तद्ग्रहादपि जवं यत इत्थम् ।**
**खेचरैक्यमसकृच्छ्रुतितो वा नो सकृच्छ्रुतिविधानमतोऽस्मिन् ॥ १२ ॥**

**खेचरोऽधिकजवो मृदुतुङ्गात्तत्स्फुटोक्तिरत एव यथादौ ।**
**खेचरैक्यमपि निश्चयमस्मिंस्तेन कर्णविधिना न फलोक्तिः ॥ १३ ॥**

---

Text of Ms. A :

[9] परमफलगुणादध कुलीग उपरि मृगादत पव कोटिजीवा
वियुतियुतिरतोग्रकारयोस्तदभुजवर्गगुणयुतिः यदं श्रुतिः स्पात् ।

[10] उपरि कोटिफलं त्रिगुणान्मृगा छशिगृहानुदधत् खमृणं ततः
त्रिभगुणं क्रियते ग्रहकोये भुजफलाग्रकयोः श्रुतिभक्तवत् ।

[11] कक्ष्यावृत्ते दोःफलं चेत्त्रिमौर्व्या किं कर्णेन स्पात्तिरस्योनुयात
व्यस्तो यस्माद् भूमिकर्णो लघीयान् स्वल्पे नाल्यं शीघ्रमेव फलं स्पात् ।

[12] मक्ष कर्मवदिहैव स्फुटताश्च्चैतद्ग्रहादधिजवं यत इत्थम् ।
खेचरैक्यमसकृछ्रुतितो वा छकृनिशश्रुतिविधानमतोस्मिन् ।

[13] स्वचेरोदधौ जीवो मृदुतुङ्गात्वत्स्फुटोक्विरत पवमार्दौ
खेचरैक्यमयिनिस्चलमस्मिंस्तेन कर्णविधाना न फलोक्तिः ।

---

1. *Cf. LG*, i. 16. 2. *Cf. LG*, i. 17.
3. स्यात्तिरस्योऽनुपातः = स्यात् + तिरस् + यः + अनुपातः

असकृदुच्चतोऽस्य यत्फलं व्यस्तं तद्द्युचरे विधीयते ।
मृदुकर्मणि कुग्रहान्तरं कर्णः स्यादविशेषतो यतः ॥ १४ ॥

भूग्रहान्तरमिहोच्यते श्रुतिः कर्णमध्यखगयोर्यदन्तरम् ।
तत्फलं दिविचरे पुरःस्थिते मध्यमे [ध]नमृणं च पृष्ठतः ॥ १५ ॥[1]

इति छेद्यकम् ॥ २ ॥

---

Text of Ms.A :

[14] असकृदुच्चमतोस्प यत्फलं व्यस्तस्तद्युवेरे विधीयते
मृदुकर्मणि कुगृहान्तरं कर्णस्स्पादविशेषतो यतः

[15] भूगृहान्तरमिहोप्पते श्रुतिः कर्णमत्र खगयोर्यदन्तरम्
तत्फलं दिविवरः पुनश्श्रतिमध्पमेनमृणं च पृष्टतः ॥ ॥

छेद्यकम् ॥ ॥

---

1. *Cf. LG*, i. 18(a-b).

# 3. गोलबन्धः[1]

[ खगोलबन्धः ]

ऊर्ध्वमधोऽपरपूर्वमिहाद्यं प्राहुरिदं सममण्डलमन्यत् ।
तद्वदिहोत्तरदक्षिणदिक्स्थं वृत्तयुगं विदिशोरपि तद्वत् ॥ १ ॥[2]

आवेष्टमानमथ तानि दलप्रवृत्या यद्वृत्तमत्र हरिजं क्षितिजं तदाहुः ।
यस्मिन् भवेत् समुदयोऽस्तमयोऽखिलानां प्राच्यां क्रमादपरदिश्युडुखेचराणाम् ॥ २ ॥[3]

पूर्वापरक्षितिजसङ्गमयोर्गतञ्च याम्यादधः पललवैः क्षितिजाद्विलग्नम् ।
सौम्यादथोपरि समध्रुवमार्गसंस्थमुन्मण्डलं दिननिशोः क्षयवृद्धिकृत्तत् ॥ ३ ॥[4]

ऊर्ध्वाधरं ग्रहसमाभिमुखं च यत्तद् दृङ्मण्डलं त्रिगृहहीनविलग्न[ल]ग्नम् ।
दृक्क्षेपवृत्तमपि तद्वदमूनि चाष्टौ भांशाङ्कितानि वलयानि खगोलबन्धे ॥ ४ ॥

इति खगोलबन्धः ।

---

Text of Ms. A :

[1] ऊर्ध्वमधोपरपूर्वमिहाद्यं प्राहुरिदं सममण्डलमन्पत् ।
तद्वदिहोत्तरदक्षिणदिक्स्थं वृत्तयुगं त्रिदिशोरपि तद्वत् ।

[2] आवेष्टभानमथ भानि दलप्रवृत्पा पद्वत्तंमत्र हेरिजं क्षितिजं तदाहुः
यस्मिन्भवे समुदयोस्तमयोखिलानां प्राव्यां क्रमादपरदिश्पुडुखेचराणाम् ।

[3] यूर्वापरं क्षितिजसङ्गतमागतं व व्याय्पधः यललवैः क्षितिजाद्विलग्नम्
सौम्पादथोपरि समध्रुवमार्गसंस्थमुन्मण्डलं दिननिशोः क्षयनृद्धिकृत्तत् ॥

[4] ऊर्ध्वाधरं ग्रहसमासिमुखं च पत्तद् दृङ्मण्डलं त्रिगृहहीनंविलग्नग्नम्
दृक्षेयेवृनमयि तद्वदमूनि वाष्टौ भांशंकितानि वलयानि खगोलवन्धे ॥ ॥

खगोलछन्धः ॥ ॥

---

1. This chapter has been reconstructed by collecting together three fragments of the chapter, the first consisting of the opening verses 1-13, the second consisting of the central verses 14-16, and the third consisting of the closing verses 17-28.

2. *Cf. LG*, ii. 1. 3. *Cf. LG*, ii. 2. 4. *Cf. LG*, ii. 3.

[ भगोलबन्धः ]

खस्वस्तिकाद् दक्षिणतोऽक्षभागैः पाता[ल]संज्ञाच्च तथोत्तरेण ।
नाड्यङ्कितं वैषुवतं तदुक्तं वृत्तं भगोलस्य खगोलमध्ये ॥ ५ ॥[1]

याम्योत्तरं वृत्तमिहान्यदेतद्विवेष्टमानं कुजवत् समन्तात् ।
तद्दक्षिणोदग्ध्रुवयोर्निबद्धा यष्टिर्ध्रुवा भूश्च भगोलमध्ये ॥ ६ ॥[2]

नाड्याह्ववृत्तेऽजतुलादिलग्नं जिनांशकैर्दक्षिणतो मृगादौ ।
सौम्ये [तथा] शीत[गु]मन्दिरादावपक्रमाख्यं तदुशन्ति वृत्तम् ॥ ७ ॥[3]

भ्रमत्यजस्रं रविरत्र वृत्ते भूभा भखण्डे [दिननाथराशेः] ।
पाता ग्रहाणां च विलोमगत्या विमण्डले स्वे मृगलाञ्छनाद्याः ॥ ८ ॥[4]

विम[ण्ड]लार्धं निजपातसङ्गादुदक् स्वविक्षेपलवैर्द्वितीयम् ।
सभार्धपाताच्च विमण्डलार्धं विक्षेपभागैर्दिशि दक्षिणस्याम् ॥ ९ ॥[5]

---

Text of Ms. A :

[5] खस्वस्तिकाद्दक्षिणतोक्षभागैः यातासङ्गाच्च तथोत्तरेण
नाद्यंकितं वैषुवतं तदुक्तं वृत्तं भागोलस्य खगोलमध्ये

[6] यस्योत्तरं तदिहान्यद्विवेष्टमानं कुजवत्समन्तात्
तद्दक्षिणोदग्ध्रुवयोर्निवद्धा यष्टिध्रुवौ भूश्च भागोलमध्ये

[7] नाड्याह्ववृत्तेजतुलादिलग्रं निजांशकैर्दक्षिणतो दृगादौ ।
सौम्ये शीतमन्दिरादा कदाक्रमाख्यं तदुशन्ति वृत्तम्

[8] क्रमत्यजस्रं रविरत्र वृत्ते तूभागेखण्डे
वाताग्रहाणां च विलोमगत्यौ विमण्डलानां मृगलाञ्छनाद्याः

[9] विमलार्धं निजयातसङ्गादुदक्स्वविक्षेपलवैर्द्वितीवयम्
सभावयाताच्च विमण्डलार्धं विक्षेपभागैर्दिशि दक्षिणस्याम्

---

1. *Cf. LG*, ii. 5. 2. *Cf. LG*, ii. 6. 3. *Cf. LG*, ii. 7.
4. *Cf. LG*, ii. 8. 5. *Cf. LG*, ii. 9.

नाडीवृत्तात् क्रान्तिभागैरजादौ भान्तद्युज्यामण्डलानां त्रयं स्यात् ।
कर्क्यादौ वा व्यस्तमेवं तुलादौ षण्णामिष्टैः क्रान्तिभागैर्यथेष्टम् ॥ १० ॥[1]

इति भगोलबन्धः ।

[ग्रहगोलबन्धः]

कक्ष्यावृत्तं नाडिकावृत्तगत्या देयं तद्वद्याम्यसौम्यं तथाऽन्यत् ।
भूजस्थित्या क्रान्तिवृत्तं च तद्वत् तस्मिन्केन्द्रे स्वोच्चनीचे यथोक्त्या ॥ ११ ॥[2]

मन्दकेन्द्रवलयानि हि सप्त स्वोच्चनीचवलयानि हि शीघ्रात् ।
मण्डलानि दश शीघ्रजवोक्त्या गोलसंस्थि[ति]रिह द्युचराणाम् ॥ १२ ॥[3]

उन्मण्डले लग्नमपक्रमाग्रे पूर्वापरे दक्षिणसौम्यवृत्ते ।
नतांशकैस्तद्भ्रम[वृ]त्तमुक्तं व्योमौकसां व्यस्तमतः प्रभा स्यात् ॥ १३ ॥[4]

[इति ग्रहगोलबन्धः]

[Break][5]

---

Text of Ms. A :

[10] नाडीवृत्ते क्रान्तिभागैरजादौ भान्तद्युज्या मण्डलानां त्रयं स्यात्
कर्क्यादौ व्यस्तमेवं तुलादौ षण्णामिष्टैः क्रान्तिभागैर्यथेष्टम् ॥ ॥

भगोलवन्धः ॥ ॥

[11] कक्ष्यावृत्तं नाडिकावृत्तगत्या देयं तद्वद्याम्पासौम्पं तथोन्पत्
भूजस्थित्पा क्रान्तिवृत्तं च तद्वत् तस्मिन्केन्द्रे स्वांश्चनीचे यथोक्त्या ।

[12] मन्दकेन्द्रवलयानि हि सप्त स्वोच्चनीचवलयानि हि शीघ्रात्
मण्डलानि दश शीघ्रजवोक्त्या गोलसंस्थिरिह् युचराणाम् ।

[13] तन्मण्डलोलग्नपराक्रमाग्रे पूर्वापरं दक्षिणसौम्पवृत्तौ
नतांशकैस्तद्भ्रमत्तमुत्कं व्योमौकसां व्पस्तमतः प्रभायाः

---

1. *Cf. LG*, ii. 10-11. 2. *Cf. LG*, ii. 12-13. 3. *Cf. LG*, ii. 14.
4. *Cf. LG*, ii. 15. 5. No verse seems to be missing here.

[सामान्यगोलबन्धः]

हरिजे परपूर्वमण्डलद्युज्यावृत्तविशेषशिञ्जिनी ।
उदयाग्रगुणो द्युमण्डले भूज्योद्वृत्तकुजान्तरांशजीवा ॥ १४ ॥[1]

व्यासार्धवृत्तेऽन्तरमेतयोः स्याच्चरार्धजीवा परपूर्वयोस्तत् ।
अग्राग्रयोर्यद् हरिजे निबद्धं सूत्रं ग्रहाणामुदयास्तसंज्ञम् ॥ १५ ॥[2]

प्राच्यां कुजापक्रमवृत्तसङ्गं प्राग्लग्नमाहुः [परतोऽस्तलग्नम्] ।[3]
[लग्नाद्भवेत्] स[प्त]म[रा]शि[र]स्ते तस्या[स्त]कालोऽभ्युदयोऽस्य भूयात् ॥ १६ ॥

[Break][4]

दिग्वृत्ते[5] समदिग्विदिग्जवलये दृक्क्षेपवृत्ते तथा
याम्योदग्वलये खमध्यगखगक्षोणीजयोरन्तरम् ।
भागा उन्नतसंज्ञिता नतलवाः तत्खाङ्कभागान्तरं
सर्वत्रैव नराः समुन्नतगुणा दृग्ज्या नतज्याः क्रमात् ॥ १७ ॥[6]

---

Text of Ms. A :

[14] हरिजे परपूर्वमण्डलद्युज्पावृत्तविशेषशिञ्जिनी
उदयाग्रगुणो द्युमण्डले भूयोद्वृत्तकुजांशभापज्पा ।

[15] व्यासार्धवृत्तेन्तरसेतयोस्स्पाच्चरार्धजीवा यरपूर्वयोस्तत् ।
अग्राग्रयोर्ज्ये हरिजनिछद्धं सूत्रं ग्रहाणामुदपास्तसंज्ञम् ॥

[16] प्राव्यां कुजापक्रमवृत्तसङ्गं प्राग्लग्नमाहुः ।
दिग्वृत्ते समशिस्ते तास्यकालोम्पुदयोस्प भूयात् ।

[17] दिग्विदिग्जवलये दृक्क्षेपवृत्ते तथा
याम्पोदग्वलये यमाह्वयक्षोणोजयोरन्तरम्
भागा उन्नतसंज्ञिता नतलयाः खक्रान्तियद्वान्तर
सवत्रैव नरास्समुन्नते गुणा दृग्ज्पा नतज्पाः क्रमात् ।

---

1. *Cf. LG*, ii. 18-19(a-b). 2. *Cf. LG*, ii. 19(c-d). 3. *Cf. LG*, ii. 20.
4. No verse seems to be missing here.
5. Transposed from 16 c. See ms. reading of 16 c.
6. *Cf. LG*, ii. 21-23.

विषुवद्दिवसे द्युमध्यजे नरदृग्ज्ये अवलम्बकाक्षजे ।[1]
अवनौ विवरं नराग्रकं नृतलास्तोदयसूत्रयोर्भवेत् ॥ १८ ॥

नृमस्तकास्तोदयसूत्रमध्ये धृतिः स्वतच्छन्दविशेषिता स्यात् ।
नृदृग्गुणौ कोटिभुजौ तु यस्य त्रिज्या श्रुतिः क्षेत्रमथायतं तत् ॥ १९ ॥

नृतलनृप्रमिते भुजकोटिके धृतिमितश्श्रवणोऽपरमायतम् ।
समनृकोट्युदयाग्रभुजं तथा स्वधृतिकर्णमथापरमायतम् ॥ २० ॥

कुज्यापमज्यामितबाहुकोटिग्रहोदयाग्राश्रुतिकं तथाऽन्यत् ।
क्रान्तिद्युजीवाभुजकोटिकं यत् क्षेत्रं त्रिभज्याश्रवणं वदन्ति ॥ २१ ॥

कुज्या भुजाऽस्तोदयसूत्रभेदो नरो द्युजीवा श्रवणोऽपरञ्च ।
अग्रा भुजाऽस्तोदयसूत्रखण्डं शङ्कुस्त्रिभज्या श्रवणोऽपरञ्च ॥ २२ ॥

---

Text of Ms. A :

[18] विषुवद्दिवसे द्युमध्पजे नरदृग्ज्पे अवलम्छकाक्षजे
अवनो विचरं नरोग्रकं नृतलास्तोदयसूत्रयोर्भवेत् ।

[19] नृमस्तकास्तोदयस्नत्रमध्ये धृतिस्वतछन्दविशेषिता स्पाच
नृदृग्गुणो कोटिभुजौ नु यस्प त्रिज्पा श्रुतिक्षेत्त्रमथायतं तत् ।

[20] नृतलनृप्रतिते भुजकोटिके धृतियितश्श्रवणो यरमायतम्
समनृकोभ्पुदयाग्रगुणं तथा स्वधृतिकर्णमथापरमायतम् ।

[21] कुज्पायमज्पायिते छाहुकोटि ग्रहोदयाग्राश्रुतिकं थथान्पत् ।
क्रान्तिद्युजीवाभुजकोटि चान्प क्षेत्त्रं त्रिभज्पाश्रवणं वदन्ति ।

[22] कुज्पा भूजास्तोदपमूत्रभेदा नरद्युजीवाश्रवणो यरं लं च
अग्रा भुजास्तोदयस्ततखण्डशंकुस्त्रिभज्पा श्रवणो यरं च ।

---

1. *Cf. LG*, ii. 24.

भाभुजं नृमितकोटिकमन्यत् भाश्रुतिप्रमितकर्णकमन्यत् ।
एवमत्र शतशः परिकल्प्यो गोलज्ञानविमलीकृतधीभिः ॥ २३ ॥

दृग्ज्यामध्यगुणौ भुजौ लघुमहद्भूखण्डयोगो मही
स्वाबाधे स्वभुजे तथा प्रगदिते दृक्क्षेपको लम्बकः ।
दृक्क्षेपोऽवनतिर्बृहत्कुश[क]लं पूर्वापरं लम्बनं
दृक्क्षेपो हरिजे महत्कुशकलं खस्वस्तिकाद् भूदलम् ॥ २४ ॥

द्युज्या नरोऽपक्रमभागजीवा लङ्कागतानां द्युदलार्कदृग्ज्या ।
सुरासुराणां द्युगुणोऽत्र दृग्ज्या क्रान्त्यंशजीवा कथिता च शङ्कुः ॥ २५ ॥[1]

[इति सामान्यगोलबन्धः]

[ग्रहभानां स्थिरवृत्तानि]

याम्योत्तरं प्रागपरं महीजमुन्मण्डलं वैषुवतं च वृत्तम् ।
स्थिराणि भानां द्युसदाममूनि पञ्च स्वकक्ष्यामितसंस्थितानि ॥ २६ ॥[2]

---

Text of Ms. A :

[23] भाभुजं नृमितिकोटिकमन्पत् स्वं श्रुतिप्रमितकर्णकमल्पम् ।
एवमत्र शतशो प्रविकल्प्पो गोलकोलममलोकधियोश्वैः

[24] दृग्ज्ज्यामध्पगुणौ भुजौ लघुमहद्भूखण्डयोगे मही
स्वोवाधे स्वलुते यथा प्रगदिते दृकेयको लम्छकः
दृक्षेयौवनतिवृंहत्कुशलं पूर्वापरं लम्छंनं
दृक्षेपो हरिजे महत्कुशकलो स्कस्वस्तिकामूतलम् ।

[25] द्युज्पा नरोपक्रमभागजीवा लंकागतां घुलादस्तदृग्ज्पा
सुरासुराणां द्युगणेत्र दिग्ज्पा क्रान्त्पंशजीवा कथिताश्च शङ्कु

[26] याम्पोतुरं प्रागपरं महीजं मुन्मण्डलं वैषुवतं व वृत्तम्
स्थिराणि भानां द्युसदांमनूनि यञ्च स्वकक्ष्पामितसस्मितानि

---

1. *Cf. LG*, ii. 28.　　2. *Cf. LG*, ii. 30.

[ग्रहाणामस्थिरवृत्तानि]

**स्वमन्दनीचोच्च[क]मण्डलानि सप्तोच्चवृत्तानि च पञ्च शीघ्रात् ।**
**तावन्ति चैषां प्रतिमण्डलानि दृक्क्षेपदृक्क्रान्ति[जमण्डलानि] ।। २७ ।।**
**प्रत्येकमुष्णांशुमुखग्रहाणां [षट्सम्मितान्येव विमण्डलानि] ।**
**पञ्चाशदेवं कथिता सरूपा दिवौकसामस्थिरमण्डलानाम् ।। २८ ।।[1]**

**इति गोलबन्धः ।। ३ ।।**

---

Text of Ms. A :

[27] स्वमन्दनीचोश्चमण्डलानि सप्ताश्चवृत्तानि च पञ्च शीघ्रात्
तावन्ति चैषां प्रतिमण्डल्पनि दृक्षेयदृक्क्रान्ति

[28] प्रत्पेकं मुष्णोशुमुखग्रहाणाम् ।
पञ्वादशदेवं करिता सरूपा दिवौकसामम्छरमण्डलानाम् ।

मोलबन्धः ।। ।।

---

1. *Cf. LG*, ii. 31-32.

# 4. गोलवासना[1]

[ मध्यगतिवासना ]

सूर्यभुक्तिकलिकासमासुभिः सावनो भदिवसाद्यतोऽधिकः ।
तेन सूर्यपरिवर्तसावना भोदयाः स्युरिनप[र्य]यैर्युताः ॥ १ ॥[2]

नाडिकाभिरिभबाहु[२८]भिर्यतो दिक्[१०]पलैस्समधिकाभिरूनिते ।
मासि सावन इनेन्दुसङ्गमो दृश्यतेऽणधरमासकश्च सः ॥ २ ॥[3]

धृति[१८]पलाधिकषड्भुज[२६]नाडिकाभ्यधिकसावनमासि रवेर्यतः ।
विधुभवादधिकोऽयमतोऽर्कजैः षडगनन्द[९७६]दिनैरधिमासकः ॥ ३ ॥[4]

अत एव खरांशुमासका अधिमासैः सहिताः क्षपाकृतः ।
तिथयश्च कुवासरोनितास्तिथिनाशा अनया दिशाऽपरम् ॥ ४ ॥[5]

Text of Ms. A :

[1] सूर्यभुक्तिकलिकासमासुभिः सावनो भदिवसाद्यतोधिकः
तेन सूर्यपरिवर्तसावना भदियास्स्पुरिनपर्यैर्युताः ।

[2] नाडिकाभिरिभवाहुभिर्यतो दिक्पलैस्समधिकाभिरुनितै
मासि सावनमिनेन्दुसङ्गमो दर्शनेनधरमासकश्च सः ।

[3] धृतिपलाधिकषड्भुजनाडिकाभ्पधिकसावनमासि रवेयतः
विधुभवादधिकोपमतोर्कजैः षडगनन्ददिनैरधिमासकः

[4] अत एव खरांशुमासका अधिकाः क्षयाकृतः
तिथयास्पो कुवासरोनितास्तिथिनाशादनयोर्दिशापरम् ।

1. This chapter has been reconstructed by collecting together in proper order three fragments of the chapter, the first consisting of the opening verses 1-11, the second consisting of the central verses 12-22, and the third consisting of the closing verses 23-33.

2. *Cf. LG*, iii. 1.  3. *Cf. LG*, iii. 2.  4. *Cf. LG*, iii. 3-4.

5. *Cf. LG*, iii. 5.

[देशान्तरादिफलवासना]

प्राक्प्रागुदेति द्यु[मणिः कु]मध्यात् पश्चाच्च पश्चात्फलमप्यतोऽस्मात् ।
ग्रहे क्षयः स्वं क्रियतेऽत एव उक्तो ध्रुवक्षिप्तिरिहाद्यकालात् ॥ ५ ॥[1]

मध्यमात् फुटरवेस्समुद्गमः प्रागृणे [र]विफलासुभिर्यतः ।
स्वे चिरात्तदनुपातजं फलं खेचरेष्वृणमतो धनं भवेत् ॥ ६ ॥[2]

अपक्रमोन्मण्डलयोर्निबद्धौ यतः खरांशोरुदयास्तकालौ ।
नतोन्नतेऽस्मिन् ध्रुवयष्टिसङ्गादुन्मण्डले तच्चरखण्डकर्म ॥ ७ ॥[3]

उन्मण्डलादुदगधः क्षितिजं तदूर्ध्वं याम्ये उदग्गत इनः प्रथमं चरेण ।
दृष्टिं समेत्य चिरमस्तमुपैति याम्ये पश्चादुदेति विवरासुभिरेतयोश्च ॥ ८ ॥[4]
निजभुक्त्यनुपाततः फलं क्षयवृद्ध्याह्वमतो दिवौकसाम् ।
अत एव दिनक्षपार्धयोर्बृहदल्पत्वमणूरुता क्रमात् ॥ ९ ॥[5]

---

Text of Ms. A :

[5] प्राक्प्रागुदेति द्युमध्यात्पश्चाच्च पश्चात्फलमप्यतोस्मात
ग्रहे क्षयस्सं क्रिपतेत एव नक्तो द्युवादिरिहाद्यकालात् ।

[6] मध्पमात्स्फुटरवेस्समुद्म प्राग्गृहे निकलासुमिर्यतः
स्वे चिरात्तदनुपातजं फलं खेघरेष्वृणमतो धनं भवेत्

[7] अपक्रमोन्मण्डलयोनिर्वद्धौ यतः खरांशोरुदयास्तकालौ
नतोन्नतेस्मिध्रुवपष्ठिसङ्गादुन्मण्डलं तच्चरखण्डकर्म ।

[8] तत्मण्डलादुदगधः क्षितिजात्तदूर्ध्वं याम्पोन्नतः इनः प्रथमचिरेण ।
अस्तं समेत्प चिरमस्तमुपैति याम्पे पश्चादुदेति विवरासुभिरेतपोश्च

[9] निजभुक्त्यनुपाततः फलं क्षपवृद्ध्याह्वमतो दिवौकसाम्
अत पव दिनक्षयार्धयोर्बृहदल्पत्वमनूरुता क्रमात्

---

1. *Cf. LG*, iii. 6. 2. *Cf. LG*, iii. 7. 3. *Cf. LG*, iii. 8.
4. *Cf. LG*, iii. 9-10(a-b). 5. *Cf. LG*, iii. 10(c-d)-11.

उन्मण्डलमेव भूमिजं लङ्कायां चरकर्म नास्त्यतः ।
तुल्यत्वमहर्निशोस्ततः[1]

[लङ्कोदयानां ऊनाधिकत्ववासना]

तस्यामक्षलवेष्वसत्स्वपि ॥ १० ॥

तिर्यक्स्थितौ मेषवृषौ स्वकीयक्रान्त्या यतोऽल्पाभ्युदयौ ततस्तौ ।
क्रान्तेर्लघुत्वेऽपि पदान्तकं [भं कालेन दीर्घेण ऋजुस्थितत्वात्] ॥ ११ ॥[2]

[Break][3]

[स्वदेशोदयानां ऊनाधिकत्ववासना]

प्रथमान्त्यभचक्रपादयोश्चरखण्डोनदिनाङि[प्र]नोदयः ।
द्वितृतीयकयोश्च तद्युजाद् विषये साक्षगुणे क्रमोत्क्रमात् ॥ १२ ॥[4]

मकरादुदगायतं कुलीरात् प्रागायतं षट्कमस्मात् ।
अह्नि भपञ्जरभ्रमणात् [विर]स्वल्पसमुद्गमो [भानाम्] ॥ १३ ॥[5]

---

Text of Ms. A :

[10] तन्मण्डलमेत्र भूमिजं लङ्कायां चरकर्म नास्त्पतः ।
तुल्पत्वमहर्निशोस्ततः तस्पामलक्षवेष्वसत्स्वपि ।

[11] तिर्यक्स्थितौ मेषवृषौ स्वकीयक्रान्त्पा पतोल्पाभ्युदयौ ततस्तौ
क्रान्तिर्लघुत्वदृजुरन्त्पराल्पग

[12] प्रथमाल्पभचक्रयादयोश्चरखण्डोनदिनाङिनोदयः
द्वितृतीयकपोश्वतयुजाद् विषपे साक्षगुणे क्रमात्क्रमात्

[13] मकरादुदगायतः कुलीनात्स्पात्प्रगायतषट्कमस्मात्
यलनिमुभयंजरभ्रनणस्वल्पसंमुद्गतस्तत्

---

1. *Cf. LG*, iii. 12.　2. *Cf. LG*, iii. 13-14.　3. No verse seems to be missing here.　4. *Cf. LG*, iii. 15.　5. *Cf. LG*, iii. 16.

[भानामुदयास्तमयवासना]

तेऽभ्युदयन्त्युदगायतमूर्त्या येऽस्तमयन्त्यपरायतदेहाः ।
प्रागपरायतवृत्त्युदयानामस्तमयो ह्युदगायतकानाम् ॥ १४ ॥[1]

स्वचरार्धोनसंयुताः प्राक्कुजे ये समुदयन्ति तेऽपरे ।
तेन युतोनात् क्रमात् पुनर्भूमिजेऽस्तमुपयान्ति राशयः ॥ १५ ॥[2]

[भानां दृश्यादृश्यवासना]

लङ्कोदयो यस्य चरार्धतुल्यो राशिस्स तस्मिन्नियमेन दृश्यः ।[3]
तुल्योऽपमागात् सततोदितस्य गृहस्य दृश्यो न स राशिरस्मिन् ॥ १६ ॥[4]

यस्मिन् पलांशा रसकोश[६६]तुल्या न तत्र दृश्यो मकरो धनुश्च ।
पले शरागांश[७५°]मिते ह्यदृश्याः कुम्भालिसप्ताङ्गमृगाः सदैव ॥ १७ ॥[5]

क्रान्त्यंशघ्नं वृत्तमुर्व्या विभक्तं भांशैराप्तं खेचराभ्युद्गमः स्यात् ।
याम्ये सौम्ये योजनैर्याम्यसौम्यैः भान्ते भान्ताभ्युद्गमो भूजवृत्ते ॥ १८ ॥[6]

Text of Ms. A :

[14] तेभ्युदयान्त्युदगायतमूर्त्या येस्तमयान्त्यपरायतदेहाः
प्रागुदगायतवृत्त्युदयानामस्तमयोह्युदगायतकानाम् ।

[15] ये स्ववार्धोनसंयुताः । प्रात्कुजे समुदयन्ति ते यरे
तोन युतोनात्क्रमात्पुनर्भूमिजेस्तमुपयान्ति राशयः ।

[16] लङ्कोदयो यस्य चरार्धतुल्पो राशिस्स तस्मिन्नियमेन दृश्पः
तुल्पोयमार्गात्सततोदितस्प गृहस्प दृश्पो न स राशिरस्मिन्

[17] मस्मित्पलाशा रसकोशतुल्पा न तत्र दृश्पो मकरो धनुश्च ।
पले शरागांशमितेह्यदृश्पाः कुम्भालिसप्ताङ्गमृगास्सदैव

[18] क्रान्त्पंशघ्नं वृत्तमुर्व्या विभक्तं भासैराप्तं स्वेचराभ्युद्गमस्स्पात्
याम्पस्सौम्पे योजनैर्याम्पसौम्पैः मान्ते भान्ताम्युद्गमो भुजे वृत्ते ।

1 *Cf. LG*, iii. 17. 2. *Cf. LG*, iii. 18. 3. *Cf. LG*, iii. 19.
4. *Cf. LG*, iii. 21. 5. *Cf. LG*, iii. 20. 6. *Cf. LG*, iii. 22.

